# ṚG-BHĀṢYA-SAṄGRAHA

*(A Handbook of Ṛgvedic Hymns)*

*Edited by*

**DEV RAJ CHANANA**

Reader in Sanskrit

INSTITUTE FOR POST GRADUATE

(Evening) STUDIES

UNIVERSITY OF DELHI.



MUNSHI RAM MANOHAR LAL

ORIENTAL BOOKSELLERS & PUBLISHERS

P. BOX 1165, NAI SARAK,

DELHI-6.

# ऋग्भाष्यसङ्ग्रह:

सम्पादक
देवराज चानना
रीडर, संस्कृत विभाग
इन्स्टिट्यूट फ़ार पोस्ट ग्रैजुएट (ईव.) स्टडीज़
दिल्ली विश्वविद्यालय।



मुन्शीराम मनोहरलाल, देहली—६

# विषय-सूची

---

## संकेत

Grif—ग्रिफिथ-कृत ऋग्वेद का अंग्रेजी अनुवाद।

MM.—मैक्स मूलर कृत ऋक्सूक्तों का अनुवाद।

Old.—ओल्डनबर्ग कृत ऋक्सूक्तों का अनुवाद।

Pet.—पीटर्सन कृत ऋक्सूक्तों का अनुवाद।

Ren.—प्रो. लुई रनू कृत ऋक्सूक्तों का अनुवाद।

---

Dr. Narendia Nath Chaudhuri,
M. A, D. Litt.,
*Professor & Head, Deptt. of Sanskrit*
*Dean, Faculty of Arts,*
*University of Delhi.*

6-C, Maurice Nagar,
DELHI—6.
Date : 14. 8. 1961.

---

# मुखबन्धः

श्रीदेवराजेन कृतोऽयम् ऋग्भाष्यसङ्ग्रहः स्थालीपुलाकन्यायेन मया यथावसरं क्वचित् क्वचिदवलोकितः। अस्मिन् भारते वर्षे संहितानां ब्राह्मणानाम् आरण्यकानाम् उपनिषदाञ्च विद्यते महद् वैशिष्ट्यम्। संस्कृतपाठशालासु महाविद्यालयेषु च वेदस्य अध्ययनमध्यापनञ्च साग्रहं भवति। वेदग्रन्थानां मुद्रणं पूर्वं प्रतीच्यैर्विद्वद्भिरेव कृतम्। ततः परं प्राच्यैरपि कार्यमेतत् समारब्धम्। अद्यापि ऋग्वेदस्य कश्चिद् अनवद्यः सारसङ्ग्रहो न प्राप्यते। अस्याभावस्य दूरीकरणम् अत्यावश्यकम् आसीत्। अस्मिन् ग्रन्थे मन्त्राणां पदपाठानां भाष्याणाञ्च सम्यक् समावेशो वर्त्तते। अस्माकं देशे ऋग्वेदस्य ये सारसङ्ग्रहाः सन्ति तेषां परिचयोऽपि ग्रन्थेऽस्मिन् उपलभ्यते। आंग्लभाषानुवादोऽप्यत्र दत्तः। यद् यदस्मिन् ग्रन्थे सुतरां समुत्प्रेक्ष्यते प्रायेण तस्य सर्वस्य सूक्ष्मदृष्ट्या विवेचनं हिन्दीभाषायां कृतम्। अनेन ग्रन्थेन शिष्याणां गुरूणाञ्च महानुपकारो भविष्यति। भूयसा प्रयत्नेन सौष्ठवेन च कार्यमेतत् संपादयतः श्रीदेवराजस्य यशोवृद्धिः समुन्नतिश्च अस्माभिः सर्वदैव परमेशसविधे प्रार्थ्यते। ओमिति शम्।

—नरेन्द्रनाथ शर्मा

# निवेदनम्

उत्तरभारतस्य बहुषु विश्वविद्यालयेषु अद्यत्वे ऋग्वेदाध्ययनार्थं मैक्डानलमहोदयप्रणीते 'वेदिक रीडर' नाम्नि ग्रन्थे अन्तर्भुक्तानि कानिचित्सूक्तानि नियतानि सन्ति। सङ्ग्रहोऽयमत्युत्तमः, उपकारकश्च छात्राणां, यदत्रैकस्मिन्नेव स्थले विविधा सामग्री एकत्र वरीवर्त्ति। किन्तु प्राचीनाचार्याणां सायणस्कन्दादीनां भाष्याणामत्राभावप्रायमेव, काठिन्यकरञ्चैतत् ऐम. ए. परीक्षार्थिनाम्। आचार्यपादानामेषाम्भाष्याण्यध्येतुं तैः बहुकालः पुस्तकालयेषु व्यतियाप्यते। तत्रापि न सर्वदा सर्वत्र सर्वेषां ग्रन्थानामुपलब्धिः। अतः बहुवारं केषाञ्चित्प्राचीनभाष्याणामध्ययनम्विना, बहुशश्च सर्वेषामेषां सम्यग्ज्ञानम्विनैव ते परीक्षापथमवतरन्ति। पुस्तकस्यास्य प्रकाशनेन, यत्र सायणस्कन्दवेङ्कटमाधवादीनां सर्वेषामाचार्याणां प्रकाशितानि भाष्याणि सङ्कलितानि सन्ति, छात्राणां समयस्य सदुपयोगस्सम्पत्स्यत इत्याकलयामः। अस्य प्रकाशन एष एव प्रथमो हेतुः।

अर्वाचीनेष्वपि प्राचीनाचार्याणामिव वेदव्याख्यानमाश्रित्य मतानैक्यमुपलभ्यते। तस्य सम्यगुपलक्षणार्थं एकाधिकानां नव्याचार्याणामाङ्गलभाषानुवादा अत्र सङ्गृहीताः। ऋगर्थप्रतिपादने लब्धप्रतिष्ठानां श्रीमतां लुई रनू महोदयानां फ्रेञ्चभाषानुवादोऽस्माभिरत्राङ्गूलभाषापथेन छात्रसुलभतामानीतः।

ऐम. ए. परीक्षार्थिनां बहूनां छात्राणामाङ्गलभाषाज्ञानमत्युत्तमन्नास्ति। नानुभवन्ति च ते मैक्डानलप्रभृतीनामनुवादाध्ययनेऽपि सौकर्यम्। विचिन्त्यैतदत्र द्वितीये भागे सूक्तानामर्वाचीनप्रथानुसारी हिन्दीभाषानुवादोऽपि दत्तः, तद्वदिवोपनिबद्धः सूक्तपरिचयोऽपि तत्रैव वर्त्तते। तदनन्तरं ग्रन्थस्यास्य तृतीये भागे पाश्चात्यप्रणालीमनुसृत्य रचिताः काश्चिद् व्याकरणसम्बन्धिन्यष्टिप्पण्योऽपि सहृदयैः पाठकैः द्रष्टव्याः। अद्यत्वे प्रायशः सर्वत्र प्रणालीमेताम्विहाय केवलम्पाणिन्यनुसारिवैदिकव्याकरणस्याध्ययनाध्यापन उपलभ्येते। संश्लेषणात्मकस्यास्मद् व्याकरणस्य, विश्लेषणत्वमङ्गीकुर्वाणा पाश्चात्यपद्धतिरेषा, सर्वाङ्गित्वमेव जनयति; ज्ञानञ्चास्या अस्मद्धितकरमेव। तत्परवर्त्तिषु केषुचित्पृष्ठेषु साररूपेण लुड्लेयोः परिचयः, तदनन्तरञ्च प्रो. लुई रनू महोदयैः वेदव्याख्यानरूपेण प्रकाश्यमानानां शब्दविशेषभाष्याणां सम्यक्परिचयार्थमत्रैव केषाञ्चिच्छब्दानां भाष्यं हिन्दीभाषायामनूदितम्वर्त्तते।

अन्तिमे तु प्रकरणे सहायकग्रन्थनिर्देशव्याजेन सर्वेषामेवोपलभ्यमानानां

ऋक्सूक्तसङ्ग्रहाणाम्परिचयः, अन्येषाञ्च सहायकपुस्तकानां ज्ञानार्थन्तत्सम्बन्धि किञ्चिद्वाक्यजातमुपनिबद्धमस्ति। तदनन्तरञ्चैका ऋगनुक्रमणी।

बहूनाम्विश्वविद्यालयानाम्परीक्षार्थं नियतानि सूक्तानि अत्र अन्तर्भुक्तानि स्युरिति चिन्तयित्वात्र कस्यचिदप्येकस्य विश्वविद्यालयस्य परीक्षार्थं नियतेभ्यः सूक्तेभ्योऽधिकानि सूक्तानि सङ्कलितानि। प्रार्थ्यन्ते चास्माभिर्विद्यार्थिनो यत्तैस्स्वपाठ्यक्रमान्तर्गतान्यपि सूक्तान्यध्येयानीति। तेन तेषामेव लाभः।

सङ्ग्रहस्यास्य परामर्शं, तदर्थञ्च प्रेरणाप्रोत्साहने अस्मन्मित्रवर्याणां श्रीमतां रसिकविहारीजोशिमहाभागानाम्। अस्मच्छुभाकाङ्क्षिणां श्रीमतां शम्भुदत्तशर्म्म-शिवप्रसादभारद्वाजवेदप्रकाशमहोदयानां साहाय्यम्विना नासीत्काचिदपि सम्भावनास्य प्रकाशनस्य। सर्वेषामेवैतेषाम्वयं कृतज्ञाः। दिल्लीविश्वविद्यालये संस्कृतविभागाध्यक्षपदमलङ्कुर्वाणैः, संस्कृतविभागाचार्यैः श्रीमद्भिः डाक्टरश्रीनरेन्द्रनाथचौधुरिमहाभागैरत्रामुखमुपनिबद्ध्यमानैः वयं भूयोभूयः सम्मानिताः। तदर्थमयमेष सत्कारपुरस्सरस्सभाजनासमन्वितः प्रणामाञ्जलिस्तैः स्वीकरणीय इति प्रार्थ्यते।

'चानना' वंशजो देवराजः।

# ऋग्भाष्यसंग्रहः

1. I—i. मधुच्छन्दा ऋषिः। अग्निर्देवता। गायत्री छन्दः।

ॐ अ॒ग्निमी॑ळे पु॒रोहि॑तम्। य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म्॥
होता॑रं रत्न॒धात॑मम् ॥१॥

ॐ अ॒ग्निम्। ई॒ळे। पु॒रःऽहि॑तम्। य॒ज्ञस्य॑। दे॒वम्। ऋ॒त्विज॑म्।
होता॑रम्। र॒त्न॒ऽधात॑मम् ॥१॥

*सायण* :—अग्निनामकं देवम् 'ईळे' स्तौमि। 'ईड् स्तुतौ' [धा० 2।9] इति। डकारस्य ळकारो बह्वृचाध्येतृसम्प्रदायप्राप्तः। तथा च पठ्यते—

अज्मध्यस्थ-डकारस्य ळकारं बह्वृचा जगुः।
अज्मध्यस्थ-ढकारस्य ळ्हकारं वै यथाक्रमम् ॥ इति।

मन्त्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते। कीदृशमग्निम्। यज्ञस्य पुरोहितम्। यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा, यज्ञस्य सम्बन्धिनि पूर्वभाग आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? देवम्। दानादिगुणयुक्तम्। पुनः कीदृशम्? होतारम् ऋत्विजम्। देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथा च श्रूयते—'अग्निर्वै देवानां होता' [ऐ. ब्रा., 12. 3] इति। पुनरपि कीदृशम्? रत्नधातमम् यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा॥······

अथ व्याकरणप्रक्रियोच्यते। अगिधातोर्गत्यर्थात् [धातु० v–10] 'अङ्गेर्न लोपश्च' [उ० iv–490] इत्यौणादिकसूत्रेण नि-प्रत्ययः, इदित्त्वान्नुमागमेन प्राप्तस्य नकारस्य लोपको भवति। अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः। तत्र 'धातोः' [vi–1–162] इत्यकार उदात्तः। 'आद्युदात्तश्च' [iii–1–3] इति प्रत्ययगत इकारोऽप्युदात्तः। 'अनुदात्तं पदमेकवर्जम्' [vi–1–158] इति द्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वं प्राप्तम्। तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते। 'सति शिष्टस्वरो बलीयान्' [cf. vi–1–158–9] इति हि न्यायः। ततोऽन्तोदात्तमग्निप्रातिपदिकम्। अनुदात्तौ सुप्पितौ' [iii–1–4] इत्यमित्येतद् द्वितीयैकवचनमनुदात्तम्। तस्य 'अमि पूर्वः' [vi–1–107] इति यत् पूर्वरूपं तदुदात्तम्, 'एकादेश

उदात्तेनोदात्तः' [viii-2-5] इति सूत्रितत्वात्। अग्निशब्दो धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या।''''''

ईळे—इत्येतत् पदं कृत्स्नमप्यनुदात्तम्, 'तिङ्ङतिङः' [viii-1-28] इत्यतिङन्तादग्निशब्दात् परस्य 'ईळे' इत्यस्य तिङन्तस्य निघातविधानात्। पद-द्वयसंहिताकाले ईकारस्य धातुगतस्य 'उदात्तादनुदात्तस्य स्वरितः'[viii-4-66] इति स्वरितत्वम्। तस्मादूर्ध्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात् संहितायामनुदात्तानाम्' [i-2-39] इत्यैकश्रुत्यं प्रचयनामकं भवति। पुरःशब्दो-ऽन्तोदात्त, 'अयं परो भुवः' [तै० सं० iv-3-2-1] इत्यत्र तथैवाम्नातत्वात्। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' [v-3-39] इति पूर्वशब्दादसूप्रत्ययः पुरादेशश्च। ततोऽत्र प्रत्ययस्वर.। धाञो निष्ठायां 'दधातेर्हिः' [vii-4-42] इत्यादेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः। तत्र समासान्तोदात्तत्वे प्राप्ते तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ'[vi-2-2]इत्यादिनाव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा पुरोऽव्ययम् [i-4-67] इति गतिसंज्ञायां 'गतिरनन्तरः' [vi-2-49] इति पूर्वपदप्रकृतिस्वरत्वम्। तत्र ओकार उदात्तः। अवशिष्टानामनुदात्तस्वरित-प्रचयाः पूर्ववद्द्रष्टव्या.। आद्याक्षरस्य संहितायां प्रचयस्वरप्राप्तौ 'उदात्तस्वरित-परस्य सन्नतरः' [i-2-40] इत्यतिनीचोऽनुदात्तः।

'यजयाच' [iii-3-90] इत्यादिना यजतेर्नङ्प्रत्यये सत्यन्तोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति पश्चात् स्वरितत्वम्। देव-शब्दः पचाद्यजन्तः। स च फिट्स्वरेण चित्स्वरेण वा अन्तोदात्तः। ऋत्विक्-शब्द ऋतौ यजतीति विग्रहे सति 'ऋत्विग्दधृक्' [iii-2-59] इति निपातितः। 'गतिकारकोपपदात् कृत्' [पा० vi-2-139] इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। विभक्तिस्वरः पूर्ववत्। होतृ-शब्दस्तृन्प्रत्ययान्त., नित्स्वरेणाद्युदात्त.। स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो 'नब्विषयस्यानिसन्तस्य' [फि० ii-3] इत्याद्युदात्त.। तथा चाम्नायते 'रत्नं धाता' [ऋ०सं० iv-35-8] इति। रत्नानि दधातीति विग्रहः। समा-सत्वादन्तोदात्तो रत्नधाशब्द.। यद्वा कृदुत्तरपदप्रकृतिस्वरः। तमप्प्रत्ययस्य पित्स्वरेणानुदात्तत्वे सति स्वरितप्रचितौ। संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वमिति।

वेदावतार आम्नाया ऋचोऽर्थश्च प्रपञ्चितः।
विज्ञातं वेदगाम्भीर्यमत्र संक्षिप्य वर्ण्यते॥

यास्कः—'अग्निमीळेऽग्निं याचामि। ईळिरध्येषणाकर्मा पूजाकर्मा वा। पुरोहितो व्याख्यातः। यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा। यो देव' सा देवता। होतारं ह्वातारम्। जुहोतेर्होतेत्यौर्ण-

वाभः। रत्नधातमम् 'रमणीयानां धनानां दातृतमम्' [नि० vii–15] इति। अत्र सायणः—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम्। 'धातूनामनेकार्थत्वम्' इति न्यायमाश्रित्य याच्ञाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः। पुरोहितशब्दो द्वितीयेऽध्याये [नि० ii–12] 'यद्देवापिः शन्तनवे पुरोहितः' [ऋ० सं० x-98-7] इत्येतामृचमुदाहृत्य 'पुर एनं दधति' इति व्याख्यातः। तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन पुर एन दधते' [तै० सं० ii-1-2-9] इत्यामनन्ति। देवशब्दो दान-दीपन-द्योतनानामन्यतममर्थमाचष्टे। यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति। दीपनद्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः। यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद् द्युस्थानो भवति। देवशब्द-देवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया। होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति। और्णवाभनामकस्तु मुनिः जुहोति—धातोरुत्पन्नो होतृशब्द इति मन्यते। अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम्। रत्नशब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः।

*स्कन्दस्वामी*—अग्निमीळे अग्निमहं स्तौमि। कीदृशं, पुरोहितं। शान्तिकपौष्टिकैः कर्मभिर्यो राजानमापद्भ्यस्त्रायते स पुरोहित इत्युच्यते। तत्स्थानीयम्। यज्ञस्य यज्ञाधिकृतस्य। 'यज्ञो वै यजमान' इति श्रुतेः। आपद्रामपहन्तारमित्यर्थः। देवम्। दीव्यतिर्दानार्थे दीप्त्यर्थे वा। दातारं दीप्तं वा। अथवा पुरोहितशब्दः क्रियाशब्दः। पूर्वस्यां दिशि निहितमाहवनीयात्मना स्थापितम्। यज्ञस्येत्येतत् तु देवमित्यनेन सम्बध्यते। यज्ञ(स्य) दातारं दीपयितारं वा। यज्ञं हि देवेभ्यो मनुष्येभ्यश्चाग्निर्ददाति। तदायत्तत्वाद् दीपयति च। न च यज्ञस्य देवमेव केवलं, किं तर्हि, ऋत्विजम्। कतमं, होतारम्। 'अग्निर्वै देवानां होते'ति श्रुतेः। अग्निर्दैव्यो होता, तदधिकृतस्तु मानुषो होता हौत्रं कर्म करोति। अथवा ऋत्विग्घोतृशब्दावपि क्रियाशब्दावेव। ऋतावृतौ यष्टारम् ऋत्विजम्। यो यो यागकालस्तत्र तत्र यष्टारमित्यर्थः। होतारमाह्वातारम्। कस्य, सामर्थ्याद् देवानाम्। रत्नधातममिति। रत्नमिति धननाम। दधातिर्दानार्थः। धनानामतिशयेन दातारम्।

*वेङ्कटमाधवः*—अग्निं स्तौमि। पुरो निहितमुत्तरवेद्यां यज्ञस्य द्युस्थानं स्वे स्वे काले देवानां यष्टारं ह्वातारं देवानां रमणीयानां धनानां दातृतमम्।

Old. :—I magnify Agni, the purohita, the divine ministrant of the sacrifice, the Hotṛ priest, the greatest bestower of treasures.

---

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ॥२॥

अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत ।
सः । देवान् । आ । इह । वक्षति ॥२॥

सायणः—अयम् अग्निः पूर्वेभिः पुरातनैः भृग्वङ्गिरःप्रभृतिभिः ऋषिभिः ईड्यः स्तुत्यो नूतनैः उत इदानीन्तनैरस्माभिरपि स्तुत्यः । सः अग्निः स्तुतः सन् इह यज्ञे देवान् हविर्भुज आ वक्षति । 'वह प्रापणे' [धा० i–185] इति धातुः । आवहतित्यर्थः । पूर्वेभिरित्यत्र 'बहुलं छन्दसि' [vii–1–10] इति भिस ऐसादेशाभावः । 'पुर्व पर्व मर्व पूरणे' [धा० i–568–70] इति धातुः । पूर्वेति-धातोरन्प्रत्यय औणादिकः । इन्—प्रत्ययान्तः ऋषिशब्दः । 'ऋष्यन्धक' [iv–1–114] इति निपातनाल्लघूपधागुणाभावः । किन्प्रत्ययो वात्र ज्ञेयः [उ० iv–559] । तौ शब्दौ नित्स्वरेणाद्युदात्तौ । ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात् "तित् स्वरितम्" [vi–1–185] इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन "ईडवन्द०" [vi–1–214] इत्यादिनाद्युदात्तत्वम्' 'नवस्य नू बप्तनप्खाश्च' [v–4–30–6] इति वार्तिकेन नवशब्दस्य नू इत्यादेशः तनन्-प्रत्ययश्च महावार्तिके विहितः । ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः । 'उच्चावचेष्वर्थेषु निपतन्ति' [नि० 1–4] इति निपातत्वम् । तर्हि 'निपाता आद्युदात्ताः' [फि० iv–12] इत्युकारस्योदात्त. प्राप्त इति चेत्, न, प्रातःशब्दवदन्तोदात्तत्वात् । यथा प्रातःशब्दोऽन्तोदात्तत्वेन स्वरादिषु [i–1–37] पठित एवमुतशब्दस्यापि पाठो द्रष्टव्यः । स्वरादेराकृतिगणत्वात् । यद्वा 'एवादीनामन्त' [फि० iv–14] इत्यन्तोदात्तः । स इत्यत्र फिट्स्वर । देवशब्दः पूर्ववत् । देवानित्यस्य नकारस्य संहितायां 'दीर्घादटि०' [viii–3–1] इति रुत्वम् । 'अत्रानुनासिक०' [viii–3–2] इत्यनुवृत्तौ 'आतोऽटि नित्यम्' [viii–3–3] इत्याकारः सानुनासिकः । 'भो भगो०' [viii–3–17] इति रोर्यकारः । स च 'लोपः शाकल्यस्य' [viii–3–19] इति लुप्यते । तस्यासिद्धत्वात् न पुनः सन्धिकार्यम् । आङो निपातत्वादाद्युदात्तत्वम् । इदमो ह—प्रत्यये सति निष्पन्नत्वात् इहशब्दे प्रत्यय-स्वरः । वहतिधातोर्लोडर्थे छान्दसो लृट् । तस्य स्य-प्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः, यद्वा लेटि 'सिब्बहुलम्०' [iii–1–34] इति सिप्—प्रत्ययः । 'लेटोऽडाटौ' [iii–4–94] इत्यडागमश्च । ततो वक्षतीति सम्पद्यते । तस्य तिङन्तत्वान्निघातः । संहितास्वराः पूर्ववत् ॥२॥

*स्कन्दस्वामी*—किं कारणम्, उच्यते, यस्मात्—पूर्वेभिः ऋत्विग्भिः पूर्वैरस्मत्तः पूर्वकालैर्भृग्वङ्गिरःप्रभृतिभिः। ईड्यः स्तुत्यः। नूतनैरुत। नूतनमिति नवनाम। उतशब्दोऽप्यर्थे समुच्चये। नवैश्चेत्यर्थः। यावान् कश्चिद् ऋषिः, तेन सर्वेण यतः स्तोतव्यः, अतोऽहं स्तौमीत्यर्थः। एवमस्यार्धर्चस्य पूर्वयर्चैकवाक्यता। अपरः पादो भिन्नं वाक्यम्। स प्रकृतोऽग्निः देवानेह वक्षति। आ इत्युपसर्गो व्यवहितोऽपि वक्षतीत्याख्यातेन सम्बध्यते। लडर्थे लेट्। इहेति कृत्स्नस्य जगतः प्रतिनिर्देशः। इहेति कृत्स्ने जगति। स एव देवान् आवहति यज्ञेषु, नान्यः कश्चिदित्यर्थः। अथवा अनयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तदोः उद्देशप्रतिनिर्देशार्थयोर्नित्यसम्बन्धात् स देवानिति च प्रतिनिर्देशार्थतच्छब्दश्रुतेः पूर्वस्मिन्नर्धर्चे उद्देशार्थो यच्छब्दोऽध्याहर्तव्यः। यः पूर्वैर्नवैश्च स्तुत्योऽग्निः, स देवानिह जगति आवक्षत्यावहति। अथवा, इहेति प्रकृतस्य कर्मणः प्रतिनिर्देशः। वक्षतीति लोडर्थः लट्। इह कर्मणि देवानावहत्विति।

*वेङ्कटमाधवः*—अग्निः पूर्वेभिः। अग्निः पूर्वैर्ऋषिभिः स्तोतव्योऽस्माभिश्च नवतरैः। स देवानिहावहति ॥२॥

Old. :—Agni, worthy to be magnified by the ancient ṛsis and by the present ones—may he conduct the gods hither.

---

अ॒ग्निना॑ र॒यिम॑श्नव॒त् पोष॑मे॒व दि॒वेदि॑वे।
य॒शसं॑ वी॒रव॑त्तमम् ॥३॥

अ॒ग्निना॑। र॒यिम्। अ॒श्न॒व॒त्। पोष॑म्। ए॒व। दि॒वेऽदि॑वे।
य॒शस॑म्। वी॒रव॑त्ऽतमम् ॥३॥

*सायणः*—योऽयं होत्रा स्तुत्योऽग्निस्तेन अग्निना निमित्तभूतेन यजमानो रयिं धनम् अश्नवत् प्राप्नोति। कीदृशं रयिम्? दिवे दिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव, न तु कदाचिदपि क्षीयमाणम्। यशसम् दानादिना यशोयुक्तम्। वीरवत्तमम् अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः सम्पद्यन्ते॥ रयिशब्दो मघमित्यादिधननामसु पठितः [ निघ० ii–10]। तत्र फिट्स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। 'इतश्च लोपः' [iii–4–97] इतीकारलोपः। 'लेटोऽडाटौ' [iii–4–94] इत्यडागमः। ततोऽश्नवदिति भवति। तस्य निघातः। घञन्तत्वात् पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' [फि० iv–14] इत्यन्तोदात्तत्वम्। वकारान्ताद्दिव्शब्दात् परस्याः सप्तम्याः 'सुपां सुलुक्' [vii–1–39] इत्यादिना शेभावे सति 'सावेकाचः' [vi–1–168] इत्यादिना, 'ऊडिदम्पदादि'

[vi-1-171] इत्यादिना वा तस्योदात्तत्वम्। 'नित्यवीप्सयोः' [viii-1-4] इति द्विर्भावे सत्युत्तरभागस्य 'अनुदात्तं च' [viii-1-3] इत्यनुदात्तत्वम्। यशोऽस्यास्तीति विग्रहे सति 'अर्शआदिभ्योऽच्' [v-2-127] इत्यच्-प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणान्तोदात्ताद् वीर-शब्दादुत्तरयोर्मतुमममपोः पित्त्वादनुदात्तत्वम्। 'ह्रस्वनुड्भ्याम्' [vi-1-176] इति तु न, सावर्णान्तत्वात् 'न गोश्वन्' [vi-1-182] इति प्रतिषेधात्।

*स्कन्दस्वामी*—अग्निनेति तृतीयानिर्देशाद् दत्तमिति वाक्यशेषः। पञ्चम्यर्थे वा तृतीया। अग्निना दत्तम्, अग्नेर्वा सकाशात्। रयिं धनम्। अश्नवद् अश्नुते प्राप्नोति। कः, सामर्थ्यात् स्तोता। न च केवलं धनं, किं तर्हि, पोषमेव। एवशब्दोऽवधारणासम्भवाच्चार्थे। पुष्टिं च। कदा, दिवे दिवे अहन्यहनि। सर्वकालमित्यर्थः। यशसम्। यशशब्दः कीर्तिपर्यायः। छान्दसत्वाल्लोपो न लुक्। यशश्च कीर्तिं चेत्यर्थः। कीदृशं यशः, उच्यते। वीरवत्तमम् वीराः पुत्रास्ते यस्मिन् सन्ति तद् वीरवद्, अतिशयेन वीरवद् वीरवत्तमम्। बहुभिः पुत्रैः सहितमित्यर्थः ॥३॥

*वेङ्कटमाधवः*—अग्निना रयिम् अग्निना स्तुवेन पशून् प्रजाश्चाप्नोति पोषं च प्रजानां पशूना चान्वहं यशश्चातिशयेन वीरपुरुषयुक्तम्। यशसशब्दो यशः-शब्दपर्यायो मध्योदात्तः ॥३॥

Old. :—May one obtain through Agni wealth and welfare day by day, which my bring glory and high bliss of valiant offspring.

---

अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑।
स इद्दे॒वेषु॑ गच्छति ॥४॥

अग्ने॑। यम्। य॒ज्ञम्। अ॒ध्व॒रम्। वि॒श्वतः॑। प॒रि॒ऽभूः। असि॑।
सः। इत्। दे॒वेषु॑। ग॒च्छ॒ति॒ ॥४॥

*सायणः*—हे अग्ने! त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवान् असि, स इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गं गच्छति। प्राच्यादिचतुर्दिगन्तेष्वाहवनीय-मार्जालीय-गार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति। परि-शब्देन होत्रियादिधिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्? अध्वरम् हिंसारहितम्। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति। अग्निशब्दस्य पाष्ठिकम् [vi-1-198] आमन्त्रिताद्युदात्तत्वम्। न विद्यते

ध्वरोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' [vi-2-172] इत्यन्तोदात्तत्वम्। विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य 'लिति' [vi-1-193] इत्युदात्तत्वम्। परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम्। असीति तिङन्तस्य 'यद्वृत्तान्नित्यम्' [viii-1-66] इति निघाताभावः ॥४॥

*स्कन्दस्वामी*—हे अग्ने! यं यज्ञं। अध्वरशब्दोऽयं यज्ञमित्यनेन पौनरुक्त्यान्न यज्ञनाम। किं तर्हि तद्विशेषणम्। हिंसावचनो ध्वरतिः हिंसाकर्मा। ध्वरणं ध्वरो हिंसा यस्मिन् नास्ति, सोऽध्वरः। यज्ञे हि सर्वस्यानुग्रहः, न हिंसा। येऽपि हि तत्र पश्वादयो हिंस्यन्ते तेषामप्यनुग्रहमेव शिष्टाः स्मरन्ति—

"ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा।
यज्ञार्थं (मिथु? निच) नं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः॥"

इति। तस्माद् उपपन्नं हिंसावर्जितत्वम्। अथवा षष्ठ्यर्थे बहुव्रीहिः। अविद्यमानो ध्वरो यस्य सोऽध्वरः। रक्षोभिरहिंसितत्वगुणमित्यर्थः। सर्वत्र षष्ठ्यर्थे द्वितीया। यस्य यज्ञस्य हिंसावर्जितस्य विश्वतः सर्वतः परिभूः। परिपूर्वो भवतिः सर्वत्र परिग्रहे। परिग्रही भवसि। स इदिति। इच्छब्द एवार्थे। स एव देवेषु गच्छति। देवास्तमेव परिगृह्णन्ति, नान्यमित्यर्थः।

*वेङ्कटमाधवः*—अग्ने यं यज्ञम्। हिंसारहितमहिंसितं त्वत्सन्निधानादसुरैः। सर्वतः परिभवसि गार्हपत्यादिव्यूहेनारानिव नेमिः स एव देवेषु गच्छति ॥४॥

Old. :—Agni, whatever sacrifice and worship thou encompassest on every side, that indeed goes to the gods.

---

अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः।
दे॒वो दे॒वेभि॒रा ग॑मत् ॥५॥

अ॒ग्निः। होता॑। क॒विऽक्र॑तुः। स॒त्यः। चि॒त्रश्र॑वःऽतमः।
दे॒वः। दे॒वेभिः॑। आ। ग॒म॒त् ॥५॥

*सायणः*—अयम् अग्निः देवः अन्यैः देवैर्हविर्भोजिभिः सह आगमत् अस्मिन् यज्ञे समागच्छतु। कीदृशोऽग्निः? होता होमनिष्पादकः। कविक्रतुः कविशब्दोऽत्र क्रान्तवचनः, न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम। ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः अनृतरहितः, फलमवश्यं प्रयच्छतीत्यर्थः। चित्रश्रवस्तमः श्रूयते इति श्रवः कीर्तिः, अतिशयेन विविधकीर्तियुक्तः।

कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम्। सत्सु साधुः सत्यः। 'सत्यादशपथे' [v-4-66] इत्यत्रान्तोदात्तो हरदत्तेन निपातित.। लोडन्तस्य गच्छत्विति शब्दस्य छत्वाभावः। उकारलोपश्छान्दसः। ततो रूपं गमदिति भवति। स्पष्टमन्यत्।

*स्कन्दस्वामी*—अग्निर्होता देवानाम्। कविक्रतुः कविशब्दोऽत्र क्रान्तवचनः। न मेधाविनाम। क्रतुशब्दः प्रज्ञानाम कर्मनाम वा। क्रान्तं गतं सर्वत्राप्रतिहतं प्रज्ञानं कर्म वा यस्य स कविक्रतुः। सत्यः अभिसम्पादकः। यथाभिलषितफलद इत्यर्थः। चित्रश्रवस्तमः। 'चायृ पूजानिशामनयोरि'त्यस्य चित्रं पूजनीयं। विचित्रपर्यायो वा चित्रशब्दः। श्रव इत्यन्ननाम वा, धननाम वा, कीर्तिपर्यायो वा। अतिशयेन पूज्यं विचित्रं वा अन्नादीनामन्यतमं यस्य स चित्रश्रवस्तमः। देवो दानादिगुणः। देवेभिः। सहयोगलक्षणा एषा तृतीया। देवैः सह। आगमत् आगच्छतु ॥५॥

*वेङ्कटमाधवः*—अग्निर्होता। क्रान्तप्रज्ञः। सत्यकर्मातिशयेनाश्चर्यश्रवणो देवो। देवैः। सहागच्छतु ॥५॥

Old.—May agni, the thoughtful hotr, he who is true and most splendidly renowned, may the god come hither with the gods

---

यद॒ङ्ग दा॒शुषे॒ त्वमग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑।
तवेत्तत्स॒त्यम॑ङ्गिरः ॥६॥

यत्। अ॒ङ्ग। दा॒शुषे॑। त्वम्। अग्ने॑। भ॒द्रम्। क॒रि॒ष्यसि॑।
तव॑। इत्। तत्। स॒त्यम्। अ॒ङ्गि॒रः ॥६॥

*सायणः*—अङ्गेत्यभिमुखीकरणार्थो निपातः। अङ्गाग्ने हे अग्ने, त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थम्, यद् भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद् भद्रं तवेत् तवैव सुखहेतुरिति शेषः। हे अङ्गिरः! अग्ने! एतच्च सत्यं न त्वत्र विसंवादोऽस्ति। यजमानस्य वित्तादिसम्पत्तौ सत्याम् उत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति। भद्रशब्दार्थं शाट्यायनिनः समामनन्ति—'यद्वै पुरुषस्य वित्तं तद् भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रम्' इति। अङ्गशब्दस्य निपातत्वेऽप्यभ्यादित्वाद् अन्तोदात्तत्वम्। 'दाश्वान् साह्वान्०' [iii-1-12] इति सूत्रेण 'दाश्टृ दाने' [धा० i-867] इति धातोः क्वसुप्रत्ययो निपातितः। तत्र प्रत्ययस्वरः। आमन्त्रितस्याग्निशब्दस्य पदात् परत्वेनाष्टमिकानुदात्तत्वं [viii-1-19] न शङ्कनीयम्, 'अनुदात्तं सर्वमपादादौ' [viii-1-18]

1–18] इति पर्युदस्तत्वात्। ततः पाष्ठिकम् [vi–1–198] आद्युदात्तत्वमेव। भद्रशब्दस्य नब्विषयत्वेन [फि० ii–3] आद्युदात्तत्वप्रसक्तावपि 'भदि कल्याणे' [धा० i–12] इति धातोरुपरि रक् प्रत्ययेन [उ० ii–29] निपातनाद् अन्तोदात्तत्वम्। अस्मिन् वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदिहन्त' [viii–1–30] इति निघाते प्रतिषिद्धे स्य—प्रत्ययस्वरेण सति शिष्टेन करिष्यसि-शब्द उपान्त्योदात्तः। तवेत्यत्र 'युष्मदस्मदोर्ङसि' [vi–1–211] इत्याद्युदात्तत्वम्। 'अङ्गिरा अङ्गाराः' इति यास्कः [नि० iii–17]। ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति—'येऽङ्गाराः आसंस्तेऽङ्गिरसोऽभवन्' [ऐ० ब्रा० xiii–10] इति। तस्मादङ्गिरोनामकमुनिकारणत्वाद् अङ्गाररूपस्याग्नेरङ्गिरस्त्वम्। अत्र पदात् परत्वेनाष्टमिकानुदात्तत्वम् ॥६॥

*स्कन्दस्वामी*—अङ्गेति निपातोऽत्र पादपूरणः क्षिप्रार्थो वा सामर्थ्यात्। यत् क्षिप्रं दाशुषे दाश्वान् यजमानः हविषां दातृत्वात् तस्मै। त्वं हे अग्ने! भद्रं भजनीयं स्तुत्यं उत्कृष्टम्। इष्टमित्यर्थः। किं पुनस्तद्, धनमन्नं वा। करिष्यसि। दाशुष इति सम्प्रदानचतुर्थीश्रुतेरिह करोतिः क्रियासामान्यवचनो दाने वर्तते। दास्यसीत्यर्थः। तवेत्तत्। इच्छब्द एवार्थे वर्तते। तवैव तद्। यज्ञान्तरे हविः कृत्वा तुभ्यमेव प्रदास्यत इत्यर्थः।

सत्यमविसंवाद्येवैकं नैतदनृतं मयोच्यत इत्यर्थः। अथवा करिष्यसीत्ययं करोतिरन्तर्णीतसनर्थो द्रष्टव्यः। लडर्थेऌट्। यद् यजमानाय भद्रं धनमन्नं वा चिकीर्षसि, तवैव तत् सत्यं नान्यस्य कस्यचित्। यथा चिकीर्षितदानकारणसमर्थो नान्यः कश्चिदित्यर्थः। हे अङ्गिरः। अङ्गिरा ऋषिः। तस्योत्पत्तिकारणमग्नि, नाग्निरङ्गिराः। एवं ह्यैतिहासिकाः स्मरन्ति –

"त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः।
आहरत् सहितः साध्यैर्विश्वेदेवैस्तथा स ह ॥
तत्र वाग् दीक्षणीयायामाजगाम शरीरिणी।
रेतश्चस्कन्द तां दृष्ट्वा तस्याथ वरुणस्य च ॥
तच्छुक्लं प्रवहन् वायुरग्नौ प्रास्यद् यदृच्छया।
ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥

इति। तेनाङ्गिरसः कारणमग्निर्नाग्निरङ्गिराः। अत इदं सोऽयमित्यभिसम्बन्धात् कार्यशब्देन कारणस्याभिधानम्। अङ्गिरसः कारणभूते (ने?) त्यर्थः। अथवा गुणतोऽग्नेरिदमभिधानम्। अङ्गानि शरीरावयवा (नि?) तद्वदङ्गि शरीरं, तस्य स्थितिहेतुः अशितपीतरसोऽङ्गिरसः तं करोति अङ्गिरसयति। 'तत् करोति तदाचष्टे' (वा० iii–1–26) इति णिच्। णयन्तात् क्विप्। हे अङ्गिरः! शरीरस्थितिहेतोरशितपीतरसस्य कर्तरित्यर्थः।

जाठरोऽप्यग्निरन्नं रसीकरोति, रसो लोहितमांसस्नाय्वस्थिमज्जाशुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति ॥ ६ ॥

*वेङ्कटमाधवः*—यदङ्ग । यत् तव क्षिप्रमग्ने! हविः प्रयच्छतेऽनन्तरमेव कल्याणं करिष्यसि । तवैव तत् सत्यमङ्गिरस्त्वमेकः, अन्यस्तु कृतं विस्मरत्यपि ॥६॥

Old. :—Whatever good thou wilt do thy worshipper, O Agni, that (work) verily is thine, O Angiras.

---

उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् ।
नमो॒ भर॑न्त॒ एम॑सि ॥ ७ ॥

उप॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेऽदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् ।
नमः॑ । भर॑न्तः । आ । इ॒म॒सि॒ ॥ ७ ॥

*सायणः*—हे अग्ने, वयम् अनुष्ठातारो दिवेदिवे प्रतिदिनम् दोषावस्तः रात्रावहनि च धिया बुद्ध्या, नमो भरन्तः नमस्कारं सम्पादयन्तः उप समीपे त्वा एमसि त्वामागच्छामः । उपशब्दस्य निपातस्वरः [फि० iv-12] । 'त्वामौ द्वितीयायाः' [viii-1-23] इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः । [दोषावस्तः] दोषाशब्दो रात्रिवाची । वस्तरित्यहर्वाची । द्वन्द्वसमासे कार्तकौजपादित्वात् [vi-2-37] आद्युदात्तः । 'सावेकाचः' [vi-1-168] इति धियो विभक्तिरुदात्ता । नम इति निपातः । भरन्त इत्यत्र शपः पित्त्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति धातुस्वरः शिष्यते । इमसीत्यत्र 'इदन्तो मसि' [vii-1-46] इत्यादेशो निघातश्च ॥ ७ ॥

*स्कन्दस्वामी*—उपेत्युपसर्गः इमसीत्यन्तेनाख्यातेन सम्बन्धयितव्यः । ( त्वा ? ) हे अग्ने ! दिवे दिवे अहन्यहनि दोषावस्तः ! दोषेति रात्रिनाम । 'वस आच्छादने' । रात्रौ स्वेन ज्योतिषा तमसामाच्छादयितः ! धिया याद्दश्यस्माकं प्रज्ञा तादृश्या वयं नमः स्तुतिं भरन्तः । 'हृञ् हरणे' इत्येतस्यैवैतत् । भत्वं 'हृग्रहोर्भश्छन्दसि' [वा० iii-1-84] इति । हस्य भः । हरन्तः प्रापयन्तः, स्तुतिं कुर्वन्त इत्यर्थः । त्वा त्वाम् उप एमसि । आङत्र धात्वर्थानुवादी । उपागच्छामः ॥७॥

*वेङ्कटमाधवः*—उप त्वाग्ने । उपगच्छामस्त्वामग्ने । वयमन्वहं सायं प्रातश्चाग्निहोत्रकर्मणा नमो भरन्तः ॥७॥

Old. :—Thee, O Agni, we approach day by day, O (god) who shinest in the darkness; with our prayer, bringing adoration to thee.

---

राजन्तमध्वराणां गोपामृतस्य दीदिविम्।
वर्धमानं स्वे दमे ॥८॥

राजन्तम्। अध्वराणाम्। गोपाम्। ऋतस्य। दीदिविम्।
वर्धमानम्। स्वे। दमे ॥८॥

*सायणः*—पूर्वमन्त्रे त्वामुपेम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्? राजन्तम् दीप्यमानम्। अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानाम् गोपाम् रक्षकम्, ऋतस्य सत्यस्यावश्यम्भाविनः कर्मफलस्य दीदिविम् पौनःपुन्येन भृशं वा द्योतकम्। आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिः वर्धमानम्। राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते। दीदिविशब्दस्य 'अभ्यस्तानामादिः' [vi–1–189] इत्याद्युदात्तत्वम्। दम-शब्दो वृषादित्वात् [vi–1–203] आद्युदात्तः ॥८॥

*स्कन्दस्वामी*—कीदृशं त्वाम्, उच्यते—राजन्तम्। राजतिरैश्वर्यकर्मा। ईशानम्। कस्य, अध्वराणां यज्ञानाम्। गोपां रक्षितारं च। कस्य, ऋतस्य यज्ञस्यैव। ऋतशब्दो ह्यपठितोऽपि भूयिष्ठं यज्ञनाम दृश्यते। दीदिविम् अत्यर्थं दीप्तं वर्धमानं स्वे आत्मीये दमे य(ज्ञं ? ज्ञ) गृहे। दम इति गृहनाम सामर्थ्यादत्र यज्ञगृहे वर्तते ॥८॥

*वेङ्कटमाधवः*—राजन्तमध्वराणाम्। दीप्यमानं यज्ञाना स्वे दम आहवनीये समिध्यमानमुपेमो गोपयितारं सत्यस्य दीप्तम् ॥८॥

Old.:—Who art the king of all worship, the guardian of ṛta.
the shining one, increasing in thy own house.

---

स नः पितेव सूनवेऽग्ने सूपायनो भव।
सचस्वा नः स्वस्तये ॥ ९ ॥

सः। नः। पिताऽइव। सूनवे। अग्ने। सुऽउपायनः। भव।
सचस्व। नः। स्वस्तये ॥ ९ ॥

*सायणः*—हे अग्ने! स त्वं नः अस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव। तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत्। अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्' [viii–1–18] इत्यनुदात्तत्वम्। 'चादयोऽनुदात्ताः' [फि० iv–16] इति इवशब्दोऽनुदात्तः। 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' [ii–1–4–2] इति

समस्तः पितेवेतिशब्दो मध्योदात्तः। [सूपायनशब्दस्य] शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' [vi-2-172] इत्यन्तोदात्तत्वम्। सचस्वेत्यत्र पदात्-परत्वं नास्तीति न निघातः, सार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ॥ ६ ॥

*स्कन्दस्वामी*—स इति पूर्वप्रतिनिर्देशो वा तच्छब्दश्रुतिसामर्थ्यादेव वा योग्यार्थ-सम्बन्धो वा। यच्छब्दोऽध्याहर्तव्यः। यं त्वामस्तोष्म (हि) इति। स त्वं नः अस्माकं पितेव सूनवे। सूनुरित्यपत्यनाम। षष्ठ्यर्थे चात्र चतुर्थी। यथा पिता पुत्रस्य, एवं हे अग्ने! सूपायनः सूपगमः सुखोपसर्पो भव। सचस्व सेवस्व च नः अस्मान् स्वस्तये। स्वस्तीत्य-विनाशनाम। अविनाशाय। रवि (त ? नु) सस्मान् अस्मत्सर्मीपे नित्यं भवेत्यर्थः ॥ ६ ॥

*वेङ्कटमाधवः*—स नः। स त्वमस्मभ्यं यथा पिता पुत्राय सूपचरः, एवं सूपचरो भव। सेवस्व चास्मानविनाशाय ॥ ६ ॥

Old. :—Thus O Agni, be easy of access to us, as a father is to his son, Stay with us for our happiness

---

2. I—35. हिरण्यस्तूप ऋषिः। आद्या नवमी च जगतीच्छन्दके। शिष्टास्त्रिष्टुभः। सविता देवता। आद्याया······अग्निमित्रावरुणरात्रिसवितृरूपलिङ्गोक्त-देवताः।

ह्वया॑म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒ ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से।
ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒ ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑ ॥१॥

ह्वया॑मि। अ॒ग्निम्। प्र॒थ॒मम्। स्व॒स्तये॑। ह्वया॑मि। मि॒त्रावरु॑णौ। इ॒ह। अव॑से। ह्वया॑मि। रात्री॑म्। जग॑तः। नि॒ऽवेश॑नीम्। ह्वया॑मि। दे॒वम्। स॒वि॒तार॑म्। ऊ॒तये॑ ॥१॥

*सायणः*—स्वस्तये अस्माकमविनाशाय। 'स्वस्तीत्यविनाशनाम' (नि० iii-21) इति यास्कः। प्रथमम् आदौ अग्निं ह्वयामि। इह अस्मिन् कर्मणि। अवसे अस्मद्रक्षणाय मित्रावरुणौ ह्वयामि। जगतः जङ्गमस्य प्राणिजातस्य निवेशनीं उपवेशनहेतुभूतां रात्रीं रात्रिदेवतां ह्वयामि। जङ्गमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान् कृत्वा स्वस्वगृहे रात्रौ उपविशन्तीति प्रसिद्धम्। ऊतये अस्मद्रक्षणार्थं सवितारं देवं ह्वयामि। मित्रावरुणौ। 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः। 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम्। रात्रीम्। 'रात्रेश्चाजसौ' (पा० iv-1-31) इति ङीप्। निवेशनीं। निविशन्त्यस्यामिति निवेशनी। 'करणाधिकरणयोश्च' इति ल्युट्। 'टिड्ढाणञ्' (पा० iv-1-15)

इति ङीप् । ऊतये । अवतेः क्तिनि 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् । 'ऊतियूति' इत्यादिना क्तिनः उदात्तत्वम् ॥१॥

*स्कन्दस्वामी*—ह्वयामीत्याद्यः पादः आग्नेयः । ततः परो द्वितीयो मैत्रावरुणः । तृतीयो रात्रेः संस्ताव इत्यर्थः । शिष्टमन्यत् सूक्तं सावित्रम् । ह्वयाम्यग्निम् । कीदृशम् प्रथमम् । क्रियाविशेषणं प्रथमशब्दः । अन्याभ्यो देवताभ्यः प्रथमम् अग्रे । स्वस्तये अविनाशायात्मनः । ह्वयामि मित्रावरुणाविहावसे पालनाय । ह्वयामि रात्रीं जगतः कृत्स्नस्य निवेशनीं स्वापकरीम् । ह्वयामि देवं सवितारम् ऊतये पालनाय ॥१॥

*वेङ्कटमाधवः*—ह्वयाम्यग्निम् मुख्यमविनाशार्थं । ह्वयामि मित्रावरुणाविह रक्षणाय । ह्वयामि रात्रीं जङ्गमस्य निवेशयित्रीम् । ह्वयामि देवं सवितारं रक्षणाय ॥१॥

Mm :—I first call Agni hither for our happiness.
I then call Mitra-Varuṇa to shield us here.
I call on Rātrī, sending all the world to rest.
I call for help on Savitr, the brightest god.

---

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥२॥

आ । कृष्णेन । रजसा । वर्तमानः । निऽवेशयन् । अमृतम् । मर्त्यम् । च ।
हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ॥२॥

*सायणः*—सविता सूर्यः कृष्णेन रजसा कृष्णवर्णेन लोकेन । 'कृष्णं कृष्यतेर्निकृष्टो वर्णः' (नि० ii–20) इति यास्कः । 'लोका रजांस्युच्यन्ते' (नि० iv 19) इति च । अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति । तेनान्तरिक्षमार्गेण आ वर्तमानः पुनः पुनरागच्छन् अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् स्वस्वस्थानेऽवस्थापयन् । यद्वा । अमृतं मरणरहितं प्राणं मर्त्यं मरणसहितं शरीरं च निवेशयन् । तथा चारण्यकाण्डे 'अमर्त्यो'...... (ऋ० सं० i–164–38) इत्येतस्य मन्त्रभागस्य व्याख्यारूपे ब्राह्मणे यथोक्तोऽर्थोऽवगम्यते—'मर्त्यानि......' (ऐ० आ०ii–1–8) इति । यथोक्तगुणोपेतः सविता देवः भुवनानि सर्वान् लोकान् पश्यन् अवेक्षमाणः प्रकाशयतीत्यर्थः । हिरण्ययेन सुवर्णनिर्मितेन रथेन आ याति अस्मत्समीपमगच्छति ॥ अमृतम् । मृतं मरणं नास्ति अस्येति बहुव्रीहिः, 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । मर्त्यम् । मर्ते भवम् । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । हिरण्ययेन । 'ऋत्व्यवास्त्व्य' (पा० vi–4–175) इत्यादिना

मयटो मकारलोपो निपातितः । यस्येति लोपे प्रत्ययस्वरः । भुवनानि । 'भू सत्तायाम्' । भूसूधूभ्रस्जिभ्यश्छन्दसि' (उ० ii-238) इति क्युन् प्रत्ययः । योरनादेशे उवङादेशः । नित्त्वादाद्युदात्तत्वम् ॥२॥

*स्कन्दस्वामी*—रजोऽत्र तमो रात्रिर्वोच्यते । तृतीयानिर्देशाच्च योगक्रियाध्याहारः । कृष्णेन रजसा तमसा रात्र्या वा व्याप्ते जगति । आवर्तमानः । वर्तत इति गतिकर्मा । 'लक्षणहेत्वोः क्रियायाः' (iii-2-126) इत्येवं हेतौ शानच् । आगमेनात्मीयेन हेतुना । निवेशयन् । शुद्धोऽप्ययं निवेशिरभिपूर्वार्थो द्रष्टव्यः । स्वव्यापारेष्वभिनिवेशयन् । यत्नेन व्यापारयन्नित्यर्थः । किम् । अमृतम् । मरणवर्जितं देवादिम् । मर्त्यं च मनुष्यादिम् । उदिते हि सवितरि सर्वः स्वव्यापारे प्रवर्तते । अत एवमुच्यते । आवर्तमानो निवेशयन्नमृतं मर्त्यं चेति । किं करोति । उच्यते । हिरण्ययेन सविता रथेन देवः आयाति भुवनानि कृताकृत-प्रत्यवेक्षणार्थं पश्यन् । अथवा निवेशः स्वाप एवाभिप्रेतः । कृष्णेन रजसेत्येतच्च निवेशयन्नित्ये-तेन सम्बध्यते । सप्तम्यर्थे चात्र तृतीया । आवर्तमानो निवेशयन्निति हेतुहेतुमद्भावः । एवं योजना—कृष्णायां रात्रौ निवेशयन् स्वापयन् अमृतं मर्त्यं च । आवर्तमानश्च कदा । सामर्थ्यादहनि । हिरण्ययेन सविता रथेन देवो याति । कायाति । सामर्थ्याद् रात्रौ निवेश-यन्नमृतं मर्त्यं च उदयगिरिं प्रत्यायाति उत्तरकुरुस्थानि भूतानि च पश्यन् । अहनि त्ववर्त-मानः पृथिवीं प्रत्यायाति तत्रस्थानि भूतानि पश्यन्निति ॥२॥

*वेङ्कटमाधव*.— कृष्णवर्णेन रजसा द्युलोकेन वर्तमानो निवेशयन् देवान् मर्त्यांश्च हिरण्मयेन सविता रथेन देव आयाति सर्वाणि भुवनानि पश्यन् ॥२॥

Mm.—Approaching on the darkest path of heaven,
Setting to rest both mortal and immortal,
God Savitr, on golden chariot standing,
Comes hither and beholdeth all creation.

---

याति॑ दे॒वः प्र॒वता॑ या॒त्यु॒द्वता॒ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम् ।
आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒ विश्वा॑ दुरि॒ता बाध॑मानः ॥३॥

याति॑ । दे॒वः । प्र॒ऽवता॑ । याति॑ । उ॒त्ऽवता॑ । याति॑ । शु॒भ्राभ्या॑म् । य॒ज॒तः । हरि॑ऽभ्याम् ।
आ । दे॒वः । या॒ति॒ । स॒वि॒ता । प॒रा॒ऽवतः॑ । अप॑ । विश्वा॑ । दुः॒ऽइ॒ता । बाध॑मानः ॥३॥

*सायणः*—देवः दीप्यमानः सविता प्रवता प्रवणवता मार्गेण याति गच्छति । तथा उद्वता उत्कृष्टेनोर्ध्वदेशयुक्तेन मार्गेण याति । उदयानन्तरं आमध्याह्नमूर्ध्वो मार्गः, तत उपरि आसायं प्रवणो मार्ग इति विवेकः । तथा यजनः यष्टव्यः स देवः शुभ्राभ्यां श्वेताभ्यां हरिभ्याम् अश्वाभ्यां याति देवयजन-

देशे गच्छति। सविता: देवः विश्वा दुरिताः सर्वाणि पापानि अपबाधमानः विनाशयन् परावतः दूरदेशात्। 'परावतः' (नि० iii–26–5) इति दूरनामसु पठितत्वात्। तादृशात् द्युलोकात् आयाति यागदेशे आगच्छति ॥ प्रवता 'वन षण संभक्तौ' अस्मात् प्रपूर्वात् क्विप् (गमादीनामिति वक्तव्यम्' (पा० vi–4–40–1) इत्यनुनासिकलोपः। ततः तुक्। कृदुत्तरपदप्रकृतिस्वरत्वम्। उद्वता । उत्पूर्वात् वनतेः पूर्ववत्प्रक्रिया । यजतः। 'भृमृदृशि' (उ० iii—390) इत्यादिना यजतेः कर्मणि अतच्प्रत्ययः। विश्वा दुरिता । उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः ॥३॥

*स्कन्दस्वामी* :—प्रवता 'उपसर्गाच्छन्दसि धात्वर्थे' (v–1–118) इत्येवमर्थं वतिप्रत्ययः। शीघ्रयायिना। केन। सामर्थ्याद् रथेन। यात्युद्वता ऊर्ध्वगामिना। केन। सामर्थ्याद् रथेन। याति शुभ्राभ्यां शोभनाभ्याम्। यजतो यष्टव्यो यागार्हः। हरिभ्यामश्वाभ्याम्। यत्र यथा गन्तव्यं शीघ्रं वोर्ध्वं वा रथेनाश्वैर्वा तत्र तथा गच्छतीत्यर्थः। किञ्च, आ देवो याति सविता परावतः दूरादुदयगिरेः। अप विश्वा दुरिता दुरितानि अत्र तमोलक्षणानि बाधमानः अपनयन्। अथवापुण्यान्येव दुरितानि तान्यपि सविता बाधते। रश्मिसंस्पर्शस्य शुचित्वकरत्वादहनि च पापनिवृत्त्यर्थं प्रायश्चित्तानुष्ठानात् ॥ ३ ॥

*वेङ्कटमाधवः*—याति देवः प्रवणेन मार्गेण प्रातः। यात्यनन्तरमुन्नतः याति शोभनाभ्यामश्वाभ्या यष्टव्यः। आयाति देवः सविता दूरादपबाधमानो विश्वानि दुरितानि ॥३॥

Mm :—The brilliant god moves upward and moves downward,
The worshipful drawn by his brillant racers,
And from afar god Savitr approaches,
Driving away from us all that is evil.

---

अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम्।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥४॥

अभिऽवृतं। कृशनैः। विश्वऽरूपम्। हिरण्यऽशम्यम्। यजतः। बृहन्तम्।
आ। अस्थात्। रथम्। सविता। चित्रऽभानुः।
कृष्णा। रजांसि। तविषीम्। दधानः ॥४॥

*सायणः*—सविता रथम् आस्थात् आस्थितवान् आरूढवानित्यर्थः। कीदृशम्। अभीवृतम् अभितो वर्तमानम्। तथा कृशनैर्विश्वरूपं सुवर्णेन नानारूपं 'कृशनं

लोहम्' (नि० i-2-7) इति सुवर्णनामसु पाठात्। क्वचित् सुवर्णनिर्मितगज-पंक्तिः क्वचिदश्वपङ्क्तिः क्वचिन्मनुष्यपङ्क्तिरित्येवं बहुरूपत्वम्। हिरण्यशम्यम्। अश्वानां स्कन्धेषु रथयोजनवेलायां नियन्तुं प्रक्षेप्यमाणाः शङ्कवः शम्याः। ताः सुवर्णमय्यो रथे वर्तन्ते। बृहन्तं प्रौढम्। कीदृशः सविता। यजतः यष्टव्यः। चित्रभानुः विविधरश्मियुक्तः। कृष्णा रजांसि अन्धकारयुक्ततया कृष्णवर्णान् लोकानुद्दिश्य तमोनिवारणार्थं तविषीं बलं स्वकीयं प्रकाशरूपं दधानः॥ अभीवृतम्। अभितो वर्तते इत्यभीवृत्। 'वृतु वर्तने'। क्विपि 'नहिवृति' (पा० vi-3-116) इत्यादिना पूर्वपदस्य दीर्घत्वम्। विश्वरूपम्। विश्वानि रूपाणि यस्यासौ विश्वरूपः। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम्। हिरण्यशम्यम्। 'हर्य गतिकान्त्योः'। हर्यतेः कन्यन् हिर च' (उ० v-722) इति कन्यन् प्रत्ययो धातोर्हिरादेशश्च। नित्त्वादाद्युदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। आस्थात्। तिष्ठतेर्लुङि 'गातिस्था' इति सिचो लुक्। कृष्णा। 'कृषेर्वर्णे' (उ० iii-284) इति नक्प्रत्ययः। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। तविषीम्। तवतिः सौत्रो धातुः। 'तवतेर्णिद्वा' (उ० i-48) इति टिषच्। टित्त्वात् 'टिड्ढाणञ्' इत्यादिना ङीप्। व्यत्ययेन आद्युदात्तत्वम् वृषादित्वात् द्रष्टव्यम्। दधानः। शानचि 'अभ्यस्तनामादिः' इत्याद्युदात्तत्वम्॥४॥

*स्कन्दस्वामी*—(अभिवृतं) कृशनैः। हिरण्यनामैतत् हिरण्यैः। सुवर्णखचितमित्यर्थः। विश्वरूपम्। विश्वमिति बहुनाम सर्वपर्यायी वा। बहुरूप सर्वरूपम् (वा)। हिरण्यशम्यम्। वोढुरश्वस्यानड्डुहो वानपगमार्थं या निधीयते सा शम्येति प्रसिद्धा। सा हिरण्मयी यस्य तं हिरण्यशम्यम्। यजतो यागार्हम्। बृहन्तम् आस्थादातिष्ठति आस्थितवान् वा रथं सविता चित्रभानुर्विचित्रदीप्तिर्वा ……। कृष्णा कृष्णानि रजांसि तमांसि। तविषीम्। बलनामैतत्। तृतीयार्थे चात्र द्वितीया। स्वेन तेजसा बलेन। दधानः धारयन् निरुन्धन्नित्यर्थः॥४॥

*वेङ्कटमाधवः*—अभिवृतम्। परिवृतं हिरण्यैर्नानारूपं हिरण्मयशम्यं यष्टव्यो महान्तं रथमास्थितः सविता चित्रदीप्तिः कृष्णानि तेजांसि बलं च दधानः॥४॥

Mm.—God Savitṛ stepped on his jewelled chariot,
The strong, the many-hued, its pins all golden,
And he, the worshipful in brightest splendour,
Displays his strength across the darkness welkin.

---

वि जनाञ्छ्यावाः शितिपादो अख्यन् रथं हिरण्यप्रउगं वहन्तः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥५॥

वि । जनान् । श्यावाः शितिऽपादः अख्यन् । रथम् । हिरण्यऽप्रउगम् ।
वहन्तः । शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा ।
भुवनानि । तस्थुः ॥५॥

*सायण* :—श्यावाः एतन्नामकाः सूर्याश्वाः । 'श्यावाः सवितुः' (नि० i-15-8) इति निघण्टावुक्तत्वात् । ते च शितिपादः श्वेतैः पादैरुपेता हिरण्य-प्रउगम् । रथस्य मुखं ईषयोरग्रं युगबन्धस्थानं प्रउगमित्युच्यते । तच्चात्र स्वर्णमयं । तद्युक्तं रथं वहन्तः जनान् प्राणिनः वि अख्यन् विशेषेण प्रकाशित-वन्त इत्यर्थः । शश्वत् सर्वदा । विशः प्रजा दैव्यस्य इतरदेवसंबन्धिनः सवितुः प्रेरकस्य सूर्यस्य उपस्थे समीपस्थाने तस्थुः स्थितवत्यः । न केवलं प्रजाः किं तर्हि विश्वा भुवनानि सर्वे च लोकाः प्रकाशाय सूर्यसमीपे तस्थुः ॥ शितिपादः । शितयः श्वेतवर्णाः पादाः येषां ते शितिपादाः । 'सुपां सुलुक०' इति जसः सुआदेशः । यद्वा । शितिः श्वेतवर्णः स्फटिकादिः । स इव पादो येषां ते । 'पादस्य लोपोऽहस्त्यादिभ्यः' (पा० v-4-138) इति समासान्तपादशब्दस्या-न्त्यलोपः । उपमानात् इति हि तत्रानुवर्तते । पादशब्दस्य वृषादित्वादाद्युदात्त-त्वम् । तस्य बहुव्रीहौ समासे' शितेर्नित्याबह्वज्बहुव्रीहावभसत् (vi-2-138) इत्युत्तरपदप्रकृतिस्वरत्वम् । अख्यन् । ख्यातेर्लुङि 'अस्यतिवक्ति' इत्यादिना च्लेः अङादेशः । हिरण्यप्रउगम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वहन्तः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः । दैव्यस्य । तस्येदमित्यर्थे "देवाद्यञञौ" (पा० iv-1-85-3) इति देवशब्दात् प्राग्दीव्यतीयो यञ् । तद्धितेष्वचामादेः (पा० vii-2-117) इति आदिवृद्धिः । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । उपस्थे । 'आतश्चोपसर्गे' इति कः । 'आतो लोप इटि च' इति आकारलोपः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥५॥

*स्कन्दस्वामी*—जनान् मनुष्यान् श्यावः श्याववर्णाः शितिपादः श्वेतपादाः अश्वाः व्यख्यन् विविधं प्रकाशयन्ति सवितुः स्वभूतं रथं हिरण्यप्रउगम् । यत्र रथो निबध्यते (उन्धि ?) (युगबन्धन) प्रदेशः प्रउगमित्युच्यते । स हिरण्मयो यस्य तं हिरण्यप्रउगं वहन्तः । किञ्च, शश्वत् । बहुनामैतत् । नित्यपर्यायो वा । बहु (नो?शो) नित्यं वा । विशः मनुष्याः सवितुर्दैव्यस्य । देव एव दैव्यः । अथवा देवेषु दिवि वा भवो दैव्यः तस्य दैव्यस्य । उपस्थे उपस्थाने । विश्वा भुवनानि सर्वाणि च भूतानि । तस्थुः स्थिताः । बहवो मनुष्याः सर्वाणि भूतजातानि सवितारमुपतिष्ठन्त इत्यर्थः ॥५॥

वेङ्कटमाधवः —व्यख्यन् जनान् श्याववर्णाः श्वेतपादा हिरण्मयप्रउगं रथं वहन्तोऽश्वाः । सदा सवितुर्दिवि भवस्योपस्थे विशो व्याप्ता दिशस्तिष्ठन्ति, सर्वाणि च भुवनानि ॥५॥

Mm—Black with white hoofs the horses shone upon us,
Dragging along the golden—shafted chariot,
All men, all creatures here for ever rested,
Safe in the lap of Savitr in heaven.

तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुर् इह ब्रवीतु य उ तच्चिकेतत् ॥६॥

तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने ।
विराषाट् । आणिम् । न रथ्यम् । अमृता । अधि । तस्थुः । इह ।
ब्रवीतु । यः । ऊं इति । तत् । चिकेतत् ।

सायणः—द्यावः स्वर्गोपलक्षिताः प्रकाशमाना लोकाः तिस्रः त्रिसंख्याकाः सन्ति । तत्र द्वौ लोकौ सवितुः सूर्यस्य उपस्थे समीपस्थाने वर्तेते; द्युलोकभूलोकयोः सूर्येण प्रकाशितत्वात् । एका मध्यमा भूमिरन्तरिक्षलोकः यमस्य भुवने पितृपतेर्गृहे विराषाट् विरान् गन्तॄन् सहते । प्रेताः पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः । अमृता अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि जलानि वा अधि तस्थुः सवितारमधिगम्य स्थितानि । तत्र दृष्टान्तः । रथ्यम् आणिं न । रथाद्बहिः अक्षछिद्रे प्रक्षिप्तः कीलविशेष आणिरित्युच्यते । रथसम्बन्धिनम् आणिमधिगम्य यथा रथस्तिष्ठति तद्वत् । यः तु मानवः तत् सवितृरूपं चिकेतत् जानाति स मानव इह ब्रवीतु कथयतु । केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः ॥ तिस्रः । 'तिसृभ्यो जसः' [पा० vi–1–166] इति विभक्तेरुदात्तत्वम् । द्वौ संहितायामावादेशे 'लोपः शाकल्यस्य' इति वकारलोपः । उपस्था । 'आड्याजयारामुपसंख्यानम' (पा० vii–1–39–1) इति सप्तम्या आङादेशः । 'आङोऽनुनासिकश्छन्दसि' (पा० (vi–1–126) इति प्रकृतिभावः । विराषाट् । 'वृञ् वरणे' 'घञर्थे कविधानम्०' (पा० iii–3–58–4) इति कर्मणि कः । 'बहुलं छन्दसि' (पा० vii–1–1(3) इति इत्वम् । तथा सति वर्यन्ते इति विरा इत्युक्तं भवति । तान् सहते इति विराषाट् । 'छन्दसि सहः' (पा० iii–

2-63) इति सहेर्ण्विः। 'सहेः साडः सः" (पा० viii-3-56) इति षत्वम्। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः। रथ्यम्। रथस्येदं रथ्यम्' 'रथाद्यत्' (पा० iv-3-121) इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। अमृता। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। चिकेतत्। 'कित् ज्ञाने' लेटि अडागमः। 'इतश्च लोपः' इति इकारलोपः। जुहोत्यादित्वात् श्लुः। लघूपधगुणः। 'अनुदात्ते च' (पा० vi-1-190) इति अभ्यस्तस्याद्युदात्तत्वम्। यद्वृत्तयोगादनिघातः ॥६॥

*स्कन्दस्वामी*—तिस्रो द्यावः। द्युशब्दोऽत्र दिवोऽवयवेषु देवस्थानेषु वर्तते। त्रीणि दिवोऽवयवभूतानि स्थानानि सवितुः। अथवा इत एव दर्शनाद् दिवां बहुत्वं प्रतिपत्तव्यम्। तिस्रो दिवः सवितुः स्वभूताः। तासां द्वौ द्वे। उपस्था समीपे सवितुः। एका यमस्य। भुवने लोके। विराषाडिति विपूर्वस्य राजतेर्दीप्त्यर्थस्येदं रूपम्। विविधं दीप्ताः। अथवा सुमतात्पर्यात् त्रयो लोका अत्र तिस्रो दिव उच्यते। तासां द्वे समीपे द्यौरन्तरिक्षं च। एका तु पृथिवी यमस्य भुवने। अग्निरत्र यम उच्यते। 'यमो ह जातो यमो जनित्वमि'ति यथा। तस्य स्वभूते पार्थिवे लोके। विराषाट् विविधं दीप्ता। किञ्च, आणिं न रथ्यम्। चक्रस्याक्षात्निर्गमननिरोधार्थः कील आणिरुच्यते। रथे भवो रथ्यः। यथा रथ्यमाणिं सर्वाणि रथाङ्गान्याश्रितानि, एवं सवितारममृता। अमृतमित्युदकनाम। रश्म्याहृतान्युदकानि। अथवा अमृतशब्दो देववचनः। प्रथमाबहुवचनस्यायमाकारः। अमृताः देवाः। अधितस्थुः अधितिष्ठितवन्तः। आश्रिता इत्यर्थः। इह लोके सभायां वा ब्रवीतु। य उ तत्। उकारः पादपूरणः। यश्चिकेतत् ॥६॥

*वेङ्कटमाधवः*—तिस्रो द्यावः। तिस्रो द्यावः सन्ति। तत्र द्वे सवितुरुपस्थे उत्सङ्गे भवतः। अथापरा यमस्याग्ने भुवनेऽपि राजते वैद्युतस्य। चक्रनिर्गमननिरोधार्थमाणिं रथाक्षान्ते निहितं रथाङ्गानीवामृतानि कञ्चनाधितिष्ठन्ति। यस्तज्जानाति स इह तद् ब्रवीतु। अग्निना सवित्रा चोभयतः स्थिताभ्यामाणिभ्यामिव तिस्रो द्यावो ध्रियन्तेऽविनष्टा इति। यद्वा सर्वेषाममरणानि सवितरि तिष्ठन्तीति "तत् सविता वोऽमृतत्वमासुवदि"ति मन्त्रः ॥६॥

Mm. :—Three skies are there of Savitṛ, two places,
And one in Yama's realm that holds our heroes,
Immortals mounted on the chariot's axle,
Let him speak out who understands his saying.

वि सुपर्णो अन्तरिक्षाण्यख्यद् गभीरवेपा असुरः सुनीथः ।
क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥७॥

वि । सुऽपर्णः । अन्तरिक्षाणि । अख्यत् । गभीरऽवेपाः । असुरः ।
सुऽनीथः । क्व । इदानीम् । सूर्यः । कः । चिकेत ।
कतमाम् । द्याम् । रश्मिः । अस्य । आ । ततान ॥७॥

सायणः—सुपर्णः शोभनपतनः सूर्यस्य रश्मिः । 'सुपर्णाः' इति पञ्चदश रश्मिनामानि (नि० i-5-15) इति तन्नामसु पठितत्वात् । अन्तरिक्षाणि अन्तरिक्षलोकलक्षितानि लोकत्रयस्थानानि वि अख्यत् विशेषेण ख्यापितवान् प्रकाशितवान् । कीदृशो रश्मिः । गभीरवेपाः गम्भीरकम्पनः । रश्मेः प्रकम्पनं चलनं केनापि द्रष्टुमशक्यमित्यर्थः । असुरः सर्वेषां प्राणदः । तथा चान्यत्र आम्नायते—'सर्वेषां भूतानां......' (तै० आ० i-14-1) इति । सुनीथः सुनयनः शोभनप्रापणः । मार्गप्रकाशनेन अभीष्टदेशं प्रापयतीत्यर्थः । तादृशरश्मियुक्तः सूर्यः इदानीं रात्रौ क्व कुत्र वर्तते । तदेतद्रहस्यं कश्चिकेत को जानाति । न कोऽपीत्यर्थः । अस्य सूर्यस्य रश्मिः कतमां द्याम् आ ततान कं द्युलोकं रात्रौ व्याप्तवान् । एतदपि को जानाति ॥ सुपर्णः 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । गभीरवेपाः । 'टुवेपृ कम्पने ।' असुन् । गम्भीरं वेपो यस्य । पूर्वपदप्रकृतिस्वरत्वम् । असुरः । 'असु क्षेपणे' । अस्यति शत्रून् इत्यसुरः । 'असेरुरन्' (उ० i-42) । नित्त्वादाद्युदात्तत्वम् । यद्वा । असून् प्राणान् राति ददातीत्यसुरः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । सुनीथः । 'णीञ् प्रापणे' । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ० ii-159) इति क्थन् । प्रादिसमासे थाथादिना उत्तरपदान्तोदात्तत्वम् । इदानीम् । इदंशब्दात्सप्तम्यर्थे 'दानीं च' (पा०, v-3-18) इति दानीं प्रत्ययः । 'इदम इश्' इति इदंशब्दस्य इशादेशः । प्रत्ययाद्युदात्तत्वम् । सूर्यः । 'षू प्रेरणे' । सुवतीति सूर्यः । 'राजसूयसूर्य' इत्यादिना रुडागमसहितः क्यप्प्रत्ययो निपातितः । लिट् । कतमां किंजातीयाम् । 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा० v-3-93) इति किंशब्दात् डतमच् । डित्त्वात् टिलोपः । 'चितः' इत्यन्तोदात्तत्वम् ॥७॥

स्कन्दस्वामी— सुपर्णः सुपतनः सुगमनः सविता । अथवा सुपर्ण इति रश्मिनाम । सामर्थ्याच्चान्तर्णीतमत्वर्थः । सुपर्णवान् रश्मिवान् । अन्तरिक्षाणि अन्तरिक्षावयवाः अवान्तरिक्षप्रदेशा उच्यन्ते । बहून्येव वान्तरिक्षाणि । अन्तरिक्षसाहचर्याद् वा त्रयोऽपि लोका अन्तरिक्षाण्युच्यन्ते । तानि व्यख्यत् विविधं प्रकाशितवान् । गभीरवेपाः । गभीरं दुरवगाहम् । वेप इति कर्मनाम । गभीरकर्मा । असुरः प्रज्ञावान् । सुनीथः प्रशस्यनयनोपेतः । प्रशस्यः ।

केदानीम् । अनयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । इदानीमिति च रात्र्यभिप्रायमेतत् । यो दिवोऽन्तरिक्षाणि व्यख्यत्, केदानीं रात्रौ सूर्यः सर्ता गन्ता सविता । कस्तच्चिकेत जानाति । यो जानाति स आचष्टामित्यर्थः । कतमा द्यां दिवोऽवयवं द्युलोकमेव वा । लोकमात्रवचनो द्युशब्दः । कतमं लोकम् । रश्मिरस्य स्वभूतः । आततान तनोति । तनोतिरत्र सामर्थ्यात् प्रकाशनार्थः । प्रकाशयति । अथवा द्यामिति द्वितीयानिर्देशात् कर्मप्रवचनीयप्रतिशब्दाध्याहारः । कतमां द्यां प्रति रश्मिरस्याततान आत्मानं विस्तारयति ॥७॥

*वेङ्कटमाधवः*—वि सुपर्णः । व्यख्यच्छोभनपतनोऽन्तरिक्षाणि त्रीणि गम्भीरवेगः प्राज्ञः प्रशस्यः । स इदानीं सविता सुवीर्यः क भवति । रात्रौ कश्चैनं जानाति । कतमा च द्यामस्य रश्मिराततानेति रात्रौ पृच्छति ॥७॥

Mm. :—The glorious bird has lighted up the heaven,
The guide divine whose wings are deeply sounding,
Where is the sun ? who knows it now, to tell us,
Which of the heavens his ray may have illumined ?

---

अष्टौ व्यख्यत्ककुभः पृथिव्यास् त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देव आगाद् दधद्रत्ना दाशुषे वार्याणि ॥८॥

अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना ।
सप्त । सिन्धून् । हिरण्यऽअक्षः । सविता । देवः । आ ।
अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥८॥

*सायणः*—पृथिव्याः सम्बन्धिनीः अष्टौ ककुभः प्राच्याद्याश्चतस्रो दिश आग्नेय्याद्याश्चतस्रो विदिश इत्येवमष्टौ दिशः व्यख्यत् सविता प्रकाशितवान् । तथा योजना प्राणिनः स्वस्वभागेन योजयितॄन् धन्व अन्तरिक्षोपलक्षितान् त्री त्रिसंख्याकान् पृथिव्यादिलोकान् सप्त सिन्धून् गङ्गादिनदीः समुद्रान्वा सविता व्यख्यत् । हिरण्याक्षः । हितरमणीयचक्षुर्युक्तो हिरण्याक्षो वा सविता देवः आगात् इह आगच्छतु । किं कुर्वन् । दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि रत्नानि दधत् प्रयच्छन् ॥ अख्यत् ख्यातेर्लुङि 'अस्यतिवक्ति' इत्यादिना च्लेः अङादेशः । त्री 'शेश्छन्दसि बहुलं' इति शेर्लोपः । धन्व । 'रिवि रवि धवि गत्यर्थाः' । 'इदितो नुम्धातोः' इति नुम् । अस्मात् 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन् । 'सुपां सुलुक्' इति विभक्तेर्लुक्, नलोपः । प्रत्ययस्य नित्त्वादाद्युदात्तत्वम् । योजना । योजयन्ति प्राणिन उपभोगेन योजनानि । नन्द्यादिलक्षणो ल्युः । 'णेरनिटि' इति णिलोपः । पूर्ववत् शेर्लोपः । हिरण्याक्षः । हिरण्यमयान्यक्षीणि यस्यासौ हिरण्याक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोः' (पा० v-4-113) इति समासान्तः षच् प्रत्ययः । अगात् । एतेर्लुङि 'इणो गा

लुङि' (पा० ii–4–45) इति गादेशः। 'गातिस्था' इति सिचोलुक्। दधत्। शपरि 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः। 'श्नाभ्यस्तयोरातः' इति आकारलोपः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। दाशुषे। 'दाश्वान्साह्वान्०' इत्यादिना क्वसुप्रत्ययान्तो निपातितः। चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम्। परपूर्वत्वम्। 'शासिवसिघसीनां च' इति षत्वम्। वार्याणि। 'वृङ् संभक्तौ'। ऋहलोर्ण्यत्। 'ईडवन्द' इत्यादिनाद्युदात्तत्वम् ॥८॥

*स्कन्दस्वामी*—अष्टौ व्यख्यत्। ककुभः दिङ्नामैतत्। दिशः पृथिव्याः सम्बन्धिनीः। न च केवलाः। किन्तर्हि। त्री धन्व। त्रीणि च धन्वानि। धन्वेत्यन्तरिक्षनाम। अत एव च दर्शनादन्तरिक्षाणां त्रित्वं प्रतिपत्तव्यम्। तदवयवेषु चाद्यमध्यान्तेषु धन्वशब्दो वर्तते। साहचर्याद् वा त्रयो लोकास्त्रीणि धन्वान्युच्यन्ते। योजना। युज्यन्त एभिः मनुष्यास्तत्फलैरिति योजनानि कर्माणि। तानि च सप्त सिन्धून्। नदीनामैतत्। शोषणात् महतः प्रवाहभूतान् वहून्। अथवा सप्तसंख्यायोगात् सिन्धवोऽत्र रश्मय उच्यन्ते। तृतीयार्थे द्वितीया। सप्तमी रश्मिभिर्व्यख्यदित्यर्थः। परोऽर्धर्चो भिन्नमेव वाक्यम्। यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या। यो व्यख्यत् ककुभः स हिरण्याक्षः। हिरण्मये एव हिरण्मयसदृशे वा अक्षिणी यस्य स हिरण्याक्षः। सविता देव आगात् उदित इत्यर्थः। दधत्। ददत्। रत्ना धनानि। दाशुषे यजमानाय वार्याणि वरणीयानि उत्कृष्टानि ॥८॥

*वेङ्कटमाधवः*—अष्टौ दिशो व्यख्यदन्तरिक्षसम्बन्धिनीस्त्रीणि चान्तरिक्षाणि कार्येष्ववकाशप्रदानेन योजकानि सप्त च सिन्धून् हिरण्याक्षः सविता देव आगात् प्रयच्छन् रत्नानि वरणीयानि यजमानाय ॥८॥

Mm. :—The earth's eight quarters has the sun illumined,
Three miles of land and all the seven rivers.
God Savitṛ, the golden-eyed, has neared us,
And brought choice treasures to the liberal mortals.

---

हिर॑ण्यपाणिः सवि॒ता विच॑र्षणिरु॒भे द्यावा॑पृथि॒वी अ॒न्तरी॑यते।
अपामी॑वां॒ बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्याम्ृ॑णोति ॥९॥
हिर॑ण्यऽपाणिः। स॒वि॒ता। विऽच॑र्षणिः। उ॒भे इति॑। द्यावा॑पृथि॒वी इति॑।
अ॒न्तः। ई॒य॒ते॒। अप॑। अमी॑वाम्। बाध॑ते। वेति॑। सूर्य॑म्।
अ॒भि। कृ॒ष्णेन॑। रज॑सा। द्याम्। ऋ॒णो॒ति॒ ॥९॥

सायणः—हिरण्यपाणिः सुवर्णमयहस्तयुक्तः। यद्वा। यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान्। विचर्षणिः विविधदर्शनयुक्तः। विचर्षणिः पश्यत्यर्थः।

'विचर्षणि विश्वचर्षणिः' (नि० iii-11-6) इति तन्नामसु पाठात्। सविता देवः उभे द्यावापृथिवी अन्तः उभयोर्लोकयोर्मध्ये ईयते गच्छति। अमीवा रोगादिबाधाम् अप बाधते सम्यक् निराकरोति। तथा सूर्यं वेति गच्छति। यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः। कृष्णेन तमसः कर्षकेण निवर्तकेन रजसा तेजसा द्याम् आकाशम् अभि ऋणोति सर्वतो व्याप्नोति॥ द्यावापृथिवी। 'दिवसश्च पृथिव्याम्' (पा० vi-3-30) इति चशब्दात् दिव्शब्दस्य द्यावादेशः। 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम्। 'नोत्तरपदेऽनुदात्तादौ' (पा० vi-2-142) इति न निषेधः। 'अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदस्तत्वात्। ईयते। 'ईङ् गतौ'। 'तिङ्ङतिङः' इति निपातः। बाधते च वेति चेति समुच्चयार्थप्रतीतेः चशब्दस्याप्रयोगात् 'चादिलोपे' विभाषा इति। निघातप्रतिषेधः। वेति। 'वी गतिप्रजनकान्त्यशनखादनेषु' अदादित्वात् शपो लुक्। तिपः पित्त्वादनुदात्तत्वे धातुस्वरः। यद्यप्येषा द्वितीया तथापि तिङ्परत्वात् निघाताभावः। ऋणोति। 'ऋणु गतौ'। तनादित्वात् उः। तनादिषु करोतेरेव गुणो नान्येषामिति आपिशलिमतेन गुणाभावः॥६॥

*स्कन्दस्वामी*—हिरण्यपाणिः। हिरण्मयौ पाणी यस्य स हिरण्यपाणिः। अत्र च शाङ्खायनाः इतिहासब्राह्मणमधीयते—"अथ यत्र ह तद्देवा यज्ञमतन्वत। तत् सवित्रे प्राशित्रं परिजह्रुः। तस्य पाणी प्रचिच्छेद। तस्मै हिरण्मयौ प्रतिदधुः। तस्माद्धिरण्यपाणिरिति स्तुत" इति। स हिरण्यपाणिः सविता विचर्षणिः कृताकृतस्य विद्रष्टा। उभे द्यावापृथिवी। अन्तः। अधिकरणश्रुतेर्योग्यक्रियाध्याहारः। मध्येऽवस्थितः। ईयते गच्छति। मध्ये स्थितः उभे अपि द्यावापृथिव्यौ ज्योतिषा व्याप्नोतीत्यर्थः। किञ्च, अपामीवां बाधते। अमीवा हिंसिता शत्रुर्यजमानस्य। तमो वा प्रकाशस्य हिंसितृत्वात्। तम् अपबाधते। वेतिर्गतिकर्मा। अयं गच्छति च। सूर्यम्। प्रथमार्थे द्वितीया। सूर्यः सर्ता। कं प्रति सामर्थ्यादस्तपर्वतम्। अथवा सर्तव्यत्वात् सूर्यप्रतिसम्बन्धाद् वा सूर्योऽस्तपर्वत इहोच्यते। तं प्रति अस्तं गच्छतीत्यर्थः। ततश्चोत्तरकालं कृष्णेन रजसा तमसा द्यामृणोति। ऋणोतिर्गतिकर्मा। सामर्थ्याच्चान्तर्णीतण्यर्थः। अभिगमयति व्यापयतीत्यर्थः॥६॥

*वेङ्कटमाधवः*—हिरण्यपाणिः। हिरण्मयपाणिः सविता जगतोऽपि द्रष्टा द्यावापृथिव्योरुभयोर्मध्येन गच्छति। अपबाधते च रक्षः। सूर्यं च प्राप्नोति। कृष्णेन तेजसा सूच्येव द्युलोकं विध्यति॥६॥

Mm.:—The golden-handed Savitr who has never rested.
Is moving forward, straight 'tween earth and heaven,
He strikes disease and hales the sun from yonder;
Through darkest clouds up to the sky he hastens.

हिर॑ण्यहस्तो॒ असु॑रः सुनी॒थः सु॑मृळी॒कः स्ववाँ॑ यात्व॒र्वाङ् ।
अ॒प॒सेध॑न्र॒क्षसो॑ यातु॒धाना॒नस्था॑द्दे॒वः प्र॑तिदो॒षं गृ॑णा॒नः ॥१०॥

हिर॑ण्यऽहस्तः । असु॑रः । सु॒ऽनी॒थः । सु॒मृ॒ळी॒कः । स्वऽवा॑न् ।
या॒तु । अ॒र्वाङ् । अ॒प॒ऽसेध॑न् । र॒क्षसः॑ । या॒तु॒ऽधाना॑न् ।
अस्था॑त् । दे॒वः । प्र॒ति॒ऽदो॒षम् । गृ॒णा॒नः ॥१०॥

सायणः—हिरण्यहस्तः असुरः प्राणदाता सुनीथः सुष्ठुनेता प्रशस्य इत्यर्थः । 'सुनीथः पाकः' (नि० iii–6–7) इति प्रशस्यनामसु पाठात् । सुमृळीकः सुष्ठु सुखयिता स्ववान् धनवान् अर्वाङ् अभिमुखः कर्मदेशे गच्छतु । किं चायं देवः प्रतिदोषं प्रतिरात्रिः गृणानः स्तूयमानः अस्थात् स्थितवान् । किं कुर्वन् । रक्षसः बाधकत्वेन रक्षणनिमित्तभूतान् 'रक्षो रक्षितव्यमस्मात्' (नि० iv–18) इति यास्कः । यातुधानान् असुरान् अपसेधन् निराकुर्वन् । हिरण्यहस्तादयो गताः । सुमृळीकः । सुष्ठु मृळीकं सुखं यस्यासौ तथोक्तः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । स्ववान् (स्वम् अस्यास्तीति स्ववान्) । 'मादुपधायाः' इति वत्वम् । संहितायां नकारस्य 'दीर्घादटि समानपादे' इति रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । रोर्यत्वम् । यलोपश्च । अपसेधन् । 'षिधु गत्याम्' । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्षसः । 'रक्ष पालने' इत्यस्मात् अपादाने औणादिकः असिप्रत्ययः । यद्वा रक्षन्त्यनेनेति रक्षो बलम् । करणेऽसुन् । तदेषामस्ति इति रक्षस्विनः । मत्वर्थप्रत्ययलोपश्छान्दसः । प्रत्ययस्वरः । यातुधानान् । 'यत निकारोपसंस्कारयोः' । तस्मात् ण्यन्तात् औणादिको भावे उप्रत्ययः । यातवो यातना एषु धीयन्ते इति यातुधानाः । अधिकरणे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अस्थात् । 'गातिस्था' इति सिचो लुक् । प्रतिदोषम् । दोषांदोषाम् । प्रति वीप्सालक्षणे यथार्थे । अव्ययीभावः । गृणानः । 'गॄ शब्दे' । कर्मणि लटः शानच् । व्यत्ययेन श्ना । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । 'चितः' इत्यन्तोदात्तत्वम् ॥१०॥

स्कन्दस्वामी:—हिरण्यहस्तो असुरः प्रज्ञावान् सुनीथः प्रशस्यः सुमृळीकः सुसुखः स्ववान् धनवान् यात्वर्वाङ् अस्मदभिमुखम् । अपसेधन् । सेधतिरत्र सामर्थ्याद् वधार्थः । गत्यर्थो नान्तर्णीतण्यर्थः । अपघ्नन् अपगमयन् वा रक्षसः राक्षसान् । कीदृशान् । यातुधानान् राक्षसान् । रक्षश्शब्देनैवोक्तत्वाद्विशेषणार्थः । क्रियाशब्दोऽयं वा । यातु हिंसा, तस्यां निधातव्या स्थापयितव्या यातुधानाः तान् यातुधानान् । हिंसार्हानित्यर्थः । आगत्य च अस्थात् ।

सोऽयमर्थः सुष्ठु । तस्मिन्नु अस्मदीयायां वेलायां प्रतिदोषम् । दोषेति रात्रिनाम । अत्र साहचर्या-दहनि वर्तते । प्रत्यहम् । गृणानः व्यत्ययेनायं कर्मणि कर्तृशब्दः । गीयमानः स्तूयमानोऽस्माभिः ॥१०॥

वेङ्कटमाधवः—हिरण्यहस्तो बली प्रशस्यः सुखयिता धनवान् सवितास्मदभिमुखं इहायातु । रक्षसो हिंसानिधानान् निषेधन् उदस्थाद्देवः प्रतिरात्रमस्माभिः स्तूयमानः ॥१०॥

Mm. :—The guide divine, with golden arms appearing.
May come to us, the rich and gracious giver,
Praised every night. the god did come towards us.
Chasing away the noxious evil spirits.

---

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥११॥

ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः ।
अन्तरिक्षे । तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः ।
रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥११॥

सायणः—हे सवितः ते तव पन्था मार्गाः पूर्व्यासः पूर्वसिद्धाः । अरेणवः धूलिरहिताः अन्तरिक्षे सुकृताः सुष्ठु सम्पादिताः । सुगेभिः सुष्ठु गन्तुं शक्यैः तेभिः पथिभिः तैर्मार्गैरागत्य अद्य अस्मिन् दिने नः अस्मान् रक्ष च पालनमपि कुरु । तथा हे देव नः अस्मान् अनुष्ठातॄन् अधि ब्रूहि च देवानामग्रेऽधिकत्वेन कथय च ॥ पन्थाः । 'सुपां सुलुक्' इति जसः सुः । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । पूर्व्यासः । पूर्वैः कृताः पूर्व्याः । 'पूर्वैः कृतमिनियौ च' (पा० iv–4–133) इति यः । प्रत्ययस्वरः । असुगागमः । अरेणवः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सुकृताः । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । सुष्ठु गच्छन्त्येष्विति सुगाः । 'सुदुरोरधिकरणे' (पा० iii–2–48–3) इति गमेर्डप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्ष । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः ॥११॥

स्कन्दस्वामी—ये ते पन्थाः पन्थानः हे सवितः । पूर्व्यासः पूर्वं चिरन्तनाः । अरेणवः पांसुवर्जिताः सुकृताः शोभनाः कृताः । केन सामर्थ्यात् त्वयैव विधात्रा । क्व । अन्तरिक्षे । तेभिः । न इति तादर्थ्ये चतुर्थी । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । तैरस्मदर्थमागत्य ।

अद्य। कैः। पथिभिः। कीदृशैः। सुगेभिः सुगमनैः। रक्ष च। नः अस्मान्। अधि च ब्रूहि। अधिवचनमाज्ञापनम्। आज्ञापय च यदाज्ञापयितव्यं हे देव ॥११॥

वेङ्कटमाधवः—ये तव मार्गाश्चिरन्तना रेणुवर्जिताः सुष्ठु कृता अन्तरिक्षे, तैरस्मान् पथिभिः सुगमैरद्य रक्ष। अपि च अस्मानधिब्रूहि। पुनर्न इति पूरणम् ॥११॥

Mm.:—O Savitr, come hither on thy pathways,
The old, well-made ones, dustless in the heavens,
And on those paths be our own sure protector,
And grant to us today thy gracious blessing!

---

3. I-85.

गोतमस्यार्षम्। पञ्चमीद्वादश्यौ त्रिष्टुभौ, शिष्टाः जगत्यः। मरुतो देवताः।

प्र ये शुम्भन्ते जनयो न सप्तयो यामन्रुद्रस्य सूनवः सुदंससः।
रोदसी हि मरुतश्चक्रिरे वृधे मदन्ति वीरा विदथेषु घृष्वयः ॥१॥

प्र। ये। शुम्भन्ते। जनयः। न। सप्तयः। यामन्। रुद्रस्य। सूनवः। सुऽदंससः। रोदसी इति। हि। मरुतः। चक्रिरे। वृधे। मदन्ति। वीराः। विदथेषु। घृष्वयः ॥१॥

सायणः—ये मरुतः यामन् यामनि गमने, निमित्तभूते सति प्र शुम्भन्ते प्रकर्षेण स्वकीयान्यङ्गानि अलंकुर्वन्ति जनयो न जाया इव। यथा योषितः स्वकीयान्यङ्गानि अलंकुर्वन्ति तद्वत्। कीदृशा मरुतः। सप्तयः सर्पणशीलाः रुद्रस्य सूनवः। रोदयति सर्वमन्तकाले इति रुद्रः महेश्वरः। तस्य पुत्राः। सुदंससः शोभनकर्माणः। एतदेवोपपादयति। हि यस्मात् मरुतः रोदसी द्यावापृथिव्यौ वृधे वृष्टिप्रदानादिना वर्धनाय चक्रिरे कृतवन्तः। अतः सुदंससः इत्यर्थः। वीराः विशेषेण शत्रुक्षेपणशीलाः। घृष्वयः घर्षणशीलाः। महीरुह-शिलोच्चयादेर्भञ्जका इत्यर्थः। एवंभूतास्ते मरुतः विदथेषु विदन्त्येषु यष्टव्यतया देवानिति विदथा यज्ञाः। तेषु मदन्ति सोमपानेन हृष्यन्ति॥ शुम्भन्ते। 'शुभ् शुम्भ् दीप्तौ'। भौवादिकः। जनयः जायन्ते आस्वपत्यानीति जनयो. जाया। 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः। यामन्। 'या प्रापणे' कृत्यल्युटो बहुलम् इति बहुलवचनात् 'आतो मनिन्' इति भावे मनिन्। 'सुपां सुलुक्' इति सप्तम्याः लुक्। सुदंससः। दंसः इति कर्मनाम। शोभनं दंसो येषाम्। 'सोर्मनसी अलोमपसी' इत्युत्तरपदाद्युदात्तत्वम्। चक्रिरे। 'हि च' इति निघातप्रतिषेधः। वृधे। 'वृधु वृद्धौ'। संपदादिलक्षणो भावे क्विप्। 'सावेकाचः' इति विभक्तेरुदात्तत्वम्।

मदन्ति 'मदी हर्षे'। श्यनि प्राप्ते व्यत्ययेन शप्। पादादित्वात् निघाताभावः। विदथेषु। 'विद् ज्ञाने' 'रुविदिभ्यां कित्' इति अथप्रत्ययः। घृष्वयः। 'घृषु संघर्षे'। 'कृविघृष्वि' इत्यादिना विन्प्रत्ययान्तो निपात्यते ॥१॥

*वेङ्कटमाधवः*—प्रकर्षेण। अलङ्कुर्वन्ते। ये। जायाः। इव। अश्वाः। इव। च। गमने। रुद्रस्य। पुत्राः। सुकर्माणः। द्यावापृथिव्योः। हि। मरुतः। चक्रिरे। वर्धनाय। मदन्ति च। वीराः। यज्ञेषु। घर्षणशीलाः। वृक्षाणामिति ॥१॥

Mm. :—Those who glance forth like wives and yoke-fellows,
The powerful sons of Rudra on their way,
They, the Maruts have indeed made heaven and earth to grow,
They, the strong and wild, delight in the sacrifices

---

त उक्षितासो महिमानमाशत दिवि रुद्रासो अधि चक्रिरे सदः।
अर्चन्तो अर्कं जनयन्त इन्द्रियम् अधि श्रियो दधिरे पृश्निमातरः ॥२॥

ते। उक्षितासः। महिमानम्। आशत। दिवि। रुद्रासः। अधि।
चक्रिरे। सदः। अर्चन्तः। अर्कम्। जनयन्तः। इन्द्रियम्।
अधि। श्रियः। दधिरे। पृश्निऽमातरः ॥२॥

*सायणः*—ये पूर्वोक्तगुणविशिष्टाः ते मरुतः उक्षितासः देवैरभिषिक्ताः सन्तः महिमानं महत्त्वं आशत आप्नुवन्। रुद्रासः रुद्रस्य पुत्राः उपचाराज्जन्ये जनकशब्दः। ते रुद्रपुत्राः मरुतः दिवि द्योतमाने नभसि सदः सदनं स्थानम् अधि चक्रिरे अधिकं सर्वोत्कृष्टं कृतवन्तः। अर्कम् अर्चनीयमिन्द्रियम् अर्चन्तः पूजयन्तः इन्द्रियम् इन्द्रस्य लिङ्गं वीर्यं जनयन्तः। 'प्रहर भगवो…' (ऐ० ब्रा० iii–20) इत्येवंरूपेण वाक्येनोत्पादयन्तः। पृश्निमातरः पृश्नेर्नानारूपायाः भूमेः पुत्राः मरुतः श्रियः ऐश्वर्याणि अधिदधिरे आधिक्येनाधारयन्॥ उक्षितासः। 'उक्ष सेचने'। कर्मणि निष्ठा। 'आज्जसेरसुक्'। महिमानम्। महच्छब्दात् पृथ्वादिलक्षण इमनिच्। 'टेः' इति टिलोपः। आशत 'अशू व्याप्तौ'। लङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। इन्द्रियम् 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टम्' (पा० v–2–93) इति घच्प्रत्ययान्तो निपात्यते। पृश्निमातरः। प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमिः। श्रूयते च 'इयं वै पृश्नि' (तै० ब्रा० i–4–1–5) इति। 'घृणिपृश्नि' इत्यादौ निपातनात् अभिमतरूपसिद्धिः। पृश्निर्माता येषां ते तथोक्ताः। 'ऋतश्छन्दसि' (पा० v–4–158) इति समासान्तस्य कपः प्रतिषेधः ॥२॥

वेङ्कटमाधवः—ते वर्षबिन्दुभिः। सिक्ताः। महत्त्वम्। आपन्। दिवि च। अपि। सदनम्। अकुर्वन्। अर्चन्तः। अर्चनीयमिन्द्रम्। बलम्। श्रियः। अपि दधिरे॥२॥

Mm.:—When grown up, they attained to greatness,
The Rudras have established their seat in the sky.
While singing their songs and increasing their vigour,
The sons of Pṛśni have clothed themselves in beauty.

---

गोमातरो यच्छुभयन्ते अञ्जिभिस्तनूषु शुभ्रा दधिरे विरुक्मतः।
बाधन्ते विश्वमभिमातिनमप वर्त्मान्येषामनु रीयते घृतम्॥३॥

गोऽमातरः। यत्। शुभयन्ते। अञ्जिऽभिः। तनूषु। शुभ्राः।
दधिरे। विरुक्मतः। बाधन्ते। विश्वम्। अभिऽमातिनम्।
अप। वर्त्मानि। एषाम्। अनु। रीयते। घृतम्॥३॥

सायणः—गोमातरः गोरूपा भूमिर्माता येषां ते मरुतः अञ्जिभिः व्यञ्जकैराभरणैः यत् यदा शुभयन्ते स्वीयान्यङ्गानि शोभायुक्तानि कुर्वन्ति, तदानीं शुभ्राः दीप्ता मरुतः तनूषु स्वकीयेषु शरीरेषु विरुक्मतः विशेषेण रोचमानानलंकारान् दधिरे धारयन्ति। अपि च विश्वं सर्वम् अभिमातिनम् शत्रुम् अप बाधन्ते हिंसन्ति। एषां मरुतां वर्त्मानि मार्गाननुसृत्य घृतं क्षरणशीलमुदकं रीयते स्रवति। यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः॥ शुभयन्ते। संज्ञापूर्वकस्य विधेरनित्यत्वात् लघूपधगुणाभावः। अञ्जिभिः। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। 'खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च' (उ० iv-579) इति इप्रत्ययः। शुभ्राः। 'शुभ दीप्तौ'। 'स्फायितञ्चि' इत्यादिना रक्। विरुक्मतः। विशिष्टा रुक् विरुक्। तद्वन्तो विरुक्मतः। मतुपि अयस्मयादित्वेन पदत्वात् कुत्वम्। भत्वात् जश्त्वाभावः। रीयते। 'रीङ् स्रवणे'। दैवादिकः॥३॥

वेङ्कटमाधवः—'पृश्नियै वै पयसो मरुतो जाताः' इति ब्राह्मणम्। यदा त आत्मानम्। मरुतः। आभरणैः। अलङ्कुर्वते तदा। अङ्गेषु। कल्याणा मरुतः। विशिष्टदीप्तिमतः सुवर्णमयान् कटकान्। दधिरे। सर्वम्। शत्रुम्। अपबाधन्ते तथा। एषाम्। मार्गान्। उदकम्। अनु। गच्छति। यत्र गच्छन्ति भवति तत्रोदकमिति॥३॥

Mm.:—Then these sons of the cow (Pṛśni) adorn themselves with glittering ornaments,
The brilliant ones put bright weapons on their bodies,
They drive away every adversary;
Fatness (rain) streams along their paths.

वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा ।
मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम् ॥४॥

वि । ये । भ्राजन्ते । सुऽमखासः । ऋष्टिऽभिः । प्रऽच्यवयन्तः ।
अच्युता । चित् । ओजसा । मनःऽजुवः । यत् । मरुतः ।
रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वम् ॥४॥

*सायणः*—सुमखासः शोभनयज्ञाः ये मरुतः ऋष्टिभिः आयुधैः वि भ्राजन्ते विशेषेण दीप्यन्ते ते मरुतः अच्युता चित् च्यावयितुमशक्यानि दृढानि पर्वतादीन्यपि ओजसा स्वकीयेन बलेन प्रच्यावयन्तः प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति । उत्तरार्धः प्रत्यक्षकृतः । हे मरुतः मनोजुवः मनोवद्वेगगतयः वृषव्रातासः वृष्ट्युदकसेचनसमर्थसंघात्मका यूयं रथेषु आत्मीयेषु पृषतीः । पृषत्यः इति मरुद्वाहनानां संज्ञा 'पृषत्यो मरुताम्' (नि० i-15-6) इत्युक्तत्वात् । पृषद्भिः श्वेतबिन्दुभिर्युक्ताः मृगीः यत् यदा आ अयुग्ध्वं आभिमुख्येन नियुक्ता अकुरुध्वम् । तदानीं पर्वतादिकं प्रच्यवते इत्यर्थः ॥ सुमखासः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति । 'नञ्सुभ्याम्' इत्यस्य प्रवृत्त्यभावे बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अच्युता । 'शेश्छन्दसि बहुलं' इति शेर्लोपः । मनोजुवः । जु इति सौत्रो धातुर्गत्यर्थः । 'क्विब्वचि' इत्यादिना क्विब्दीर्घौ । अयुग्ध्वम् । 'युजिर् योगे' । लुङि 'धि च' (पा० viii-2-25) इति सकारलोपः ॥४॥

*वेङ्कटमाधवः*—विभ्राजन्ते । ये । सुयज्ञाः । आयुधैः । प्रच्यावयन्तः । अच्युतानि । अपि । पर्वतादीनि । बलेन । मनोवेगाः । यदा । यूयं पृषद्वर्णाः । अश्वाः रथेषु । आयुङ्ध्वम् । वर्षिता गणो येषां ते वृषव्राताः । तदा तेषां मार्गमनुगच्छतीति ॥४॥

Mm. :—When you, the powerful, who shine with your spears,
Shaking even what is unshakable by strength,
When you, O Maruts, the manly hosts, had yoked
The spotted dear, swift as thought, to your chariots.

---

प्र यद्रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयन्तः ।
उतारुषस्य वि ष्यन्ति धाराश् चर्मेवोदभिर्व्युन्दन्ति भूम ॥५॥

प्र । यत् । रथेषु । पृषतीः । अयुग्ध्वम् । वाजे । अद्रिम् । मरुतः ।
रंहयन्तः । उत । अरुषस्य । वि । स्यन्ति । धाराः ।
चर्मऽइव । उदऽभिः । वि । उन्दन्ति । भूम ॥५॥

सायणः—हे मरुतः पृषतीः यत् यदा रथेषु प्र अयुग्ध्वं प्रायूयुजत । किं कुर्वन्तः । वाजे अन्ने निमित्तभूते सति अद्रिं मेघं रंहयन्तः वर्षणार्थं प्रेरयन्तः । उत तदानीम् अरुषस्य आरोचमानस्य सूर्यस्य वैद्युताग्नेर्वा सकाशात् वृष्ट्युदकधाराः भवन्तः वि ष्यन्ति विमुञ्चन्ति । विमुक्ताश्च धारा. उदभिः उदकैः चर्मेव परिमितमल्पं चर्म यथा अप्रयत्नेन क्लेद्यते एवं भूम सर्वां भूमिं व्युन्दन्ति विशेषेणार्द्रां कुर्वन्ति । रंहयन्तः । 'रहि गतौ' । वि ष्यन्ति । 'षो अन्तकर्मणि' । दैवादिकः । 'ओतः श्यनि.' (पा० vii–3–71) इति ओकारलोपः, 'उपसर्गात्सुनोति' इति षत्वम् । उदभिः । 'पद्दन्' इत्यादिना उदकशब्दस्य उदन्नादेशः । व्युन्दन्ति । 'उन्दी क्लेदने' । भूम । 'सुपां सुलुक्' इति भूमिशब्दात् उत्तरस्य अमः आदेशः । छान्दसं ह्रस्वत्वम् ॥५॥

वेङ्कटमाधवः—प्रायुङ्ध्वम् । यदा । रथेषु । अश्वाः । बले सति । अद्रिमपि । मरुतः । उत्क्षिपन्तः । तदानीम् । दीप्तस्य मारुतस्य गणस्य सकाशात् । धाराः । पतन्ति । तेऽमी सर्वाम् । भूमिं खल्वल्पपरिमाणम् । चर्मेव । उदकैः । विविधम् । क्लेदयन्ति ॥५॥

Mm :—When you had yoked the spotted dear before your chariot,
Hurtling the stone (thunderbolt) in the fight,
Then streams of red-(horse) rush forth :
Like a skin with water they water the earth.

---

आ वो॑ वहन्तु॒ सप्त॑यो रघु॒ष्यदो॑ रघु॒पत्वा॑नः॒ प्र जि॑गात बा॒हुभिः॑ ।
सीद॒ता ब॒र्हिरु॒रु वः॒ सद॑स्कृ॒तं मा॒दय॑ध्वं मरुतो॒ मध्वो॒ अन्ध॑सः ॥६॥

आ । वः॒ । व॒ह॒न्तु॒ । सप्त॑यः । र॒घु॒ऽस्यदः॑ । र॒घु॒ऽपत्वा॑नः । प्र ।
जि॒गा॒त॒ । बा॒हुऽभिः॑ । सीद॑त । आ । ब॒र्हिः । उ॒रु । वः॒ ।
सदः॑ । कृ॒तम् । मा॒दय॑ध्वम् । म॒रु॒तः॒ । मध्वः॑ । अन्ध॑सः ॥६॥

सायणः—हे मरुतः वः युष्मान् सप्तयः सर्पणशीला अश्वाः आ वहन्तु अस्मद्यज्ञं प्रापयन्तु । कीदृशाः सप्तयः । रघुष्यदः लघु शीघ्रं स्यन्दमानाः । वेगेन गच्छन्त इत्यर्थः । रघुपत्वानः लघु शीघ्रं पतन्तो गच्छन्तो यूयं बाहुभिः स्वकीयैर्हस्तैः अस्मभ्यं दातव्यं धनमाहृत्य प्र जिगात प्रकर्षेण गच्छत । हे मरुतः वः युष्माकं सदः सदनं वेदिलक्षणं स्थानं उरु विस्तीर्णं कृतम् । तत्र यदास्तीर्णं बर्हिः तत् आ सीदत तस्मिन्बर्हिष्युपविशत । उपविश्य च मध्वः मधुरस्य अन्धसः सोमलक्षणस्यान्नस्य पानेन मादयध्व तृप्ता भवत ।

रघुष्यदः। रघु स्यन्दन्ते इति रघुष्यदः। 'स्यन्दू प्रस्रवणे'। 'क्विप् च' इति क्विप्। 'अनिदिताम्' इति नलोपः। कृदुत्तरपदप्रकृतिस्वरत्वम्। रघुपत्वानः। 'पत्लृ गतौ' 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्। जिगात। 'गा स्तुतौ'। जौहोत्यादिकः। 'जिगाति' (नि० ii–14–113) इति गतिकर्मसु पाठादत्र गत्यर्थः। लोण्मध्यमबहुवचनस्य 'तप्तनप्तनथनाश्च' इति तबादेशः। तस्य पित्त्वेन ङित्वाभावात् 'ई हल्यघोः' इति ईत्वाभावः। सदः। 'अतः कृकमि' (पा० viii–3–46) इति विसर्जनीयस्य सत्वम्। मादयध्वम्। 'मद तृप्तियोगे'। चुरादिरात्मनेपदी ॥६॥

*स्कन्दस्वामी*— ......सीदत बर्हिः। कस्मात् उच्यते। यस्मादुरु विस्तीर्णं वः युष्माकं सदः स्थानं अस्माभिः कृतम्। आसाद्य च मादयध्वम् तर्पयतास्मान् हे मरुतः। मध्वो अन्धसः। तृतीयार्थे चात्र षष्ठी। षष्ठीनिर्देशाच्चात्र एकदेशेनेति शेषः। मधुस्वादेन सोमलक्षणान्नेन मधुस्वादस्य वा सोमलक्षणस्यान्नस्यैकदेशेनेति ॥६॥

*वेङ्कटमाधवः*—आवहन्तु। युष्मान्। अश्वाः। लघुगामिनः। लघुपातिनः। प्रजिगात च शत्रून् बाहुभिः। आसीदत च। बर्हिः। विस्तीर्णम्। स्थानम्। युष्माकम्। कृतम्। मधुसदृशेन। सोमेन। मादयध्वम् ॥६॥

Mm.:—May the swiftly-gliding, swiftly-winged horses carry you hither.
Come forth with your arms.
Sit down on the grass-pile, a wide seat has been made for you.
Rejoice, O Maruts, in the sweet food.

---

तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः।
विष्णुर्यद्धावद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ॥७॥

ते। अवर्धन्त। स्वऽतवसः। महिऽत्वना। आ। नाकम्। तस्थुः। उरु। चक्रिरे। सदः। विष्णुः। यत्। ह। आवत्। वृषणम्। मदऽच्युतम्। वयः। न। सीदन्। अधि। बर्हिषि। प्रिये ॥७॥

*सायणः*—ते मरुतः अवर्धन्त वृद्धिं गताः। कीदृशाः। स्वतवसः। स्वाश्रयबलाः नान्यस्य कस्यचिद्बलमपेक्षन्ते। वृद्धिं प्राप्य च महित्वना महिम्ना महत्त्वेन नाकं स्वर्गम् आ तस्थुः आस्थितवन्तः। सदः सदनं नभोलक्षणस्थानं च स्वकीयनिवासाय उरु विस्तीर्णं चक्रिरे। यत् येभ्यो मरुद्भ्यो यदर्थं वृषणं कामाभिवर्षकं मदच्युतं मदस्य वृषस्य आसेक्तारं यज्ञं विष्णुः ह आवत् विष्णुरेवागत्य रक्षति ते मरुतः वयो न पक्षिणो यथा शीघ्रमागच्छन्ति एवं शीघ्रमागत्य बर्हिषि अधि

अस्मदीये यज्ञे प्रिये प्रीतिकरे सीदन् सीदन्तु उपविशन्तु ॥ तेऽवर्धन्त । 'स्वरितो वानुदात्ते पदादौ' (पा० viii-2-6) इति एकादेशस्य स्वरितत्वम् । महित्वना । भावप्रत्ययादुत्तरस्य आङो व्यत्ययेन नाभावः उदात्तत्वं च । यद्वा । 'सुपां सुलुक्' इति आजादेशो नकारोपजनश्च । तस्थुः । नाकमातस्थुश्च सदश्च विस्तीर्णं चक्रिरे इति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति चतुर्थ्यां लुक् । आवत् । छान्दसो वर्तमाने लङ् । वृषणम् । 'वा षपूर्वस्य निगमे' इति उपधादीर्घाभावः । मदच्युतम् । मदं च्योततीति मदच्युत् । 'च्युतिर आसेचने' । 'क्विप् च' इति क्विप् । सदिन् । लिङर्थे लेटि अडागमः ॥७॥

स्कन्दस्वामी—ते मरुतः अवर्धन्त सर्वप्रकारां वृद्धिं प्राप्ताः । स्वतवसः आत्मबलाः । महित्वना स्वेन माहात्म्येन । आ नाकं तस्थुः दिवं चास्थिताः । तत्र उरु चक्रिरे सदः स्थानमात्मनः । किं च विष्णुः । यज्ञनामैतत् । सप्तम्यर्थे चात्र प्रथमा । अन्तर्णीतमत्वर्थो वा विष्णुशब्दः । यज्ञे यज्ञवान् वा यजमानः । यत् यदा । ह्शब्दस्तु पदपूरणः । आवत् तर्पयति । वृषणं मदच्युतं इति च्यवतिर्गतिकर्मा । वर्षितृन् सोमलक्षणं च मदं प्रति गन्तॄन् मरुतः मरुद्गणं वेति । यदेति वचनात्तदेत्यध्याहार्यम् । तदा पक्षिण इव सीदन् सीदन्ति मरुतः । अधिबर्हिषि प्रिये प्रियस्य वेद्यां विस्तीर्णस्य बर्हिषि उपरि । यज्ञे यदा यजमानो मरुतः वेद्यां बर्हिषि निषीदन्तीति ॥७॥

वेङ्कटमाधवः—ते । अवर्धन्त । स्वबलाः । माहात्म्येन । दिवं च । आस्थिताः । विस्तीर्णम् । आसनम् । चक्रिरे । यज्ञः । यदा । रक्षति । वर्षितारम् । शत्रुमदस्य च्यावकं मरुद्गणं तदा सोमं पातुं मरुतः । प्रिये । बर्हिषि । पक्षिणः । इव । शीघ्रमागत्य । सीदन्ति ॥७॥

Mm. :—Strong in themselves they grew with might;
They stopped to the firmament, they made their seat wide.
When Viṣṇu saved the enrapturing Soma,
The Maruts sat down like birds on their beloved altar.

---

शूरा इवेद्युयुधयो न जग्मयः श्रवस्यवो न पृतनासु येतिरे ।
भयन्ते विश्वा भुवना मरुद्भ्यो राजान इव त्वेषसंदृशो नरः ॥८॥

शूराःऽइव । इत् । युयुधयः । न । जग्मयः श्रवस्यवः । न ।
पृतनासु । येतिरे । भयन्ते । विश्वा । भुवना । मरुत्ऽभ्यः ।
राजानःऽइव । त्वेषऽसंदृशः । नरः ॥८॥

*सायणः*—इत् इत्येतत्समुच्चये। शूराः इवेत् शौर्योपेता युयुत्सवः पुरुषा इव च युयुधयो न शत्रुभिर्युध्यमानाः पुरुषाः इव च जग्मयः शीघ्रं गच्छन्तो मरुतः श्रवस्यवो न श्रवोऽन्नमात्मनः इच्छन्तः पुरुषाः इव पृतनासु संग्रामेषु येतिरे प्रयतन्ते वृत्रादिभिर्युद्धे व्याप्रियन्ते। तादृशेभ्यः मरुद्भ्यः विश्वा भुवना सर्वाणि भूतजातानि भयन्ते बिभ्यति। ये नरः वृष्ट्यादेर्नेतारो मरुतः राजान इव राजमाना नृपतय इव त्वेषसंदृशः दीप्तसंदर्शना उग्ररूपतया द्रष्टुमशक्या भवन्ति तेभ्य इत्यर्थः॥ युयुधयः। 'युध संप्रहारे'। 'आदृगमहनजनः' इत्यत्र 'उत्सर्गश्छन्दसि' (पा० iii-2-171-2) इति वचनात् किन्प्रत्ययः। लिड्वद्भावात्। द्विर्भावादि। कित्त्वात् गुणाभावः। नित्त्वादाद्युदात्तत्वम्। जग्मयः। तेनैव सूत्रेण किन्प्रत्ययः। गमहनेत्यादिनोपधालोपः। स्थानिवद्भावाद्विर्भावादि। श्रवस्यवः श्रव इच्छति श्रवस्यति, 'क्याच्छन्दसि' इति उप्रत्ययः। येतिरे। 'यती प्रयत्ने'। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट्। भयन्ते 'ञिभी भये'। 'बहुलं छन्दसि' इति शपः श्लोरभावः। त्वेषसंदृशः 'त्विष दीप्तौ'। पचाद्यच्। 'दृशिर् प्रेक्षणे'। संपूर्वादस्मात् संपदादिलक्षणो भावे क्विप्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥८॥

*स्कन्दस्वामी*—शूरा इव इति इवशब्दः 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (Nir. vii-31) इति पदपूरणः। शूराः मरुतः। अथवा शूरा इत्युपमानश्रुतेरुपमानोपमेयसाधारणधर्माध्याहारः। शूरा इव जेतारः। यथा शूरा मनुष्या नियमेन शत्रूणां जेतारः एवं मरुत इति। युयुधयो न जग्मयः यथा च युद्धशीला मनुष्याः शत्रून् प्रति गमनशीला एवं मरुतः। श्रवस्यवो न। श्रवोऽन्नं धनं कीर्तिर्वा, तत्कामाः श्रवस्यवः। यथा च श्रवस्यवो मनुष्याः एवं मरुतः। पृतनासु संग्रामेषु येतिरे प्रयत्नं कुर्वन्ति। किं च भयन्ते बिभ्यति विश्वा भुवना सर्वाणि भूतानि मरुद्भ्यः। किं च राजान इव। यथा नित्यालंकृतशरीरत्वाद्राजान एवं मरुतः। त्वेषसन्दृशः दीप्तदर्शनाः। उज्ज्वलरूपा इति। नरः मनुष्याकाराः॥८॥

*वेङ्कटमाधवः*—शूरा इव। योद्धारः। गच्छन्तः शत्रुभ्यः। अन्नमिच्छमानाः। इव। युद्धेषु। गच्छन्ति। द्वितीयो नकारः पूरणः। बिभ्यति। च। विश्वानि भुवनानि। मरुद्भ्यः। राजान इवालङ्कृताः। दीप्तसन्दर्शनाः। नेतारः॥८॥

Mm.:—Like heroes indeed thirsting for fight, they rush about;
Like combatants eager for glory they have striven in battles.
All beings are afraid of the Maruts;
They are men too terrible to behold like kings.

त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।
धत्त इन्द्रो नर्यपांसि कर्तवेऽहन्वृत्रं निरपामौब्जदर्णवम् ॥९॥

त्वष्टा । यत् । वज्रम् । सुऽकृतम् । हिरण्ययम् । सहस्रऽभृष्टिम् । सुऽअपाः । अवर्तयत् । धत्ते । इन्द्रः । नरि । अपांसि । कर्तवे । अहन् । वृत्रम् । निः । अपाम् । औब्जत् । अर्णवम् ॥९॥

*सायणः*—स्वपाः शोभनकर्मा त्वष्टा विश्वनिर्माता यद्वज्रम् अवर्तयत् इन्द्रं प्रत्यगमयत् दत्तवानित्यर्थः । कीदृशम् । सुकृतं सम्यङ्निष्पादितं हिरण्ययं सुवर्णमयं सहस्रभृष्टिम् अनेकाभिः धाराभिर्युक्तम् । तद्वज्रम् इन्द्रः धत्ते धारयति । किमर्थम् नरि । अत्र नृसंबन्धात् नृशब्देन संग्रामोऽभिधीयते । संग्रामे अपांसि शत्रुहननादिलक्षणानि कर्माणि कर्तवे कर्तुम् । एवं धृत्वा तेन वज्रेण वृत्रं वृष्ट्युदकस्यावरकम् अर्णवम् अर्णसोदकेन युक्तं मेघम् अहन् अवधीत् । अपां तेन निरुद्धा अपश्च सः निः औब्जत् निःशेषेणाधोमुखमपातयत् प्रवृष्टा अकरोदित्यर्थः । सुकृतम् । सुपूर्वात् करोतेः कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । हिरण्ययम् । हिरण्यशब्दादुत्तरस्य मयटो मकारस्य लोपः 'ऋत्व्यवास्त्व०' इत्यादौ निपात्यते । स्वपाः । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । कर्तवे । 'तुमर्थे सेसेन्' इति करोतेः तवेन्प्रत्ययः । अपाम्, 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । औब्जत् । 'उब्ज आर्जवे' । अर्णवम् । 'अर्णसो लोपश्च' (का० v–2–109–2) इति मत्वर्थीयो वः सलोपश्च ॥९॥

*स्कन्दस्वामी*—त्वष्टा देवशिल्पी । यत् व्यत्ययेनात्र नपुंसकता । यं वज्रं सुकृतं सुकारणम् । हिरण्ययं हिरण्मयम् । सहस्रभृष्टिम् । भृष्टयोऽत्राश्रय उच्यन्ते । सहस्राश्रिम् । स्वपाः सुकर्मा अवर्तयत् । शुद्धोऽप्ययं सोपसर्गार्थो द्रष्टव्यः । निरवर्तयत् कृतवानिति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तद्धत्ते इन्द्रो नरि । गणापेक्षं चैकवचनं नराकारे मरुद्गणे । मनुष्याकाराणां मरुतोगणस्य वज्रमिन्द्रोऽर्पयतीति । किमर्थम् । उच्यते । अपांसि कर्तवे वृत्रवधादीनि कर्माणि कर्तुम् । अर्पितेन च तेन अहन् वृत्रं हन्ति मेघं मरुद्गणः । हत्वा च निरपामौब्जत् । निरित्येष ·····अथवा अपामिति द्वितीयार्थे षष्ठी । उब्ज आर्जवे । वृत्रोदरान्तर्गता अपो भुवं प्रति गमनाय नियमेन ऋजूकरोतीति । अर्णवम् । वृत्रस्येदं विशेषणम् । उदकवन्तं मेघम् ॥९॥

*वेङ्कटमाधवः*—त्वष्टा । यत् । आयुधम् । सुकृतम् । हिरण्यालङ्कृतम् । सहस्रधारम् । सुकर्मेन्द्राय । समर्पयामास । तं वज्रमधारयत् । इन्द्रः । नेतरि । मरुद्-

गणे सहायभूते सति । कर्माणि । कर्तुमथ । वृत्रम् । अहन् हत्वा च । अपाम् । अर्णवं मेघम् । निर्जघान ॥६॥

*Mm.*:—When the clever Tvastr had turned the well-made,
Golden, thousand-edged thunderbolt,
Indra takes it to perform manly deeds; he slew Vṛtra,
He forced out the stream of water.

ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतम् ।
धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥१०॥

ऊर्ध्वम् । नुनुद्रे । अवतम् । ते । ओजसा । दादृहाणम् । चित् ।
बिभिदुः । वि । पर्वतम् । धमन्तः । वाणम् । मरुतः । सुऽ-
दानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ॥१०॥

*सायणः*—……ते मरुतः अवतम् । अवस्तात्ततो भवति इति अवतः कूपः । कूपनामसु च 'अवतः अवटः' (नि० iii–23–7) इति पठितम् । तम् ऊर्ध्वम् उपरि यथा भवति तथा ओजसा स्वकीयेन बलेन नुनुद्रे प्रेरितवन्तः उत्खातवन्त इत्यर्थः । एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तः मरुतः मार्गमध्ये दादृहाणं प्रवृद्धं गतिनिरोधकं पर्वतं चित् पर्ववन्तं शिलोच्चयमपि वि बिभिदुः विशेषेण बभञ्जुः । सुदानवः शोभनदानास्ते मरुतः वाणं शतसंख्याभिः तन्त्रीभिर्युक्तं वीणाविशेषं धमन्तः वादयन्तः सोमस्य मदे सोमपानेन हर्षे सति रण्यानि स्तुत्यानि रमणीयानि धनानि चक्रिरे स्तोतृभ्यः कुर्वन्ति । नुनुद्रे 'णुद प्रेरणे' । लिटि 'इरयो रे' इति रेआदेशः । दादृहाणम् । 'दृह दृहि वृद्धौ' । लिटः कानच् । धमन्तः । 'ध्मा शब्दाग्निसंयोगयोः । 'पाघ्रा०' इत्यादिना धमादेशः । वाणम् । 'अण रण वण शब्दार्थाः' । कर्मणि घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । रण्यानि । रणतेर्भावे 'वशिरण्योरुपसंख्यानम्' (पा० iii–3–58–1) इति अप् । ततः 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् ॥१०॥

*स्कन्दस्वामी*—ऊर्ध्वं सन्तं मेघं नुदन्ति प्रेरयन्ति । अवतं अवपतितं अधोगतम् । अधोमुखमिति यावत् । अथवा अवत इति कूपनाम । तत्सादृश्याच्चात्र तद्व्यपदेशः । बहूदकत्वादिना सादृश्येन कूपसदृशं मेघम् । ऊर्ध्वं प्रेरयन्ति क्षिपन्तीति । ते मरुतः ओजसा स्वेन बलेन । दादृहाणं चित् अत्यन्तं दृढीभवन्तमपि । अतिदृढमपीत्यर्थः । बिभिदुः विभिन्दन्तीति । पर्वतं मेघं शिलोच्चयं वा । धमन्तः । ध्मा शब्दाग्निसंयोगयोः । शब्दवन्तः । उच्चा-

स्यन्त इति। वाणं शब्दं। महान्तं शब्दं कुर्वन्त इत्यर्थः। मरुतः सुदानवः शोभनदातारः। ईदृशान्यान्यपि मदे सोमस्य। मदे इति 'यस्य च भावेन भावलक्षणम्' (पा० ii-3-37) इत्येवं सप्तमी। तच्छ्रुतेश्च लक्षणभूतक्रियायोग्याध्याहारः। मदे सोमस्य प्राप्ते। सोमेन मत्ताः सन्त इति। रण्यानि रमणीयानि कर्माणि चक्रिरे कुर्वन्ति ॥१०॥

वेङ्कटमाधवः—कूपम्। दूरस्थम्। मरुतः बलात्। कः शिलोच्चयम्। च। बिभिदुः। यो मार्गस्य निरोधकः आत्मीयम्। वाणवाद्यं च। धमन्तः। मरुतस्तत्रमी। सुदानाः। सोममत्ताश्च। रमणीयानि। चक्रिरे एवंविधानि कर्माणि। शेषमुत्तरया वद ॥१०॥

Mm. :—By their power they pushed the well aloft.
They clove asunder the rock (cloud) however strong.
Blowing forth their Voice, the bounteous Maruts Performed,
While drunk of Soma, their glorious deeds.

---

जिह्मं नुनुद्रेऽवतं तया दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे।
आ गच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्त धामभिः ॥११॥

जिह्मम्। नुनुद्रे। अवतम्। तया। दिशा। असिञ्चन्। उत्सम्।
गोतमाय। तृष्णऽजे। आ। गच्छन्ति। ईम्। अवसा। चित्रऽ-
भानवः। कामम्। विप्रस्य। तर्पयन्त। धामऽभिः ॥११॥

सायणः—मरुतः अवतम् उद्धृतं कूपं यस्यां दिशि ऋषिर्वसति तया दिशा जिह्मं वक्रं तिर्यञ्चं नुनुद्रे प्रेरितवन्तः। एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य तृष्णजे तृषिताय गोतमाय ऋषये तदर्थम् उत्सं जलप्रवाहं कूपादुद्धृत्य असिञ्चन् आहावेऽवानयन्। एवम् ईम् एनं स्तोतारमृषिं चित्रभानवः तत्समीपं प्राप्नुवन्ति। प्राप्य च विप्रस्य मेधाविनो गोतमस्य कामम् अभिलाषं धामभिः आयुषो धारकैरुदकैः तर्पयन्त अतर्पयन्। तया। 'न गोश्वन्त्साववर्ण' इति 'सावेकाचः' इति प्राप्तस्य विभक्तेरुदात्तत्वम्। तृष्णजे। 'ञितृषा पिपासायाम्'। 'स्वपितृषोर्नजिङ्' (पा iii-2-172) प्रत्ययाद्युदात्तत्वम्। पदकारस्य शाकल्यस्य त्वयमभिप्रायः। 'अन्येष्वपि दृश्यते' इति दृशिग्रहणात् केवलादपि जनेर्डप्रत्ययः। तृष्णा जाता यस्य स तथोक्तः। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। धामभिः। दधातेः 'आतो मनिन्' इति मनिन् ॥११॥

तानि शशमानाय युष्मान् स्तुतिभिर्यजमानाय दातुं संपादितानि। पूर्वोक्तलक्षणानि शर्माणि यानि सन्ति यानि च दाशुषे हविर्दत्तवते यजमानाय अधियच्छत अधिकं प्रयच्छथ, हे मरुतः तानि सर्वाणि शर्माणि अस्मभ्यं वि यन्त विशेषेण प्रयच्छत। किं च हे वृषणः कामानां वर्षयितारो मरुतः नः अस्मभ्यम् सुवीर शोभनैर्वीरैः पुत्रादिभिर्युक्तं रयिं धनं धत्त दत्त। या। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। शर्म। 'सुपां सुलुक्' इति जसो लुक्। शशमानाय। 'शश प्लुतगतौ'। ताच्छीलिकः चानश्। यच्छत। छान्दसे लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। यन्त। यमेर्लोटि। 'बहुलं छन्दसि' इति शपो लुक्। 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः। अतस्तस्य पित्त्वेन ङित्त्वाभावात् 'अनुदात्तोपदेश.' इत्यादिना अनुनासिकलोपो न भवति। वृषणः। 'वा षपूर्वस्य निगमे' इति उपधादीर्घाभावः। सुवीरम्। बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥१२॥

स्कन्दस्वामी—यानि वः युष्माकं शर्म शर्माणि सुखानि गृहाणि वा। शशमानाय शशतिरर्चतिकर्मा[illegible]यम्। ताच्छील्ये चात्र शानच्प्रत्ययः। स्तुतिकरणशीलस्य अर्थाय। सन्ति। त्रिधातूनि। धीयन्ते प्राणिनां देहेष्विति धातवः अन्नरसाः। तैः देवमनुष्योपभोग्यैः त्रिभिरुपेतानि त्रिधातूनि। यच्छब्दात्तच्छब्दाध्याहारः। तानि दाशुषे अन्यस्मै अपि यजमानाय यच्छत दत्त। अधि अधिशब्दस्तु 'अधिपरी अनर्थकौ' (पा॰ i-4-93) इत्येवं कर्मप्रवचनीयः पदपूरणः। न केवलाय दाशुषे। किं तर्हि। अस्मभ्यम् अपि तानि हे मरुतः वियन्त विविधं धत्त। रयिं धनं च नः अस्मभ्यम्। धत्त वृषणः वर्षितारः। सुवीरं शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतम् ॥१२॥

वेङ्कटमाधवः—यानि। युष्माकम्। गृहाणि। स्तुवते। सन्ति। तानि। त्रिच्छदिष्काणि। यजमानाय अधिगच्छत। अस्मभ्यम्। तानि। मरुतः। विविधम्। गच्छत। रयिं च। न.। धत्त। वृषणः। सुपुत्रम् ॥१२॥

Mm. —The shelters which you have for him who praises you,
Grant them threefold to the man who gives !
Extend the same to us O Maruts !
Give us, ye heroes wealth with valiant offspring !

---

## 4. I—115

कुत्स ऋषिः। सूर्यो देवता। त्रिष्टुप् छन्दः।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥१॥

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य ।
वरुणस्य । अग्नेः । आ । अप्राः । द्यावापृथिवी इति ।
अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥१॥

*सायणः*—देवानाम् दीव्यन्तीति देवा रश्मयस्तेषाम्, देवजनानामेव वा अनीकम् तेजःसमूहरूपं चित्रम् आश्चर्यकरं सूर्यस्य मण्डलं उदगात् उदयाचलं प्राप्तमासीत् । कीदृशम् ? मित्रस्य वरुणस्य अग्नेः च । उपलक्षणमेतत् । तदुपलक्षितानां जगतां चक्षुः प्रकाशम्, चक्षुरिन्द्रियस्थानीयं वा । उदयं प्राप्य च द्यावापृथिवी दिवं पृथिवीमन्तरिक्षं च आप्राः स्वकीयेन तेजसा आ समन्तादपूरयत् । ईदृग्भूतमण्डलान्तर्वर्ती सूर्योऽन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा स्वरूपभूतः । स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणम् । कारणाच्च कार्यं नातिरिच्यते । तथा च पारमर्षं सूत्रम्—'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र० सू० ii–1–14) इति । यद्वा, स्थावरजङ्गमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा । उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनायुक्तं सदुपलभ्यते । तथा च श्रूयते—'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति' (तै० आ० i–14–1) इति । आप्राः । 'प्रा पूरणे' (धा० ii–51) लङि पुरुषव्यत्ययः । अदादित्वाच्छपो लुक् । जगतः । 'गमेर्द्वे च' (iii–2–178–3) इति क्विप् द्विर्वचनं च । 'गमः क्वौ' (vi–4–40) इत्यनुनासिकलोपः । तस्थुषः । तिष्ठतेर्लिटः क्वसुः । द्विर्वचनम् । 'शर्पूर्वाः खयः' (vii–4–61) षष्ठ्येकवचने 'वसोः सम्प्रसारणम्' (vi–4–131) इति सम्प्रसारणम् । 'आतो लोप इटि च' (vi–4–64) इत्याकारलोपः । 'शासिवसि०' इति (viii–3–60) षत्वम् ॥१॥

*वेङ्कटमाधवः*—चायनीयम् । देवानाम् । उदगात् । अनीकं चक्षुः, आदित्ये हि सर्वे देवा वसन्ति तदिदम् । मित्रस्य । वरुणस्य । अग्नेः । प्रकाशमपि वा चक्षुर्भूतम् । आपूरय । द्यावापृथिव्यौ च । अन्तरिक्षं च महत्त्वेन । सूर्यः । आत्मा । जङ्गमस्य । स्थावरस्य च जीवभूतः ॥१॥

Pet.:—The bright face of the gods is gone up the sky, the eye of Mitra, of Varuna, of Agni: Sūrya has filled heaven, earth, and the mid-sky, soul of the moving and standing world.

सूर्यो॑ दे॒वीमु॒षसं॒ रोच॑माना॒ं मर्यो॒ न योषा॑म॒भ्ये॑ति प॒श्चात्।
यत्रा॒ नरो॑ देव॒यन्तो॑ यु॒गानि॑ वित॒न्वते॒ प्रति॑ भ॒द्राय॑ भ॒द्रम् ॥२॥

सूर्यः॑ । दे॒वीम् । उ॒षस॑म् । रोच॑मानाम् । मर्यः॑ । न । योषा॑म् ।
अ॒भि । ए॒ति । प॒श्चात् । यत्र॑ । नरः॑ । दे॒व॒ऽयन्तः॑ । यु॒गानि॑ ।
वि॒ऽत॒न्वते॑ । प्रति॑ । भ॒द्राय॑ । भ॒द्रम् ॥२॥

सायणः—सूर्यो देवीम् दानादिगुणयुक्तां रोचमानाम् दीप्यमानाम् उषसं पश्चादभ्येति उषसः प्रादुर्भावानन्तरं तामभिलक्ष्य गच्छति। तत्र दृष्टान्तः—मर्यो न योषाम्। यथा कश्चिन्मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियम्। यष्टुमिच्छन्तो नर यज्ञस्य नेतारो यजमाना.। युगानि। युगशब्दः कालवाची। तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यन्ते। यथा दर्शपूर्णमासाविति। अग्निहोत्रादीनि कर्माणि। वितन्वते विस्तारयन्ति। यद्वा देवयन्तः देवयागार्थं धनमात्मन इच्छन्तो यजमानपुरुषा युगानि हलावयवभूतानि कर्षणाय वितन्वते प्रसारयन्ति। तामुपसमनुगच्छतीत्यर्थ.। एवंविधं भद्रम् कल्याणं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय। स्तुम इति शेष.। यद्वा देवयन्तः देवकामा यजमाना युगानि •_नानि भूत्वा पत्नीभिः सहिता सन्तो भद्रं कल्याणमग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां वितन्वते विस्तारयन्ति। मर्य 'मृङ् प्राणत्यागे' (धा० vi–119)। 'छन्दसि निष्टर्क्य०' (iii–1–123) इत्यादौ यत्प्रत्ययान्तो निपात्यते। 'यतोऽनाव.' (iii–1–273) इत्याद्युदात्तत्वम्। युगानि। युजे. कर्मणि घञ्। 'युगशब्दः कालविशेषे रथाद्युपकरणे च' इत्युञ्छादिषु (vi–1–160–157) पाठाद् गुणाभावोऽन्तोदात्तत्वञ्च। वितन्वते। 'तनु विस्तारे' (धा० viii–1)। 'तनादिकृञ्भ्यः उ' (iii–1–79)। 'सह' (ii–1–4) इति योगविभागात् तिङोपसर्गस्य समासे सति 'समासस्य' (vi–1–223) इत्यन्तोदात्तत्वम् ॥२॥

वेङ्कटमाधवः—सूर्य। देवीम्। उषसम्। दीप्यमानाम्। मनुष्य.। इव। स्त्रियम्। पश्चात्। अधिगच्छति। यस्यामुषसि। मनुष्याः। देवान् कामयमाना। अग्निहोत्रादीनि कर्माणि। प्रतिवितन्वते। भद्रं च। भद्राय कुर्वन्ति यद्वा कर्षणार्थं युगानि युञ्जन्तीति ॥२॥

Pet —The Sun follows the divine and shining Dawn, as wooer follows his mistress . . .(Here I prefer to make an omission rather than give a translation which could only be conjectural)

—

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥३॥

भद्राः। अश्वाः। हरितः। सूर्यस्य। चित्राः। एतऽग्वाः। अनुऽमाद्यासः। नमस्यन्तः। दिवः। आ। पृष्ठम्। अस्थुः। परि। द्यावापृथिवी इति। यन्ति। सद्यः ॥३॥

*सायणः*—भद्राः कल्याणाः अश्वा एतग्वा इत्येतदुभयमश्वनाम। तत्रैकं क्रियापरं योजनीयम्। अश्वाः तुरगा व्यापनशीला वा हरितः हर्तारः चित्राः विचित्रावयवाः अनुमाद्यासः अनुक्रमेण सर्वैः स्तुत्या मादनीयाः। एवम्भूताः सूर्यस्य एतग्वाः अश्वाः। यद्वा एतं गन्तव्यं मार्गं गन्तारोऽश्वाः। एतं शबलवर्णं वा प्राप्नुवन्तोऽश्वाः। नमस्यन्तः अस्माभिर्नमस्यमानाः सन्तो दिवः अन्तरिक्षस्य पृष्ठम् उपरिप्रदेशं पूर्वभागलक्षणम् आ तस्थुः आतिष्ठन्ति। यद्वाः हरितो रसहरणशीला रश्मयो भद्रादिलक्षणविशिष्टा दिवः पृष्ठं नभस्थलम् आतिष्ठन्ति। आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यः तदानीमेव, एकेनाह्ना परियन्ति परितो गच्छन्ति, व्याप्नुवन्तीत्यर्थः। अश्वाः। 'अशू व्याप्तौ' (धा० v–18)। 'अशिप्रुषि' (उ० i–151) इत्यादिना क्वन्। एतग्वाः। 'इण गतौ' (धा० ii–35)। असिहसि० (उ० iii–86) इत्यादिना कर्मणि तन्प्रत्ययः। गमेरौणादिको भावे ड्वप्रत्ययः। एतम् एतव्यं प्रति ग्वो गमनं येषां ते तथोक्ताः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अनुमाद्यासः। 'मदि स्तुतौ' (धा० i–13)। अस्माण्ण्यन्तात् 'अचो यत्' (iii–1–97)। 'यतोऽनावः' (vi–213) इत्याद्युदात्तत्वम्। नमस्यन्तः। 'नमो वरिव' iii–1–19) इति पूजार्थे क्यच्। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। अस्थुः। तिष्ठतेश्छान्दसो वर्तमाने लुङ्। 'गातिस्था०' (ii–4–77) इति सिचो लुक्। 'आतः' (iii–4–110) इति झेर्जुस् ॥३॥

*वेङ्कटमाधवः*—भद्रा अश्वाः। भजनीयाः। अश्वाः। हरिन्नामधेयाः। सूर्यस्य। चित्रवर्णाः। एतग्वा इति चाश्वनाम। स्तुत्याम् अनुमोदनीयाः। प्रह्वीभवन्तः। दिवः। पृष्ठस्थानीयमादित्यम्। आतस्थुस्ततः। द्यावापृथिव्यौ। परिगच्छन्ति। सद्य एव ॥३॥

Pet :—Bringing us blessing the yellow horses of the Sun, bright, swift, worthy to be praised, bend, and climb the steep of the sky: in a moment they go over heaven and earth.

तत् सूर्य॑स्य देव॒त्वं तन्म॑हि॒त्वं म॒ध्या कर्तो॒र्वित॑तं॒ सं ज॑भार ।
य॒देदयु॑क्त ह॒रित॑: स॒धस्था॒दाद्रात्री॒ वास॑स्तनुते सि॒मस्मै॑ ॥४॥

तत् । सूर्य॑स्य । दे॒व॒ऽत्वम् । तत् । म॒हि॒ऽत्वम् । म॒ध्या । कर्तो॑: । विऽत॑तम् ।
सम् । ज॒भा॒र॒ । य॒दा । इत् । अयु॑क्त । ह॒रित॑: । स॒धऽस्था॑त् ।
आत् । रात्री॑ । वास॑: । त॒नु॒ते॒ । सि॒मस्मै॑ ॥४॥

स यणः—सूर्यस्य सर्वप्रेरकस्यादित्यस्य तद् देवत्वम् ईश्वरत्वं स्वातन्त्र्यमिति यावत् । महित्वम् महत्त्वम् माहात्म्यञ्च तदेव । तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यत् कर्तोः । कर्मनामैतत् । प्रारब्धपरिसमाप्तस्य कृत्यादिलक्षणस्य कर्मणो मध्या मध्ये, अपरिसमाप्त एव तस्मिन् कर्मणि, विततम् विस्तीर्णं स्वकीयं रश्मिजालम् संजभार अस्माल्लोकात् स्वात्मन्युपसंहरति । कर्मकरश्च प्रवृत्तं कर्मापरिसमाप्तमेव विसृजत्यस्तं यन्तं सूर्यं दृष्ट्वा । ईदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति ? न कस्यापि । सूर्य एवेदृशं स्वातन्त्र्यं महिमानं चावगाहते । अपि च । इदित्यवधारणे । यदा इत् यस्मिन्नेव काले हरितः रसहरणशीलान् स्वरश्मीन् हरिद्वर्णानश्वान् वा सधस्थात् सहस्थानात् , अस्मात् पार्थिवाल्लोकात्, आदाय अयुक्त अन्यत्र संयुक्तान् करोति । यद्वा, युजिः केवलोऽपि विपूर्वार्थो द्रष्टव्यः । यदैवासौ स्वरश्मीन् अश्वान् वा सधस्थात् सह तिष्ठन्त्यस्मिन्निति सधस्थो रथः तस्मात् अयुक्त अमुञ्चत् । आत् अनन्तरमेव रात्री निशा वासः आच्छादयितृ तमः सिमस्मै । सिमशब्दः सर्वशब्दपर्यायः । सप्तम्यर्थे चतुर्थी । सर्वस्मिन् लोके । तनुते विस्तारयति यद्वा वासो वासरम् अह्नः; तत् सर्वस्मादस्माल्लोकादपनीय रात्री तमस्तनुते ।……॥ महित्वम् । 'मह पूजायाम्' (धा० i–716) । औणादिक इन्-प्रत्ययः 'तस्य भावस्त्वतलौ' (v–1–119) । मध्या । मध्यशब्दात् सप्तम्येकवचनस्य 'सुपां सुलुक्' (vii–1–39) इति डादेशः । कर्तो. । करोतेस्तोसुन्-प्रत्ययः । विततम् । विपूर्वात्तनोतेः कर्मणि निष्ठा । उदित्त्वेन क्त्वाप्रत्यय इटो विकल्पनाद् 'यस्य विभाषा' (vii–2–15) इतीट्-प्रतिषेध. । 'गतिरनन्तरः' (vi–2–49) इति गतेः प्रकृतिस्वरत्वम् । जभार । 'हृग्रहोर्भः०' (viii–2–32–1) इति भत्वम् । अयुक्त । युजेर्लुङि 'झलो झलि' (viii–2–26) इति सिचो लोपः । सधस्थात् । 'घञर्थे कविधानम्०' (iii–3–58–4) इत्यधिकरणे क-प्रत्ययः । 'सधमादस्थयोश्छन्दसि' (vi–3–96) इति सधादेश. । 'दासीभारादित्वात्' (vi–2–42) पूर्वपदप्रकृतिस्वरत्वम् । रात्री । 'रात्रेश्चाजसौ' (iv–1–31) इति ङीप् ॥४॥

यास्कः— ……तत् सूर्यस्य देवत्वं तन्महित्वं मध्ये यत् कर्मणां

क्रियमाणानां विततं संह्रियते, यदासावयुङ्क्त हरणान् आदित्यरश्मीन् हरितोऽश्वानिति वा, अथ रात्री वासस्तनुते सिमस्मै 'वासरमहरवयुवती-सर्वस्मात्' (नि० iv–11)।

वेङ्कटमाधव.—तत्। सूर्यस्य। ऐश्वर्यम्। तत्। महत्त्वं यत्। मध्ये। कर्मणः। विततं तत् कर्मास्तं यन्तं सूर्यं दृष्ट्वा कर्मकरः। संहरति। यदा। एवायम्। अश्वान् प्रातर्गमनाय। रथात्। नियोजयति तत्र। नियुक्त्यनन्तरमेव। रात्री। सर्वस्मै। वासः। तनुतेऽहरुद्गमयति। यद्वा रथाद्यदाश्वान् विमोचयति, अनन्तरमेव रात्रिर्वासः सदृश-मन्धकारं विकरोति ॥४॥

Pet. :—This is the godhead, this is the greatness of the Sun : while yet it was forming he has rolled the web of darkness away ; for, when he yoked his horses from their stall, Night was spreading her garment over all.

---

तन्मि॒त्रस्य॒ वरु॑णस्याभि॒चक्षे॒ सूर्यो॑ रू॒पं कृ॑णुते॒ द्योरु॒पस्थे॑ ।
अ॒न॒न्तम॒न्यद्रुश॑दस्य॒ पाजः॑ कृ॒ष्णम॒न्यद्ध॒रितः॒ संभ॑रन्ति ॥५॥

तत्। मि॒त्रस्य॑। वरु॑णस्य। अ॒भि॒ऽचक्षे॑। सूर्यः॑। रू॒पम्। कृ॒णु॒ते॒।
द्योः। उ॒पऽस्थे॑। अ॒न॒न्तम्। अ॒न्यत्। रुश॑त्। अ॒स्य॒।
पाजः॑। कृ॒ष्णम्। अ॒न्यत्। ह॒रितः॑। सम्। भ॒र॒न्ति॒ ॥५॥

*सायणः*—तत् तदानीम् उदयसमये मित्रस्य वरुणस्य एतदुभयोपलक्षितस्य सर्वस्य जगतः अभिचक्षे आभिमुख्येन प्रकाशनाय द्योः नभसः उपस्थे उपस्थाने मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपम् सर्वस्य निरूपकं प्रकाशकं तेजः कृणुते करोति। अपि च अस्य सूर्यस्य हरितः रसहरणशीला रश्मयो हरिद्वर्णा अश्वा वा अनन्तम् अवसानरहितं कृत्स्नस्य जगतः व्यापकं रुशत् दीप्यमानं श्वेतवर्णं पाजः। बलनामैतत्। बलयुक्तम्, अतिबलस्यापि नैशस्य तमसो निवारणे समर्थम् अन्यत् तमसो विलक्षणं तेजः सम्भरन्ति अहनि स्वकीयगमनेन निष्पादयन्ति तथा कृष्णं कृष्णवर्णं अन्यत्तमः स्वकीयाप-गमनेन रात्रौ। अस्य रश्मयोऽप्येवं कुर्वन्ति किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्य स्तुतिः॥ अभिचक्षे। सम्पदादिलक्षणे भावे क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। द्योः 'ङसिङसोश्च' (vi–1–110) इति पूर्वरूपता। उपस्थे। 'घञर्थे कविधानम्' (iii–3–58–4) इति क-प्रत्ययः। मरुद्वृधा-

दित्वात् (vi-2-1(6-2) पूर्वपदान्तोदात्तत्वम् । पाजः । पाति रक्षतीति पाजो बलम् । 'पातेर्बले जुट् च' (उ० iv-202) इत्यसुन , जुडागमश्च । छान्दसो मत्वर्थीयस्य विनो लोपः ॥४॥

वेङ्कटमाधवः—तत् । मित्रावरुणयोरहोरात्रयोः । दर्शनाय । सूर्यः । रूपम् । करोति । दिवः । उपस्थेऽन्तरिक्षे । तस्य । अपर्यन्तम् । अन्यतरतः स्थितम् । श्वेतम् । तेजः । रश्मयः । सम्भरन्ति । कृष्णं च । अन्यदन्धकारमित्यहि श्वेतं तेजः सम्भरन्ति रात्रावन्धकारम् "द्वे द्वेधसी······" (तै० सं० iii-2-2-2) इत्यध्वर्यूणां मन्त्रः ॥५॥

Pet. :—Then the Sun put his glory in the bosom of heaven, to be a light to Mitra and Varuṇa : in endless succession his horses bring now the clear day-light, now the darkness.

---

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥६॥

अद्य । देवाः । उत्ऽइता । सूर्यस्य । निः । अंहसः । पिपृत । निः ।
अवद्यात् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् ।
अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥६॥

सायणः—हे देवाः द्योतमानाः सूर्यरश्मयः, अद्य अस्मिन् काले सूर्यस्य आदित्यस्य उदिता उदितौ उदये सति इतस्ततः प्रसरन्तो यूयमस्मान् अंहसः पापात् निःपिपृत निष्कृष्य पालयत । यदिदमस्माभिरुक्तं नः अस्मदीयं तन्मित्रादयः षड् देवता. ममहन्ताम् पूजयन्तु अनुमन्यन्ताम् रक्षन्त्विति यावत् । मित्रः प्रमीतेस्त्रायकोऽहरभिमानी देवः, वरुणः अनिष्टानां निवारयिता राज्यभिमानी । अदितिः अखण्डनीया अदीना वा देवमाता । सिन्धुः स्यन्दनशीलोदकाभिमानिनी देवता । पृथिवी भूलोकस्याधिष्ठात्री द्यौः द्युलोकस्य । उतशब्दः समुच्चये ॥ अद्या । 'निपातस्य च' (vi-3-166) इति संहितायां दीर्घत्वम । उदिता । उत्पूर्वादेतेर्भावे क्तिन् । 'सुपां सुलुक्' (vii-3-136) इति डादेशः । 'तादौ च' (vi-2-50) इति गतेः प्रकृतिस्वरत्वम् । पिपृत । 'पृ पालनपूरणयोः' (धा० iii-4) । पृ इत्येके । लोटि जुहोत्यादित्वाच्छपः श्लुः । द्विर्वचनोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च' (पा० vii-4-77) इत्यभ्यासस्येत्त्वम् । 'सार्वधातुकमपित्' (i-2-4) इति तशब्दस्य ङित्त्वे सति 'ऋचि तुनुघ' (पा० vi-3-133) इत्यादिना संहितायां दीर्घः ॥६॥

वेङ्कटमाधवः—अद्य । देवाः । सूर्यस्य । उदये सत्यस्मात् । दारिद्र्यात् । पापाच्च । निष्पारयत । तन्न इति ॥६॥

Pet. :—To-day, O gods, at the rising of the Sun free us from trouble, free us from sin : this boon may Mitra, Varuṇa, Aditi, Sindhu, Earth and Heaven, fulfill to us.

---

## 5. I—116

कक्षीवान् ऋषिः । त्रिष्टुप् छन्दः । अश्विनौ देवते ।

नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।
यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥१॥

नासत्याभ्याम् । बर्हिःऽइव । प्र । वृञ्जे । स्तोमान् । इयर्मि । अभ्रियाऽइव । वातः । यौ । अर्भगाय । विऽमदाय । जायाम् । सेनाऽजुवा । निऽऊहतुः । रथेन ॥१॥

सायणः—बर्हिरिव यथा कश्चिद् यजमानो यागार्थं बर्हिः प्रवृञ्जे प्रकर्षेण न्यूनानतिरिक्तं यागाय पर्याप्तं दर्भं वृङ्क्ते छिनत्ति सम्पादयतीति यावत् । एवम् अहं नासत्याभ्याम् अश्विभ्याम् स्तोमान् स्तुतीः इयर्मि सम्पादयामि । एतदेव विशदीक्रियते । अभ्रियेव यथाभ्रियाण्यभ्रेषु मेघेष्ववस्थितान्युदकानि वातः वायुर्वर्षणार्थं बहुशः प्रेरयति, एवमहमश्विभ्यां स्तोत्राणीयर्मि बहुशः प्रेरयामि । कीदृशावश्विनौ ? अर्भगाय बालाय स्वयंवरलब्धभार्याय विमदाय एतत्संज्ञकाय राजर्षये मध्येमार्गं स्वयंवरार्थमागतैस्तामलभमानैरन्यैर्नृपैः सह योद्धुमशक्नुवतेऽपि तस्मै सेनाजुवा शत्रुसेनायाः प्रेरकेण शत्रुभिर्दुष्प्रापेण रथेन यावश्विनौ जाया भार्या परैरनाक्रान्ताम् । न्यूहतुः शत्रून् निहत्य तदीयं गृहं प्रापयामासतुः । ताभ्यामित्यर्थः ॥ नासत्याभ्याम् । सत्सु भवौ सत्यौ । न सत्यावसत्यौ । न असत्यौ नासत्यौ । नभ्राण्नपाद् (vi–3–15) इत्यादिना नञः प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । वृञ्जे । वृजि वर्जने (धा० ii–19) । आदादिकः । इदित्त्वान्नुम् । 'लोपस्त आत्मनेपदेषु (vii–1–41) इति तलोपः । इयर्मि । ऋ गतौ (धा० iii–16) जौहोत्यादिकः । अर्तिपिपर्त्योश्च (vii–4–77) इत्यभ्यासस्येत्त्वम् । अभ्यासस्यासवर्णे (vi–4–78) इतीयङ् । अभ्रियेव । 'समुद्राभ्राद् घः' iv–5–118) इति भावार्थे घः । घस्येयादेशः । 'शेश्छन्दसि बहुलम्' (vi–1–70) इति शेर्लोपः । अर्भगाय । अर्तिगृभ्यां भन् (उ० iii–152) इत्यर्तेर्भन् ।

अर्भ एवार्भकः। 'संज्ञायां कन्' (v-3-87)। छान्दसो गकारः। अपर आह—अर्भमल्पं गायति शब्दयतीत्यर्भगः। कै गै शब्दे (धा० i-901-2)। गापोष्टक् (iii-2-8) 'आतो लोप इटि च' (vi-4-64) इत्याकारलोप.। तदेतत् पदकृतः शाकल्यस्याभिमतम्। सेनाजुवा। जु इति सौत्रो धातुर्गत्यर्थः। अस्मादन्तर्भावितण्यर्थात् 'क्विब्वचिप्रच्छि०' (काशिका iii-2-178) इत्यादिना क्विब्दीर्घौ। तन्वादित्वाद् (vi-4-77-1) उवङ्। न्यूहतुः। वह प्रापणे (धा० 1-184) लिट्यतुसि यजादित्वात् सम्प्रसारणम्। 'यद्वृत्तान्नित्यम्' viii-1-66) इति निघातप्रतिषेधः ॥१॥

वेङ्कटमाधवः—कक्षीवान् दैर्घतमस उशिक्प्रसूतः। यथा कश्चिद् यज्ञार्थं बर्हिः प्रवृङ्क्त एवमहम्। स्तोमानन्यूनातिरिक्तं करोमि स्तोमान् प्रेरयामि। अभ्रसमूहमिव वातः। यौ। बालाय। विमदायोढमार्यार्थं स्वगृहं प्रतियच्छते शत्रुभिरभिभूताय ताम् भार्याम्। सेना प्रतिगच्छता रथेन तद्गृहं प्रति। न्यूहतुः 'याभिः पत्नीर्विमदाय' (ऋ० वे० i-112-19) इति कुत्सः ॥१॥

Grif.—I trim like grass my song for the Nāsatyas, and send their lauds forth as the wind drives rain-clouds,
Who in a chariot rapid as an arrow, brought to the youthful Vimada a consort.

---

वीळुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना।
तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥२॥

वीळुपत्मऽभिः। आशुहेमऽभिः। वा। देवानाम्। वा। जूतिऽभिः।
शाशदाना। तत्। रासभः। नासत्या। सहस्रम्। आजा।
यमस्य। प्रऽधने। जिगाय ॥२॥

सायणः—वीळुपत्मभिः वीळ्विति बलनाम। बलवदुत्पतनैः आशुहेमभिः शीघ्रगमनैः। वाशब्दः समुच्चये। हे नासत्या अश्विनौ। एवम्भूतैरश्वैश्च देवानाम् इन्द्रादीनां जूतिभिः प्रेरणैश्च शाशदाना शाशद्यमानयोरत्यर्थं प्रेर्यमाणयोर्युवयोर्वाहनभूतो यो रासभः प्रजापतिना दत्तः सः यमस्य वैवस्वतस्य प्रीतिकरे प्रधने प्रकीर्णधनोपेते आजा आजौ संग्रामे तत् शत्रूणां सहस्रम् जिगाय जितवान्। वैवस्वतो हि बहूनां मरणहेतुना सङ्ग्रामेण तुष्टो भवति। यद्वा जेतव्यत्वेन प्रजापतिना निहितमृक्सहस्रं शीघ्रगमनयुक्तो रासभो जिगाय जयेनालभत। अन्येभ्यो देवेभ्यः पूर्वमेवाजिं प्राप्य युवां जयं प्रापयामास।

तथा चास्मिन्नर्थे प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् (ऐ० ब्रा० xvii-1) इत्यादिकं ब्राह्मणमनुसन्धेयम् ॥ वीळुपत्मभिः वीळु बलवत्पतन्त्युत्पतन्तीति वीळुपत्मानः । आशुहेमभिः । आशु शीघ्रं हिन्वन्ति गच्छन्तीत्याशुहेमानः । तैः । हि गतौ वृद्धौ च (धा० v-11) । 'अन्येभ्योऽपि दृश्यन्ते' (iii-2-75) इति मनिन् । कृदुत्तरपदप्रकृतिस्वरत्वम् । जूतिभिः 'ऊतियूतिजूति' (iii-3-97) इत्यादिना क्तिन्, उदात्तत्वम् । शाशदाना, शद्लृ शातने (धा० i-840), अत्र गत्यर्थः, धातूनामनेकार्थत्वात् । अस्माद् यङन्ताल्लटः शानच् । तस्य 'छन्दस्युभयथा' (iii-4-117) इत्यार्धधातुकत्वात् श्यनभावः । अतोलोपयलोपौ । 'अभ्यस्तानामादिः' (vi-1-189) इत्याद्युदात्तत्वम् । 'सुपां सुलुक्' (vii-1-39) इति षष्ठ्याः पूर्वसवर्णदीर्घः । आजा । तेनैव सूत्रेण डादेशः । जिगाय । जि जये (धा० i-554) । 'सन्लिटोर्जेः' (vii-3-57) इत्यभ्यासादुत्तरस्य कुत्वे गकारः ॥२॥

*स्कन्दस्वामी*:—वीळु दृढं पत्म पतनं येषाम् । सन्ततमपि गच्छतां येषां गतिर्न हीयत इत्यर्थः । ते वीळुपत्मानोऽश्विनोः स्वभूता रासभाः । तैर्वीळुपत्मभिः । आशुहेमभिः वा । हि गतौ । वाशब्दश्चात्र चार्थे । शीघ्रगामिभिश्च । देवानां वा जूतिभिः अत्रापि वाशब्दश्चार्थ एव । जूतिभिरिति जवतेर्गत्यर्थस्य करणे क्तिन्प्रत्ययः । देवानां च गमनैः । देवानामेव योग्या नान्यस्येत्यर्थः । ते शाशदाना । शदिर्गत्यर्थः । ताच्छील्ये चात्र कानच् । षष्ठीद्विवचनस्य चाकारः । गमनशीलयोर्द्वयोः स्वभूतो रासभः गर्दभः रथे नियुक्तः सन् हे नासत्यौ (नासत्या) तत् सहस्रम् तच्छब्दश्रुतेरुक्तेतिहासार्थयुक्तो यच्छब्दोऽध्याहार्यः । यत् सूर्याविवाहानन्तरं प्रजापतिर्देवेभ्योऽददात् तत्सहस्रमृचाम् आजा अथादेर्धावनभूमिराजिरुच्यते । तस्याम् । यमस्य । तमसां यमनाद्यम आदित्य इहोच्यते । तस्य सम्बन्धिन्याम् । कः पुनरादित्यस्याजिसम्बन्धः ? उच्यते । आदित्यस्तस्या अन्त आसीत् । तथाहि ब्राह्मणम्—तेऽग्नेर्गृहपतेरुपर्यादित्यं काष्ठामकुर्वत (ऐ० ब्रा० xvii-1) इति । प्रधने संग्रामे । अग्न्यादिभिः सह संस्पर्धायामित्यर्थः । जिगाय जितवान् ॥२॥

*वेङ्कटमाधवः*—दृढपतनैः । आशुगमनैः । च । देवानाम् । च । प्रोत्साहनैः । गच्छतोः । तत् प्रजापतिना दत्तम् । सहस्रमाश्विनं नाम मन्त्रतोरश्वः । रासभः नासत्यौ । बलस्य । प्रख्यापने । युद्धे । जिगाय ॥२॥

Grif. :—Borne on by rapid steeds of mighty pinion, or proudly trusting in the Gods' incitements,
That stallion ass of yours won, O Nāsatyas, that thousand in the race, in Yama's contest.

---

तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥ ३ ॥

तुग्रः । ह । भुज्युम् । अश्विना । उदऽमेघे । रयिम् । न । कः । चित् । ममृऽवान् । अव । अहाः । तम् । ऊहथुः । नौभिः । आत्मन्ऽवतीभिः । अन्तरिक्षप्रुत्ऽभिः । अपऽउदकाभिः ॥३॥

सायणः—तुग्रः ह खलु पूर्वं शत्रुभिः पीडितः संस्तज्जयार्थम् उदमेघे, उदकैर्मिह्यते सिच्यत इत्युदमेघः समुद्रः, तस्मिन् भुज्युम् एतत्संज्ञकं प्रियं पुत्रं अवाहाः नावा गन्तुं पर्यत्याक्षीत् । तत्र दृष्टान्तः—ममृवान् म्रियमाणः सन् धनलोभी कश्चित् मनुष्यः रयिम् न यथा धनं परित्यजति तद्वत् । हे (अश्विना) अश्विनौ तम् च भुज्युं मध्येसमुद्रं निमग्नं नौभिः पितृसमीपं ऊहथुः युवां प्रापितवन्तौ । कीदृशीभिः ? आत्मन्वतीभिः आत्मीयाभिर्युवयोः स्वभूताभिरित्यर्थः । यद्वा धृतिरात्मा धारणावतीभिरित्यर्थः । अन्तरिक्षप्रुद्भिः अतिस्वच्छत्वादन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः अपोदकाभिः सुश्लिष्टत्वादपगतोदकाभिरप्रविष्टोदकाभिरित्यर्थः ॥ उदमेघे । मिह सेचने (धा० i–972) । कर्मणि घञ् । 'न्यङ्क्वादीनां च' (vii–3–53) इति कुत्वम् । 'उदकस्योदः संज्ञायाम्' (vi–3–57) । थाथादिना उत्तरपदान्तोदात्तत्वम् । ममृवान् । 'मृङ् प्राणत्यागे । लिटः क्वसुः । क्रादिनियमात् (vii–2–13) प्राप्तस्येटो 'वस्वेकाजाद्घसाम्' (vii–2–67) इति नियमादभावः । अहाः । ओहाक् त्यागे (धा० iii–8) लुङि सिपि च्लेः सिच् । आगमानुशासनस्यानित्यत्वात् सगिटौ न क्रियेते । बहुलं छन्दसि (vii–3–91) इतीडभावः । 'हल्ङ्याब्भ्यः' (iii–1–68) इति तिलोपः । रुत्वविसर्गौ । यद्वा । 'मन्त्रे घस' इति च्लेर्लुक् । च्लेर्लुप्तत्वादिण न क्रियते । नौभिः । 'सावेकाचः' (vi–1–168) इति विभक्तेरुदात्तत्वम् । आत्मन्वतीभिः । आत्मनो मतुप् । 'मादुपधायाः' इति वत्वम् । 'अनो नुट्' (viii–2–16) इति नुट् । नलोपः । 'ह्रस्वनुड्भ्यां मतुप्' (vi–1–176) इति मतुप उदात्तत्वम् । अन्तरिक्षप्रुद्भिः । प्रुङ् गतौ (धा० i–937) । क्विप् च (iii–2–67) इति क्विप् ॥३॥

स्कन्दस्वामी—तुग्र इति योऽश्विभ्यामभिसम्बन्धात् पितृशब्देनेदं पुत्रस्याभिधानम् । द्वितीयार्थे च प्रथमा । हेति पदपूरणम् । तुग्रपुत्रं भुज्युं नाम राजानं हे अश्विनौ उदमेघे । मिह सेचने । उदकेन मिह्यति सिच्यते वेत्युदमेघः समुद्रः । तत्र । रयिं न कश्चिन्ममृवान् यथा धनं कश्चिन्म्रियमाणो जहाति, एवम् अवाहाः । अवेत्येष परीत्येतस्य स्थाने । ओहाक् त्यागे । प्रथमपुरुषबहुवचनस्य स्थाने मध्यमपुरुषैकवचनमेतत् । विपन्नावं सन्तं परित्यक्तवन्तः । के ? सखायः । कुत एतत् ? उत त्यं भुज्युमश्विना [ऋ० सं० vii–68–7] इति

मन्त्रान्तरे दर्शनात् । तम् युवाम् ऊहथुः तटं प्रापितवन्तौ । उत्तारितवन्तावित्यर्थः । केन ? उच्यते । नौभिः । कीदृशीभिः ? उच्यते । आत्मन्वतीभिः आत्मसंयुक्ताभिः । स्वयमेवेत्यर्थः । अन्तरिक्षप्रुद्भिः । प्रवत इति गतिकर्मा । अन्तरिक्षगामिनीभिः । उदकमसंस्पृशन्तीभिरिव गच्छन्तीभिरित्यर्थः । अपोदकाभिः अपगतोदकाभिः । मनागप्युदकेनाभिद्यमानाभिरित्यर्थः । तदेतत् कृत्स्नेनाप्युक्तम्—भुज्युं याभिः (ऋ० सं० i-112-6) इति ॥३॥

*वेङ्कटमाधवः*—तुग्रः । ह । भुज्युं पुत्रम् । अश्विनौ । समुद्रे । धनम् । इव । कः । चित् । म्रियमाणः समुद्रमध्यस्थानां शत्रूणां योधनार्थमपि वाऽन्येन कारणेन । प्रहितवान् समुद्रमध्ये तस्य नौः सन्नाऽभवदथाश्विनौ युवाम् । तं समुद्रस्य पारम् ऊहथुः । नौभिः । युष्मदीयाभिः । अन्तरिक्षेण गच्छन्तीभिः सुश्लिष्टत्वादप्रविष्टोदकाभिः ॥३॥

Grif. :—Yea, Aśvins, as a dead man leaves his riches, Tugra left Bhujyu in the cloud of waters.
Ye brought him back in animated vessels, traversing air, unwetted by the billows.

---

तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।
समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥४॥

तिस्रः । क्षपः । त्रिः । अहा । अतिव्रजत्ऽभिः । नासत्या । भुज्युम् । ऊहथुः । पतङ्गैः । समुद्रस्य । धन्वन् । आर्द्रस्य । पारे । त्रिऽभिः । रथैः । शतपत्ऽभिः । षट्ऽअश्वैः ॥४॥

*सायणः*—(नासत्या) हे नासत्यौ सेनया सहोदके निमग्नं भुज्युम् तिस्रः क्षपः त्रिसंख्याका रात्रीः त्रिः अहा त्रिवारमावृत्तान्यहानि च अतिव्रजद्भिः अतिक्रम्य गच्छद्भिः, एतावन्तं कालमतिव्याप्य वर्तमानैः पतङ्गैः पतद्भिः त्रिभिः त्रिसंख्याकैः रथैः ऊहथुः युवामूढवन्तौ । क्वेति चेत्, उच्यते । समुद्रस्य अम्बुराशेर्मध्ये धन्वन् धन्वनि जलवर्जिते प्रदेशे, तथा आर्द्रस्य उदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च । कथंभूतै रथैः । शतपद्भिः शतसंख्याकैश्चक्रलक्षणैः पादैरुपेतैः षळश्वैः षड्भिरश्वैर्युक्तैः॥ तिस्रः । 'त्रिचतुरोः स्त्रियाम्' (vii-2-99) इति त्रिशब्दस्य तिस्रादेशः । स चान्तोदात्तः । 'अचि र ऋतः' (vii-2-100) इति रेफादेशे 'उदात्तयणो हल्पूर्वात्' (vi-1-224) इति विभक्तेरुदात्तत्वम् । क्षपः । विभक्त्यन्तस्य छान्दसं ह्रस्वत्वम् । यद्वा शासि 'आतः' (vi-4-140)

इति योगविभागादधातोरप्याकारलोपः। अहा। 'शेश्छन्दसि बहुलम्' (vi-1-90) इति शेर्लोपः। पतङ्गैः। पत्लृ गतौ (धा० i-831)। पतेरङ्गच् (उ० i-116)। धान्वन्। धवि गत्यर्थः (धा० i-589)। इदित्त्वान्नुम्। 'कनिन्युवृषि' (उ० 1-156) इत्यादिना कनिन्। 'सुपां सुलुक्' (vii-1-39) इति सप्तम्या लुक्। शतपद्भिः। शतं पादा येषाम् (तैः)। संख्यासुपूर्वस्य (v-4-140) इति पादशब्दस्यान्त्यलोपः समासान्तः। अयस्मयादित्वेन (i-4-20) भत्वात् 'पादः पत्' (vi-4-130) इति पद्भावः। यद्वा पादशब्दसमानार्थः पच्छब्दः प्रकृत्यन्तरं द्रष्टव्यम् ॥४॥

स्कन्दस्वामीः—(तिस्रः क्षपः त्रिः अहा)। क्षपेति रात्रिनाम। तिस्रो रात्रीस्त्रीणि चाहानि सातत्येनातिव्रजद्भिः सुष्ठु गच्छद्भिः (नासत्या) हे नासत्यौ भुज्युम् ऊहथुः पतङ्गैः। पतङ्ग इत्यश्वनाम। अश्वैः। क्व प्रदेशे? उच्यते। समुद्रस्य एकदेशभूते धन्वन् धन्वनि निरुदकप्रदेशे। आर्द्रस्य पारे सोदकः प्रदेश आर्द्रः। तस्य पारेऽन्ते। समुद्रस्य मध्ये या उदकेन परिक्षिप्ताः''''''तास्वित्यर्थः। न च केवलैरश्वैः। किं तर्हि? त्रिभिः रथैः। रथैश्च त्रिभिः। द्वाभ्यामात्मनो यानाभ्यामेकेन भुज्योः कीदृशैः? शतपद्भिः शतपादैः। शतशब्दश्चात्र बहुनाम, सामर्थ्याच्चात्र आद्ये बहुत्वे वर्तते। पादशब्दोऽपि चक्रपादवचनः। त्रिचक्रपादैरित्यर्थः। कुत एतत्? 'क्व त्री''''''' (ऋ० सं० i-34-2) इत्येवमादिषु मन्त्रान्तरेष्वश्विनो रथस्य त्रिचक्रत्वदर्शनात्। षळश्वैः षड्भिरश्वैर्युक्तैः ॥४॥

वेङ्कटमाधवः—भुज्युस्त्रिभिरहोरात्रैः समुद्रमध्यात् स्वगृहं नीतः। तिस्रः। रात्रीः। त्रीणि च। अहानि भवद्भ्या सह। अतिगच्छद्भिः। नासत्यौ। भुज्युम्। ऊहथुः समुद्रमध्याद्। अश्वैः। समुद्रस्य मध्यस्थे। स्थले तथा। समुद्रस्य। पारात् तुग्रस्य गृहम्। त्रिभिश्च। रथैः। शतगमनसाधनैः। षडश्वैः।''''''॥४॥

Grif. :—Bhujyu ye bore with winged things, Nāsatyas which for three nights, three days full swiftly travelled,
To the sea's farther shore, the strand of ocean, in three cars, hundred-footed, with six horses.

---

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥५॥

अनारम्भणे। तत्। अवीरयेथाम्। अनास्थाने। अग्रभणे। समुद्रे।
यत्। अश्विनौ। ऊहथुः। भुज्युम्। अस्तम्। शतऽ-
अरित्राम्। नावम्। आतस्थिऽवांसम् ॥५॥

*सायणः*—हे अश्विनौ अनारम्भणे आलम्बनरहिते समुद्रे तत् कर्म अवीरयेथाम् विक्रान्तं कृतवन्तौ युवाम् । अनारम्भणत्वमेव स्पष्टीकरोति । अनास्थाने आस्थीयतेऽस्मिन्नित्यास्थानो भूप्रदेशः, तद्रहिते स्थातुमशक्ये जले इत्यर्थः । अग्रभणे अग्रहणे हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन्नित्यर्थः । किं पुनस्तत् कर्म ? भुज्युं समुद्रे मग्नं शतारित्राम् बह्वरित्राम् । यैः काष्ठैः पार्श्वतो बद्धैर्जलालोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि । ईदृशीं नावम् आतस्थिवांसम् आस्थितवन्तमारूढवन्तं कृत्वा अस्तम् । गृहनामैतत् । पितुस्तुग्रस्य गृहं प्रति यत् ऊहथुः प्रापयामासथुः तत् प्रापणमन्यैर्दुःशकं युवां समुद्रमध्ये कृतवन्तावित्यर्थः॥ अनारम्भणे आरभ्यत इत्यारम्भणम् । 'कृत्यल्युटो बहुलम्' (iii-3-13) इति कर्मणि ल्युट् । 'नञ्सुभ्याम्' (vi-2-172) इत्युत्तरपदान्तोदात्तत्वम् । अवीरयेथाम् । 'वीर विक्रान्तौ' (धा० x-359) चुरादिरात्मनेपदी । अनास्थानाग्रभणयोः पूर्ववल्ल्युट्स्वरौ । अयं तु विशेषः । 'हृग्रहोर्भः०' (viii-2-32-1) इति भत्वम् । अस्तम् । अस्यतेऽस्मिन् सर्वमित्यस्तं गृहम् । 'असिहसि' (cf. उ० iii-86) इत्यादिना तन्प्रत्ययः । शतारित्राम् । ऋ गतौ । 'अर्तिलूधूसू' (iii-2-184) इति करणे इत्रन् प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥५॥

*वेङ्कटमाधवः*—दण्डकाष्ठाद्यारम्भणवर्जिते । वृक्षशाखादिग्रहणवर्जिते । स्थानविजावे ? समुद्रे ? तद् युवाम् । वीरकर्म कृतवन्तौ स्थः । यद् युवाम् । अश्विनौ । भुज्युम् स्वगृहम् । ऽयूहथुः । शतदर्विकाम् । नावम् । आतस्थिवांसम् ॥५॥

Grif. :—Ye wrought that hero exploit in the ocean which giveth no support, or hold, or station,
What time ye carried Bhujyu to his dwelling, borne in a ship with hundred oars, O Aśvins.

---

यमश्विना द॒दथुः श्वे॒तमश्व॑मघाश्वा॑य॒ शश्व॒दित् स्व॒स्ति ।
तद्वां॑ दा॒त्रं महि॑ की॒र्तेन्यं॑ भूत्पै॒द्वो वा॒जी सद॒मिद्धव्यो॑ अ॒र्यः ॥६॥

यम् । अ॒श्वि॒ना॒ । द॒दथुः॑ । श्वे॒तम् । अश्व॑म् । अ॒घऽअ॑श्वाय । शश्व॑त् । इत् । स्व॒स्ति । तत् । वा॒म् । दा॒त्रम् । महि॑ । की॒र्तेन्य॑म् । भू॒त् । पै॒द्वः । वा॒जी । सद॑म् । इत् । हव्यः॑ । अ॒र्यः ॥६॥

*सायणः*—हे (अश्विना) अश्विनौ युवाम् अघाश्वाय अहन्तव्याश्वाय पेदुनाम्ने राजर्षये यम् श्वेतवर्णाम् अश्वम् ददथुः दत्तवन्तौ सोऽश्वस्तस्मै स्वस्ति जय-

लक्षणं मङ्गलं शश्वत् इत् नित्यमेव चकार। वां युवयोः तत् दात्रं दानं महि महद् अतिगम्भीरम् अत एव कीर्तेन्यम् सर्वैः कीर्तनीयं प्रशस्यं भूत् अभूत्। तस्मात् पैद्वः पेदोः सम्बन्धी पतनशीलः शीघ्रगामी वा अर्यः शत्रूणां प्रेरयिता युद्धेषु प्रेरयितव्यो वा वाजी वेजनवान् (नि० ii–28) सोऽश्वः सदम् इत् सदैव ह्व्यः अस्माभिरप्याह्वातव्यः॥ दात्रम् ददातेर्भावः औणादिकस्त्रप्रत्ययः। महि 'मह पूजायाम्' (धा० i–716)। 'इन् सर्वधातुभ्यः' (उ० iv–117) इतीन्। कीर्तेन्यम्। 'कृत संशब्दने' (धा० x–118)। 'कृत्यार्थे तवैकेन्केन्यत्वनः' (iii–4–14) इति केन्यप्रत्ययः। 'ऋत इद्धातोः' (vii–1–100) इतीत्त्वम्। भूत्। 'वहुलं छन्दस्यमाङ्योगेऽपि' (vi–4–75) इत्यडभावः। पैद्वः। पेदोः सम्बन्धी। 'तस्येदम्' (iv–3–120) इत्यण्। छान्दसो वर्णलोपः। ह्व्यः। 'अचो यत्' (iii–1–97) इति यत्। 'वहुलं छन्दसि' (vi–1–34) इति सम्प्रसारणम्। गुणः। 'धातोस्तन्निमित्तस्यैव' (vi–1–80) इत्यवादेशः। अर्यः। 'ऋ गतौ'। 'अघ्न्यादयश्च' (उ० iv–551) इत्यौणादिको यत्। व्यत्ययेनान्तोदात्तत्वम्॥६॥

*वेङ्कटमाधवः*—अघाश्वो नाम कश्चित् तस्मै शत्रुजयार्थम्। अश्विनौ। कञ्चन श्वेतम्। अश्वम्। ददतु? (थुः) सोऽश्वस्तस्मै। सदा। स्वस्ति करोति। तत्। युवयोः। दानम्। महत्। सर्वदा कीर्तनीयम्। भवति। अश्वो बलवान्। सदा। एव युद्धेषु। आह्वातव्यो भवति। धनस्य प्रदाता॥६॥

Grif. :—The white horse which of old ye gave Aghaśva, Aśvins, a gift to be his wealth for ever,
Still to be praised is that your glorious present, still to be famed is the brave horse of Pedu.

---

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंन्धिम्।
कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः॥७॥

युवम्। नरा। स्तुवते। पज्रियाय। कक्षीवते। अरदतम्। पुरम्ऽधिम्।
कारोतरात्। शफात्। अश्वस्य। वृष्णः। शतम्।
कुम्भान्। असिञ्चतम्। सुरायाः॥७॥

*सायणः*—हे नरा नेतारावश्विनौ युवं युवां पज्रियाय। पज्रा इत्यङ्गिरसामाख्या 'पज्रा वा अङ्गिरसः' इत्याम्नातत्वात्। तेषां कुले जाताय कक्षीवते। 'कक्ष्या रज्जुरश्वस्य' (नि० ii–2) तद्वते। तत्संज्ञाय स्तुवते युवयोः स्तुति

कुर्वते मह्यं पुरन्धिम् प्रभूतां धियं बुद्धिं अरदतम् व्यलिखतम्। यथा (बुद्धिः) सर्वार्थगोचरा भवति तथा कृतवन्तावित्यर्थः। अपि च कारोतरात्, कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन् सुरायाः स्रावणं क्रियते। लुप्तोपममेतत्। कारोतरात् यथा सुरायाः सम्पादकास्तां स्रावयन्ति, एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयस्य अश्वस्य शफात् खुरात् सुरायाः शतं कुम्भान् असंख्यातान् सुराघटान् असिञ्चतम् अस्रावयतम्। यद्वा। सिञ्चतिः पूरणार्थः। कारोतरस्थानीयाद् युष्मदीयाश्वखुराद् या सुरा प्रवहति तया संख्यातान् घटान् असिञ्चतम् अपूरयतम्। ये जनाः सौत्रामण्यादिकर्मणि युस्मद्यागाय सुरां याचन्ते तेषामित्यर्थः॥ स्तुवते स्तौतेर्लटः शतृ। अदादित्वाच्छपो लुक्। 'शतुरनुमः' (iv–1–173) इति विभक्तेरुदात्तत्वम्। पज्रियाय। 'पज्रशब्दाच्छैपिको घच्। कक्षीवते। 'आसन्दीवदष्ठीवच्चक्रीवत् कक्षीवत्' (viii–2–12) इति निपातनात् कक्ष्याशब्दस्य सम्प्रसारणं वत्वं च। अरदतम्। 'रद् विलेखने' (धा० i–53)। पुरन्धिम्। "पुरन्धिर्बहुधीः" इति यास्कः (नि० vi–13) पृषोदरादित्वात् पुरन्धिभावः। यद्वा पुरं पूरयितव्यं सर्वविषयजातमस्यां धीयतेऽवस्थाप्यते इति पुरन्धिर्बुद्धिः। 'कर्मण्यधिकरणे च' (iii–3–93) इति दधातेः किप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' (vi–3–14) इति बहुलवचनादलुक्। इदं तु व्युत्पत्तिमात्रम्, वस्तुतः पृषोदरादिरेव। असिञ्चतम्। 'षिचिर् क्षरणे' (धा० vi–150)। तौदादिकः। 'शे मुचादीनाम्' (vii–1–59) इति नुम्॥७॥

वेङ्कटमाधवः—युवम् नरा! स्तुवते। व? (प) ज्रकुलाय। कक्षीवते मह्यम्। प्रच्छन्नां बुद्धिं शस्त्रेणेव। अरदतम्। 'कक्षीवन्तं स्तोतारम्' इति कुत्सः। कूपसदृशात्। वर्षितुः अश्वस्य। शफात्। सुरायाः शतम्। कुम्भान्। क्रमेण पूरितवन्तौ कस्मैचन याचमानाय॥७॥

Grif. :—O Heroes, ye gave wisdom to Kaksīvān who sprang from Pajra's line, who sang your praises.
Ye poured from the hoof of your strong charger a hundred jars of wine as from a strainer.

---

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम्।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति॥८॥

हिमेन। अग्निम्। घ्रंसम्। अवारयेथाम्। पितुऽमतीम्। ऊर्जम्। अस्मै। अधत्तम्। ऋबीसे। अत्रिम्। अश्विना। अवऽनीतम्। उत्। निन्यथुः। सर्वऽगणम्। स्वस्ति॥८॥

*सायण:*—अश्विना हे अश्विनौ हिमेन हिमवच्छीतेनोदकेन घ्रंसं दीप्यमानम् अत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निम् अवारयेथा युवां निवारितवन्तौ शीतीकृतवन्तावित्यर्थः। अपि च अस्मै असुरपीडया कार्श्यं प्राप्तायात्रये पितुमतीम्। पितुरित्यन्ननाम। अन्नयुक्तम् ऊर्जं बलप्रदं रसात्मकं क्षीरादिकम् अधत्तम् पुष्ट्यर्थं प्रायच्छतम्। ऋबीसे अपगतप्रकाशे पीडायन्त्रगृहे अवनीतम् अवाङ्मुखतयासुरैः प्रापितम् अत्रिम् सर्वगणम्। गणः समूहः। सर्वेषामिन्द्रियाणां पुत्रादीनां वा गणेनोपेतं स्वस्ति अविनाशो यथा भवति तथा उन्निन्यथुः तस्माद् गृहाद्दुद्गमय्य युवां स्वगृहं प्रापितवन्तौ। यद्वा हिमेन शीतेन वृष्ट्युदकेन अग्निम् अग्निवत् तीक्ष्णं घ्रंसम्। अहर्नामैतत्। सामर्थ्यान्निदाघकालीनमहः। अवारयेथाम्। तस्याहस्तैक्ष्ण्यं निवारितवन्तौ। अपि च अस्मै अग्नये पितुमतीम् चरुपुरोडाशादिलक्षणान्नोपेतम् ऊर्जं बलकरमुपस्तरणाभिघारणात्मकं घृतं अधत्तम् वृष्ट्युत्पादनेनाग्नेर्योगार्थं हवींषि निष्पादितवन्तावित्यर्थः। ऋबीसे अपगततेजस्के पृथिवीद्रव्ये अवनीतम् ओषधीनामुत्पादनायावस्तान्नीतम्। पार्थिवाग्निना परिपक्वा उदकेन क्लिन्नाः ह्योषधिवनस्पतयो विरोहन्ति। अत्रिम् हविषामत्तारमोषधिवनस्पत्यादीनां वा। एवंविधमग्निं सर्वगणम् व्रीह्याद्यौषधिगणोपेतं हे अश्विनौ युवां स्वस्ति अविनाशो यथा भवति तथा उन्निन्यथुः व्रीह्योषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवन्तौ। कारणात्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिकमश्विनौ प्रकर्षेण व्यक्तीकृतवन्तावित्यर्थः। अयं पक्षो यास्केन 'हिमेनोदकेन' (नि० vi-36) इत्यादिनोक्तः॥ पितुमतीम्। 'ह्रस्वनुड्भ्यां मतुप्' (vi-1-1-76) इति मतुप उदात्तत्वम्। ऋबीसे। अत्र यास्कः, 'ऋबीसमपगतभासमपचितभासमपहृतभासं गतभासं वा' (नि० vi-35) इति। पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। अत्रिम्। 'अद भक्षणे' (धा० ii-1)। 'अदेस्त्रिनिश्च' (उ० (द) i-37, (प) iv-68) इति चशब्दात् त्रिप्। अवनीतम्। 'गतिरनन्तरः' (vi-2-49) इति गतेः प्रकृतिस्वरत्वम्। स्वस्ति। 'अस् भुवि' (धा० ii-55)। भावे क्तिन्। 'छन्दस्युभयथा' (iii-4-117) इति सार्वधातुकत्वादस्तेर्भूभावाभावः ॥८॥

*वेङ्कटमाधवः*—हिमवर्षेण। अग्निम्। उरुदीप्तिम्। अवारयेथाम्। अन्नवन्तम्। रसं च तत्र। अस्मा अत्रये। अधत्तम्। अपगतभास्के गतभास्के वाग्नावासुरैः। प्रक्षिप्तम्। अत्रिम्। अश्विनौ! उन्निन्यथुः। अविकलसर्वेन्द्रियगणम्। अविनाशेन। यद्वात्रिः पुत्रपौत्रैः सह प्रक्षिप्तः ॥८॥

Grif. .—Ye warded off with cold the fire's fierce burning; food very rich in nourishment ye furnished.
Atri, cost downwords in the cavern, Aśvins ye brought, with all his people, forth to comfort.

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥९॥

परा । अवतम् । नासत्या अनुदेथाम् । उच्चाऽबुध्नम् । चक्रथुः ।
जिह्मऽबारम् । क्षरन् । आपः । न । पायनाय । राये ।
सहस्राय । तृष्यते । गोतमस्य ॥९॥

*सायणः*—हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा । एतत्संज्ञावश्विनौ युवम् युवाम् अवतम् । कूपनामैतत् । अवस्तात् तत् कूपं परानुदेथां गोतमस्य समीपे प्रेरिषाथाम् । तदनन्तरं तं कूपम् उच्चाबुध्नम् उच्चैरुपरिष्टाद् बुध्नो मूलं यस्य स तथोक्तः । जिह्मबारम् जिह्ममधस्ताद्वर्तमानतया वक्रं वारं द्वारं यस्य स तथोक्तः । एवंगुणविशिष्टं चक्रथुः युवामकृषाथाम् । तस्मात् कूपात् तृष्यते पिपासतो गोतमस्य पायनाय पानार्थं आपो न आपश्च । अयं नशब्दश्चार्थे । क्षरन् प्रवाहरूपेण निरगमन् । कीदृशम् । राये हवींषि दत्तवते । सहस्राय सहनशीलाय । यद्वा सहस्रसंख्यकाय राये धनाय एतत्संख्यधनलाभार्थं चाक्षरन् ॥ अनुदेथाम् । 'णुद प्रेरणे' (धा० vi–2) । तौदादिकः । जिह्मबारम् । द्वारशब्दस्य पृषोदरादित्वाद्बारादेशः । क्षरन् । 'क्षर सञ्चलने' (धा० i–836) । 'बहुलं छन्दस्यमाङ्योगेऽपि' (vi–4–75) इत्यडभावः । शपः पित्त्वादनुदात्तत्वम् । तिङो लसार्वधातुकस्वरेण धातुस्वरः । पायनाय । हेतुमति णिच् । 'शाच्छासाह्वा' (vii–3–37) इति युक् । भावे ल्युट् । राये । 'रा दाने' (धा० ii–47) राति ददातीति राः । 'रातेर्डैः' (उ० ii–66) । 'ऊडिदम्' (vi–1–171) इति विभक्तेरुदात्तत्वम् । तृष्यते । 'ञितृषा पिपासायाम्' (धा० iv–120) । श्यन् । लटः शतृ । श्यनो नित्त्वादाद्युदात्तत्वम् । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' (ii–3–62–1) इति चतुर्थी ॥९॥

*स्कन्दस्वामी*—परावतं नासत्यानुदेथाम् इति । अवत इति कूपनाम । कूपं हे नासत्यौ परानुदेथाम् इति । अवत इति कूपनाम । कूपं हे नासत्यौ परानुदेथाम् । णुद प्रेरणे । पराङ्मुखं गोतमं प्रति प्रेरितवन्तौ स्थः । नीचं च सन्तम् उच्चाबुध्नं चक्रथुः जिह्मबारम् । जिह्मशब्दोऽत्राधोभाववचनः, न कुटिलवचनः । उपरिबुध्नमधोमुखं कृतवन्तौ स्थ इत्यर्थः । अधोमुखात् तस्मात् क्षरन् सततस्य आपः पायनाय पानार्थम् । कथम् ? न राये सहस्राय नशब्दोऽत्र पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीयो द्रष्टव्यः । राये सहस्रायेति प्रथमाबहुवचनस्य स्थाने चतुर्थी । धनानीव सहस्रसंख्यानि । यथा कूपकलशादधोमुखात् सहस्रसंख्याका रूपकाः क्षरन्ति तद्वदित्यर्थः । कस्य पानाय ? तृष्यते गोतमस्य, तृष्यते इति षष्ठ्यर्थे चतुर्थी । तृषा बाध्यमानस्य गोतमस्य पानायेति ॥९॥

वेङ्कटमाधवः—परानुदेथाम्। कूपम्। अश्विनौ। तमुच्चैःस्थितमूलम् नीचीनद्वारम्। चक्रथुः। तस्मात् कूपादुदकानि। इव। पिपासोर्गोतमस्य पानार्थं धनानि च।" अक्षरन्। सहस्राय। धनाय। तृष्यते। गोतमाय। "ऊर्ध्वं नुनुद्रेऽवतं त ओजसा" इति गोतमः ॥९॥

Grif. :—Ye lifted up the well, O ye Nāsatyas, and set the base on high to open downwords.
Streams flowed for folk of Gotama who thirsted, like rain to bring forth thousandfold abundance,

---

जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात्।
प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम् ॥१०॥

जुजुरुषः। नासत्या। उत। वव्रिम्। प्र। अमुञ्चतम्। द्रापिम्ऽइव।
च्यवानात्। प्र। अतिरतम्। जहितस्य। आयुः। दस्रा। आत्।
इत्। पतिम्। अकृणुतम्। कनीनाम् ॥१०॥

सायणः—(नासत्या) हे नासत्यावश्विनौ जुजुरुषः जीर्णात् च्यवनात् च्यवनाख्यादृषेः सकाशाद् वव्रिम् कृत्स्नं शरीरमावृत्यावस्थितां जरां प्रामुञ्चतम प्रकर्षेणामोचयतम्। तत्र दृष्टान्तः। द्रापिमिव। द्रापिरिति कवचस्याख्या। यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चाच्छरीरात् पृथक्करोति तद्वत्। उत अपि च हे दस्रा एतत्संज्ञौ दर्शनीयौ वाश्विनौ जहितस्य पुत्रादिभिः परित्यक्तस्य ऋषेः आयुः जीवनं प्रातिरतम प्रावर्धयतम्। प्रपूर्वस्तिरतिर्वर्धनार्थः। आत् इत् अनन्तरमेव युवानं सन्तं कनीना कन्यानां पतिम् भर्तारम् अकृणुतम् अकुरुतम्॥ जुजुरुषः। 'जॄष् वयोहानौ' (धा० vi-22) लिटः क्वसुः। 'बहुलं छन्दसि' (vii-1-103) इति उत्वम्। द्विर्भावः। पञ्चम्येकवचने 'वसोः सम्प्रसारणम्' (vi-4-131) इति सम्प्रसारणम्। 'शासिवसिघसीनां च' (viii-3-60) इति षत्वम्। वव्रिम्। 'वृञ् वरणे' (धा० v-8)। 'आदृगमहन' (iii-2-171) इति किप्रत्ययः। जहितस्य। 'ओहाक् त्यागे' (धा० iii-8) कर्मणि निष्ठा। 'तस्य छन्दस्युभयथा' (iii-4-117) इति सार्वधातुकत्वाद् यक्। तस्य 'बहुलं छन्दसि' (ii-4-76) इति श्लुः। 'जहातेश्च' (vi-4-116) इतीत्वम्। कनीनाम्। 'ष्येमसो बहुलम्' (vi-4-116) इति बहुलवचनात् कन्याशब्दस्यात्र सम्प्रसारणम् ॥१०॥

स्कन्दस्वामी—जुजुरुषो नासत्येत्यादिना। उतशब्दोऽप्यर्थे। अपि पूर्वोक्तानि कर्माणि चक्रथुः, अपीदमन्यत्। किं तत्? उच्यते। जुजुरुषो जीर्णाद् वृद्धीभूताद् हे नासत्यौ वव्रिं

रूपं जरालक्षणं प्रामुञ्चतं प्रमोचितवन्तौ। अपनीतवन्तौ स्त इत्यर्थः। किमिव? उच्यते। द्रापिमिव कवचमिव योद्धुः शरीरात्। कुतोऽपनीतवन्तौ? च्यवानात् च्यवननाम्नः ऋषेः। अपनीय च जराम्, प्रतिरतम् प्रपूर्वस्तिरतिर्वृद्ध्यर्थः। प्रवर्धितवन्तौ स्थः। जहितस्य। ओहाक् त्यागे त्यक्तस्यायुषः क्षीणप्रायायुष इत्यर्थः। प्रवर्धितवन्तावायुर्जीवितलक्षणं हे दस्रा। आदित् अथैनं पतिं भर्तारम् अकृणुतम् कृतवन्तौ स्थः। कनीना कन्यकानां सुकन्याप्रभृतीनाम् ॥१०॥

*वेङ्कटमाधवः*—जुजुरुषः। जीर्णात्। च्यवानात्। नासत्यौ। अपि च। जराम् "प्र वव्रेर्वव्रिश्चिकेत" इति मन्त्रः। ताञ्जरां निद्रामिवानायासेन प्रामुञ्चतम्। "द्रापे अन्धसस्पते" इत्यत्र वाजसनेयके निद्रापयतीति द्रापिरिति प्रतिपादितम्। कवचमिवेत्यन्ये वदन्ति, तथा पुत्रैः सरस्वत्यास्तीरे त्यक्तस्य। आयुश्च। अवर्धतम्। अनन्तरं चैनम्। युवतीनाम् पतिम्। अकृणुत युवानमिति ॥१०॥

Grif. :—Ye from the old Cyavāna, O Nāsatyas, stripped, as 't were mail, the skin upon his body,
Lengthened his life when all had left him helpless,
Dasras! and made him lord of youthful maidens

---

तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम्।
यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय ॥११॥

तत्। वाम्। नरा। शंस्यम्। राध्यम्। च। अभिष्टिऽमत्।
नासत्या। वरूथम्। यत्। विद्वांसा। निधिम्ऽइव। अपऽगूळ्हम्। उत्। दर्शतात्। ऊपथुः। वन्दनाय ॥११॥

*सायणः*—नरा आरोग्यस्य नेतारौ (नासत्यौ) हे नासत्यावश्विनौ वाम् युवयोः सम्बन्धि अभिष्टिमत् अभ्येषणयुक्तम् आभिमुख्येन प्राप्तव्यं तथा वरूथम् वरणीयम् कामयितव्यं तत् कर्म शंस्यम् अस्माभिः प्रशंसनीयम् राध्यम् आराधनीयं च। किं पुनस्तत्कर्म? विद्वांसा जानन्तौ युवाम् निधिम् इव निक्षिप्तं धनमिव अपगूळ्हम् अरण्ये निर्जने देशे कूपमध्येऽसुरैः निगूढं वन्दनाय वन्दननामकमृषिं दर्शतात् अध्वगैः पिपासुभिर्द्रष्टव्यात् कूपात् उदूपथुः उदहार्ष्टम्। एवं यदेतत् कूपादुद्धरणं तदित्यर्थः॥ शंस्यम्। 'शंसु स्तुतौ' (धा० i-714)। अस्माण्ण्यन्ताद् 'अचो यत्' (iii-1-97) इति यत्। 'यतोऽनावः' (vi-1-213) इत्याद्युदात्तत्वम्। अभिष्टिमत्। अभिपूर्वात् 'इष गतौ' (धा० 4-20) इत्यस्माद्भावे क्तिन्। मन्त्रे 'वृषे' (iii-3-96) इति क्तिन उदात्तत्वम्। कृदुत्तर-

पदप्रकृतिस्वरत्वेन स एव शिष्यते। 'शकन्ध्वादित्वात्' (vi-1-94-4) पररूपत्वम्। 'तादौ च' (vi-2-50) इति तु गतिस्वरस्य सर्वविधीनां छन्दसि विकल्पितत्वादप्रवृत्तिः। ततो मतुप्। अन्तोदात्तादुत्तरस्य तस्य 'ह्रस्वनुड्भ्याम्' (vi-1-176) इत्युदात्तत्वम्। वरूथ्यम्। 'जॄवृञ्भ्यामूथन्' (उ० ii-5)। विद्वांसा। 'सुपां सुलुक्' (vii-1-39) इति विभक्तेराकारः। अपगूळ्हम्। 'गुहू संवरणे' (धा० i-880) कर्मणि निष्ठा। 'यस्य विभाषा' (iii-2-15) इतीट्प्रतिषेधः। 'ढत्वधत्वष्टुत्वढलोपदीर्घाः'। 'गतिरनन्तरः' (vi-2-49) इति गतेः प्रकृतिस्वरत्वम्। दर्शतात् 'भृमृदृशि' (उ० ii-120) इत्यादिना अतच्। ऊपथुः। 'डुवप् बीजतन्तुसन्ताने' (धा० i-983)। लिट्यथुसि यजादित्वात् सम्प्रसारणम्। द्विर्वचनादि। वन्दनाय। 'क्रियाग्रहणं कर्तव्यम्' (i-4-32 भाष्यम्) इति कर्मणः सम्प्रदानत्वाच्चतुर्थी ॥११॥

स्कन्दस्वामीः—तत् कर्म वाम् युवयोः। हे नरा मनुष्याकारौ शंस्यम् स्तुत्यम् राध्यम् आराधनीयं च। अभिष्टिरिच्छा। प्रार्थना। तद्वच्च (अभिष्टिमत् च) प्रार्थनीयं चेत्यर्थः। हे नासत्या वरूथम् वरणीयं सम्भजनीयं चेत्यर्थः। कतमत्? उच्यते। यद्विद्वासा निधिमिवापगूळ्हम्। यथा कौचिद्विद्वांसौ पुरुषौ निधिम् अपगूळ्हम् आच्छादितमुन्नयेताम्, एवं दर्शतात् अत्यन्तागाधत्वाद् दुर्दर्शनीयकूपाद् उदूपथुः। उत्खातवन्तौ स्थः। उत्तारितवन्तावित्यर्थः। वन्दनाय। द्वितीयार्थे चतुर्थ्येषा। वन्दनमृषिम्। तदेतद् कुत्सेनाप्युक्तम्। 'यामीरेभमाविवृतम्' (ऋ० सं० i-112-5) इति ॥११॥

वेङ्कटमाधवः—तत्। युवयोः। नरौ। स्तोतव्यम्। राधनीयं लालनीयं। च। अन्वेषणवच्चाभ्येष्टव्यम्। वरणीयं च। यद् युवां पतिं जानन्तौ। तिरोहितम्। निधिमिव कूपे पतितम्। वन्दनम्। प्रयत्नेन दर्शनीयादगाधात् कूपात्। उदूपथुः। छन्दोऽनुविधानाय विभक्तिव्यत्ययः ऋगन्तेषु भवति ॥११॥

Grif :—Worthy of praise and worth the winning, Heroes, is that your favouring succour, O Nāsatyas,
What time ye knowing well his case, delivered Vandana from the pit like hidden treasure.

---

तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥१२॥

तत्। वाम्। नरा। सनये। दंसः। उग्रम्। आविः। कृणोमि।
तन्यतुः। न। वृष्टिम्। दध्यङ्। ह। यत्। मधु। आथर्वणः।
वाम्। अश्वस्य। शीर्ष्णा। प्र। यत्। ईम्। उवाच ॥१२॥

*सायरण*:—नरा हे नरावश्विनौ वाम् युवयोः सम्बन्धीनि उग्रम् उद्गूर्णमन्यैर्दुःशकं दंसः। कर्मनामैतत्। युवाभ्यां पुरा कृतं तत् कर्म सनये धनलाभार्थम् आविष्कृणोमि प्रकटीकरोमि। तत्र दृष्टान्तः। तन्यतुः न यथा मेघस्थः शब्दः वृष्टिम् मेघान्तर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत्। किं तत् कर्म ? (आथर्वणः) अथर्वणः पुत्रो दध्यङ् एतत्संज्ञक ऋषि अश्वस्य शीर्ष्णा युष्मत् सामर्थ्येन प्रतिहितेन शिरसा वाम् युवाभ्याम् ईम् इमां मधु मधुविद्यां यत् ह यदा खलु प्रोवाच प्रोक्तवान्। तदानीमश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य भवदीयं कर्म तदाविष्कृणोमीत्यर्थः॥ समये। 'षणु दाने' (धा० viii-2)। 'खनिकषिकस्यञ्जयसिवसिध्वनिस्तनिवनिसनिग्रन्थिचरिभ्यश्च' (उ० iv-139) इतीप्रत्ययः। तन्यतुः। 'तनु विस्तारे' (धा० viii-1) 'ऋतन्यञ्जीत्यादिना' (उ० iv-4-2) यतुच्प्रत्ययः। यद्वा 'स्तन शब्दे' (धा० ii-457)। बाहुलकाद्यतुच्। छान्दसः सलोपः। वृष्टिम्। वृष्यते सिच्यतेऽनेनेति वृष्टिः। मन्त्रे 'वृषेत्यादिना' (iii-3-96) क्तिन उदात्तत्वम्। आथर्वणः। अपत्यार्थेऽणि 'अन्' (vi-4-167) इति प्रकृतिभावाट्टिलोपाभावः। शीर्ष्णा। 'शीर्षश्छन्दसि' (vi-1-60) इति शिरःशब्दपर्यायः शीर्षञ्छब्दोऽन्तोदात्तो निपात्यते। अल्लोपे सत्युदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्॥१२॥

*वेङ्कटमाधवः*—तत्। युवयोः। उद्गूर्णम्। कर्माहम्। लाभाय। आविष्कृणोमि। स्तनयित्नुः। इव। वृष्टिम्। ईमिति पूरणः॥१२॥

Grif. :—That mighty deed of yours, for gain, O Heroes, as thunder heraldeth the rain, I publish,
When by the horse's head, Atharvan's offspring Dadhyach made known to you the Soma's sweetness.

---

अजोहवीन्नासत्या करा वां महे यामन् पुरुभुजा पुरंधिः।
श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम्॥१३॥

अजोहवीत्। नासत्या। करा। वाम्। महे। यामन्। पुरुऽभुजा।
पुरम्ऽधिः। श्रुतम्। तत्। शासुःऽइव। वध्रिऽमत्याः।
हिरण्यऽहस्तम्। अश्विनौ। अदत्तम्॥१३॥

*सायरण*:—पुरुभुजा बहूनां पालकौ प्रशस्तहस्तौ वा नासत्या हे नासत्यावश्विनौ महे महनीये पूजनीये यामन् यामनि। याति गच्छतीति याम स्तोत्रम्।

तस्मिन् सति करा अभिमतफलस्य कर्तारौ वा युवां पुरन्धिः वहुधीः वध्रिमती। वध्रिः पुत्रोत्पादनाशक्तः पण्डकः। तद्वत्येतत्संज्ञा राजपुत्री अजोहवीत् पुनः पुनः स्तुत्या पुत्रलाभार्थमाहूतवती। युवां च वध्रिमत्याः तत् आह्वानं श्रुतम् अशृणुतम्। तत्र दृष्टान्तः शासुः इव। यथा शासुराचार्यस्य वचनं शिष्योऽवहितः सन्नैकाग्र्येण शृणोति तद्वत्। श्रुत्वा च हे अश्विनौ तस्यै हिरण्यहस्तं सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रम् अदत्तम् प्रायच्छतम्॥ अजोहवीत्। ह्वयतेर्यङ्लुङन्ताल्लङ्। 'यङो वा' (vii–3–94) इति तिप ईडागमः। करा। करोतेः पचाद्यच्। 'सुपां सुलुक्' (vii–1–39) इति विभक्तेराकारः। यामन्। 'आतो मनिन्क्वनिब्वनिपश्च' (iii–2–74) इति मनिन्। 'सुपां सुलुक्' इति सप्तम्या लुक्। 'बहुलं छन्दस्यमाङ्योगेऽपि' (vi–4–75) इत्यडभावः। शासुः शास्तुः। 'शासु अनुशिष्टौ' (धा० ii–65) 'शंसिशसिशासि' (उ० ii–94) इत्यादिना संज्ञायां तृन्। इडभावः। छान्दसस्तलोपः॥१३॥

*स्कन्दस्वामी*—हे नासत्यौ करा। पूर्वपदलोपोऽत्र द्रष्टव्यः। छिन्नकरा शत्रुभिश्छिन्नहस्ता। अथवा स्तुतीनां कर्त्री करा। वा युवां महे महति यामन् यान्ति योद्धारो यस्मिन् स यामः संग्राम इहाभिप्रेतः। तत्र। हे पुरुभुजा बहूनां हविषामभ्यवहर्तारौ पालयितारौ वार्तानाम्। पुरन्धिः बहुप्रज्ञा। श्रुतं युवामपि श्रुतवन्तौ। तदाह्वानम्। शासुरिव शासितुरिव पितुराचार्यस्य वा। महतादरेणेत्यर्थः। कस्याह्वानम्? उच्यते। वध्रिमत्याः। श्रुत्वा च हिरण्यहस्तम्। हिरण्यशब्देनात्र तद्विकार उच्यते। हिरण्मयौ हस्तौ यस्मिन् स हिरण्मयो बाहुः। तम् हे अश्विनौ अदत्तं दत्तवन्तौ स्थः॥१३॥

वेङ्कटमाधवः—अजोहवीत्। आजुहाव। वाम्। नासत्यौ। कर्मणामाश्चर्याणां कर्तारौ। महति। यज्ञे। बहूनाम् हविषां भोक्तारौ। स्त्री। वध्रिमती। तदाह्वानम्। भवद्भ्यां श्रुतमादरेण। यथा शासितुराचार्यस्य शासनम्। अथास्यै। हिरण्यहस्तं नाम पुत्रम् अदत्तम्॥१३॥

Grif. :—In the great rite the wise dame called, Nāsatyas, Lords of many treasures, to assist her.
Ye heard the weakling's wife, as 't were an order, and gave to her a son Hiraṇyahasta.

आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तम् ।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥१४॥

आस्नः । वृकस्य । वर्तिकाम् । अभीके । युवम् । नरा । नासत्या ।
अमुमुक्तम् । उतो इति । कविम् । पुरुऽभुजा । युवम् । ह ।
कृपमाणम् । अकृणुतम् । विऽचक्षे ॥१४॥

*सायणः*—वर्तिका चटकसदृशस्य पक्षिणः स्त्री तामरण्ये वर्तमानेन शुना ग्रस्तां पुरा किलाश्विनावमोचयताम् । तदेतदाह । हे नरा नेतारौ (नासत्या) नासत्यावश्विनौ युवम् युवाम् अभीके अभिगमने वृकवर्तिकयोः संग्रामे वृकस्य विकर्तकस्य शुनः आस्नः आस्यात् वर्तिकाम् चटकसदृशीम् अमुमुक्तम् अमोचयतम् । उतो अपि च पुरुभुजा महाबाहू प्रभूतहस्तौ वा युवम् ह युवां खलु कृपमाणम् स्तुवन्तं कविम् एतत्संज्ञकमन्धमृषिं विचक्षे विशेषेण द्रष्टुं समर्थम् अकृणुतम् अकुरुतम् ॥ 'आस्नः पद्दन्नित्यादिना' (vi-1-63) आस्यशब्दस्यासन्नादेशः । 'अल्लोपोऽनः' (vi-4-134) इत्यकारलोपः । उदात्तनिवृत्तिस्वरेण 'ऊडिदम्' (vi-1-171) इति वा विभक्तेरुदात्तत्वम् । अमुमुक्तम् । मुचेरन्तर्भावितण्यर्थाल्लङि 'बहुलं छन्दसि' (ii-4-76) इति विकरणस्य श्लुः । कृपमाणम् । कृपिः स्तुतिकर्मा तुदादिषु द्रष्टव्यः । विकरणस्वरे प्राप्ते 'वृषादीनां च' (vi-1-203) इत्याद्युदात्तत्वम् । विचक्षे । 'तुमर्थे सेसेन्' (iii-4-9) इति सेन्प्रत्ययः, 'स्कोः संयोगाद्योः' (viii-2-29) इति सलोपः ॥१४॥

*यास्कः*—पुनः पुनर्वर्तते प्रतिदिवसमावर्तत इति वर्तिकोषाः । तां वृकेणावरकेण सर्वजगत्प्रकाशकेनाच्छादयित्रा सूर्येण ग्रस्तां तदीयमुखादश्विनावमुञ्चतामिति (नि० v-21) ।

*वेङ्कटमाधवः*—वृकेण सह वर्त्तिकायाः । सङ्ग्रामे तां वृको जग्राहाथ वृकस्य आस्यात् । ताम् । मोचितवन्ताविति । अपि च । कविमुशनसः पितरमन्यं वैल्वनामानं । स्तुवन्तम् । दर्शनाय । अकृणुतमिति ॥१४॥

Grif. :—Ye from the wolf's jaws, as ye stood together, set free the quail, O Heroes, Nāsatyas.
Ye, Lords of many treasures, gave the poet his perfect vision as he mourned his trouble.

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् ।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥१५॥

चरित्रम् । हि । वेःऽइव । अच्छेदि । पर्णम् । आजा । खेलस्य । परिऽतक्म्यायाम् । सद्यः । जङ्घाम् । आयसीम् । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तम् ॥१५॥

सायणः—आजा आजौ संग्रामेऽगस्त्यपुरोहितस्य खेलस्य सम्बन्धिन्या विश्पलाख्यायाः चरित्रम् चरणं वेरिव वेः पक्षिणः पर्णम् पतत्रमिव अच्छेदि हि पुरा छिन्नमभूत् खलु । हे अश्विनौ युवामगस्त्येन स्तुतौ सन्तौ परितक्म्यायाम् । परितक्म्या रात्रिः । 'परित एनां तकति' (नि० xii-25) इति यास्कः । एनामुभयतः सूर्यो गच्छतीति तस्यार्थः । रात्रावागत्य सद्यः तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति सर्तवे सर्तुं गन्तुं विश्पलायै आयसीम् अयोमयीं जङ्घां जङ्घोपलक्षितं पादं प्रत्यधत्तम् । सन्धानमेकीकरणं कृतवन्तावित्यर्थः ॥ चरित्रम् । 'अर्तिलूधूसूखनसहचर इत्रः' (iii-2-184) इति करणे इत्रप्रत्ययः । आजा । 'सुपां सुलुक्' (vii-1-39) इति विभक्तेर्डादेशः । आयसीम् । अयःशब्दाद्विकारार्थे 'प्राणिरजतादिभ्योऽञ्' (iv-3-154) । 'टिड्ढाणञ्' (iv-1-15) इति ङीप् ॥१५॥

वेङ्कटमाधवः—खेलनाम्नो राज्ञः । युद्धे । गच्छन्त्यां विश्पलायां तस्याः । चरित्रं जघनप्रदेशे । पक्षिणः । पर्णमिवव्याधैः शत्रुभिः । अच्छेदि । अथ तस्याः । हितम् । धनम् । प्रतिसरणाय । आयसीम् । जङ्घा तस्यै । विश्पलायै । तदानीमेव । प्रत्यधत्तमिति ॥१५॥

Grif. .—When in the time of night, in Khela's battle, a leg was severed like a wild bird's pinion,

Straight ye gave Viśpalā a leg of iron that she might move what time the conflict opened.

---

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥१६॥

शतम् । मेषान् । वृक्यै । चक्षदानम् । ऋज्रऽअश्वम् । तम् । पिता । अन्धम् । चकार । तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तम् । दस्रा । भिषजौ । अनर्वन् ॥१६॥

*सायणः*—अत्रतच्छब्दश्रुतेर्यच्छब्दाध्याहारः। यः ऋज्राश्वः शतं शतसंख्याकान् मेषान् वृक्ये आत्मना पोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् तं चक्षदानम्। चक्षदतिरत्तिकर्मात्र शकलीकरणार्थः। शकलीकृत्य दत्तवन्तम् ऋज्राश्वं पिता शापेन अन्धं दृष्टिहीनं चकार कृतवान्। हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा भिषजौ देवानां वैद्यभूतौ 'अश्विनौ वै देवानां भिषजौ' (ऐ० ब्रा० vi-1, तै० आ० ii-3-11-12) इति श्रुतेः। दस्रा दर्शनीयावेतत्संज्ञौ वा हे अश्विनौ। अनर्वन् अनर्वणी द्रष्टव्यं प्रति पितृशापाद्गमनरहिते। अक्षी चक्षुषी विचक्षे विविधं द्रष्टुं समर्थे तस्मै ऋज्राश्वाय आ अधत्तम् व्यधत्तम् अकुरुतम्॥ वृक्ये। वृकोऽरण्यश्वा तस्य स्त्री वृकी। 'जातेरस्त्रीविषयादयोपधात्' (iv-1-63) इति ङीप्। जसादिषु 'छन्दसि वावचनम्' (vii-3-109-1) इति चतुर्थ्येकवचनस्याडभावो यणादेश 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (viii-2-4) इति परस्यानुदात्तस्य स्वरितत्वम्। चक्षदानम्। चक्षदेर्लिटः कानच्। चित्स्वरः। अक्षी। 'ई च द्विवचने' (vii-1-77) इति द्विवचनपरत्वादक्षिशब्दस्येकारान्तादेशः। स च उदात्तः। तस्मिन् कृते सकृद्गतौ विप्रतिषेधे यद्बाधितं 'तद्बाधितमेव' (प०-40) इति परिभाषया पुनर्नुम् न भवति। विचक्षे। चक्षेः सम्पदादिलक्षणो 'भावे क्विप्' (iii-3-108-9)। अनवन्। ऋ गतौ। अस्माद् 'अन्येभ्योऽपि दृश्यन्ते' (iii-2-75) इति दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वाद्भावे वनिप्। अर्वं गमनं विषयं प्रत्यनयोर्नास्तीति बहुव्रीहौ 'नञ्सुभ्याम्' (vi-2-172) इत्युत्तरपदान्तोदात्तत्वम्। 'सुपां सुलुक्' (vii-2-39) इति द्विवचनस्य लुक्। छान्दसो नलोपाभावः॥१६॥

*वेङ्कटमाधवः*—पौराणा मेषान् गृहीत्वा लीलार्थम्। वृक्ये। विशसन्तम्। ऋज्राश्वम्। तम्। पिता पौरहितार्थम्। अन्धम्। चकार। तस्मै। दर्शनाय। अनर्वणी अप्रस्तुते शीघ्रगमने सूक्ष्मदर्शने अक्षिणी। आधत्तमिति।

Grif. :—His father robbed Ṛjrāśva of his eye-sight who for the
she-wolf slew a hundred wethers.
Ye gave him eyes, Nāsatyas, Wonder-Workers,
Physicians, that he saw with sight uninjured.

---

आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती।
विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे॥१७॥

आ। वाम्। रथम्। दुहिता। सूर्यस्य। कार्ष्मऽइव। अतिष्ठत्।
अर्वता। जयन्ती। विश्वे। देवाः। अनु। अमन्यन्त। हृत्ऽभिः।
सम्। ऊँ इति। श्रिया। नासत्या। सचेथे इति॥१७॥

सायणः—हे अश्विनौ वाम् युवयोः रथम् कार्ष्मेव । कार्ष्मशब्दः काष्ठावाची । यथा काष्ठामाजिधावनस्यावधितया निर्दिष्टं लक्ष्यमाशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति, एवमेव सर्वेभ्यो देवेभ्यः पूर्वम् अर्वता शीघ्रमवधिं प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्यां जयन्ती जीयमाना सूर्यस्य सवितुः दुहिता स्त्री अतिष्ठत् आरूढवती । विश्वे सर्वे इतरे देवाः एतदारोहणस्यानं हृदि हृदये. अन्वमन्यन्त अन्वजानन् । तदानीं हे (नासत्या) नासत्यावश्विनौ श्रिया श्रूरूसहस्त्यामरूपया सम्पदा कान्त्या वा युवां समचेथे संगच्छेते ॥ जयन्ती । व्यत्ययेन कर्मणि शतृप्रत्ययः । हृद्भिः । 'पद्दन्नित्यादिना' (vi-1-63) हृदयशब्दस्य हृद्भाव. । सचेथे । 'षच समवाये' (धा० i-977) । स्वरितेत्त्वादात्मनेपदम् ॥१७॥

वेङ्कटमाधवः—कार्ष्मशब्दः काष्ठवचनो यथाऽऽजिं धावन्क्षिप्रं काष्ठामातिष्ठते मनुष्यः शीघ्रैरश्वैः स्वयंवरे । जीयमाना आजिं धावद्भिः । सूर्यस्य दुहिता । युवयोः । रथम् । आतिष्ठत् । तत्र भवतोर्बलं दृष्ट्वा स्वयंवरार्थमागता । विश्वे । देवाः । हृदयेनैव । अन्वमन्यन्त तदानीम् । जयश्रिया । सह । संयुक्तौ भवथ इति ॥१७॥

Grif.—The Daughter of the Sun your car ascended, first *reaching as it were the goal with coursers.*
All deities within their hearts assented, and ye, Nasatyas, are close linked with glory

---

यद्यातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥१८॥

यत् । अयातम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना ।
हयन्ता । रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः ।
च । शिंशुमारः । च । युक्ता ॥१८॥

सायणः—(अश्विना) हे अश्विनौ हयन्ता स्तुतिभिराहूयमानौ युवां भरद्वाजाय सम्भ्रियमाणहविर्लक्षणान्नाय यजमानाय दिवोदासाय एतत्संज्ञाय राजर्षयेऽभीष्टं फलं दातुं वर्तिं तदीयं गृहं यत् यदा अयातम् अगच्छतं तदानीं रेवत् धनयुक्तमन्नं वाम् युवयोः सचनः सेवनो रथः उवाह तस्मै दिवोदासाय प्रापयामास । अपि च तस्मिन् रथे वृषभः अनड्वान् शिंशुमारः ग्राहश्च परस्परविरुद्धावपि स्वसामर्थ्यप्रकटनाय युक्ता वाहनतया संयुक्तावास्ताम् ।

दिवोदासाय। दिवश्च दासे षष्ठ्या 'अलुग्वक्तव्यः' (काशिका vi-3-21) इत्यलुक्। दिवोदासादीनां 'छन्दस्युपसंख्यानम्' (vi-2-91-1) इति पूर्वपदाद्युदात्तत्वम्। भरद्वाजाय। 'भृञ् भरणे' (धा० i-882)। अस्माद् व्यत्ययेन कर्मणि शतृप्रत्ययः। 'शतुः छन्दस्युभयथा' (iii-4-117) इत्यार्धधातुकत्वेन लसार्वधातुकानुदात्तत्वाभावात्प्रत्ययाद्युदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। हूयन्ता। ह्वेञः कर्मणि लटो व्यत्ययेन शतृ। 'बहुलं छन्दसि' (vi-1-34) इति सम्प्रसारणम्। शपि गुणे छान्दसोऽयादेशः। रेवत्। रयिशब्दान्मतुप्। 'रयेर्मतौ बहुलम्' (vi-2-37-6) इति सम्प्रसारणम्, 'छन्दसीरः' (viii-2-25) इति मतुपो वत्वम्। 'रयिशब्दाच्च' (का० vi-1-176) इति मतुप उदात्तत्वम्। सचनः। 'षच सेवने' (धा० i-977) 'अनुदात्तेतश्च हलादेः' (iii-2-149) इति युच्। 'सुपां सुलुक्' (vii-1-39) इति विभक्तेराकारः ॥१८॥

वेङ्कटमाधवः—यदा युवाम्। दिवोदासं रक्षितुम्। मार्गगमनाय। अयातम्। भरद्वाजकुलजाय। आहूयमानौ तदानीं युवयोः। सचनः। सेव्यः। रथः। धनयुक्तः। वाम्। उवाह। तदानीं तस्मिन् रथे वाहार्थम्। ऋषभः। च। शिंशुमारः। च। युक्ताविति ॥१८॥

Grif. :—When to his house ye came, to Divodāsa, hasting to Bharadvāja, O ye Aśvins.
The car that came with you brought splendid riches; a porpoise and a bull were yoked together.

---

र॒यिं सु॑क्ष॒त्रं स्व॑प॒त्यमायुः॑ सु॒वीर्यं॑ नासत्या॒ वह॑न्ता।
आ ज॒ह्नावीं॒ सम॑नसोप॒ वाजै॒स्त्रिरह्नो॑ भा॒गं दध॑तीमयातम् ॥१९॥

र॒यिम्। सु॒ऽक्ष॒त्रम्। सु॒ऽअ॒प॒त्यम्। आयुः॑। सु॒ऽवीर्य॑म्। ना॒स॒त्या॒।
वह॑न्ता। आ। ज॒ह्नावी॑म्। सऽम॑नसा। उप॑। वाजैः॑। त्रिः।
अह्नः॑। भा॒गम्। दध॑तीम्। अ॒या॒त॒म् ॥१९॥

*सायणः*—हे (नासत्या) नासत्यावश्विनौ सुक्षत्रं शोभनबलं रयिम् धनम् स्वपत्यम् शोभनैः पुत्रादिभिरुपेतम्। सुवीर्यम् शोभनवीर्योपेतम्। आयुः। अन्ननामैतत्। एवंगुणविशिष्टमन्नं च वहन्ता धारयन्तौ युवां समनसा समानमनस्कौ सन्तौ जह्नावीम् जन्होर्महर्षेः सम्बन्धिनीं प्रजाम् आ अयातम् आभिमुख्येनागच्छतम्। कीदृशीम्? वाजैः हविर्लक्षणैरन्नैरुपेतम्। अह्नः अत्राहः—

शब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते । तस्य प्रातःसवनादिरूपेण त्रिः त्रिधा विभक्तं भागम् अंशं दधतीन् बिभ्रतीम् । अनुसवनं हविर्भिर्यजमानामित्यर्थः ॥ सुक्षत्रम् । 'बहुव्रीहौ नञ्सुभ्याम्' (vi-2-172) इत्युत्तरपदान्तोदात्तत्वम् । सुवीर्यम् । 'वीरवीर्यौ च' (vi-2-120) इत्युत्तरपदाद्युदात्तत्वम् । जह्नावीम् । जह्नुशब्दात् 'तस्येदम्' (iv-3-120) इत्यर्थेऽण् । 'टिड्ढाणञ्' (iv-1-15) इति ङीप् । ह्रस्वदीर्घयोर्विनिमयः पृषोदरादित्वात् । उक्तं च—'वर्णागमो वर्णविपर्ययश्च' (काशिका० vi-3-109) इति । अत एव मध्योदात्तत्वम् ॥१६॥

वेङ्कटमाधवः—रयिम् । शोभनबलम् । शोभनापत्यम् । अन्नम् । सुवीर्यं च । नासत्यौ । प्रयच्छन्तौ । जह्नोरपत्यभूता प्रजाम् । बलाकाश्वकुशिकविश्वामित्रप्रभृतिम् । एकचित्तौ । अन्नैः सह । उपागच्छतम् । अह्नः । त्रिर्युवाभ्याम् । हविः । प्रयच्छन्तीमिति ॥१६॥

Grife :—Ye bringing wealth with rule, and life with offspring, life rich in noble heroes, O Nāsatyas.

Accordant came with strength to Jahnu's children, who offered you thrice every day your portion.

---

परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।
विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम् ॥२०॥

परिऽविष्टम् । जाहुषम् । विश्वतः । सीम् । सुऽगेभिः । नक्तम् । ऊहथुः । रजःऽभिः । विऽभिन्दुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातम् ॥२०॥

सायणः—जाहुषो नाम कश्चिद्राजा । विश्वतः सर्वतः परिविष्टम् शत्रुभिः परिवृतं तं राजानं (जाहुषम्) हे (नासत्या) नासत्यावश्विनौ अजरयू जरावर्जितौ नित्यतरुणौ युवां विभिन्दुना विशेषेण सर्वस्वभेदकेनात्मीयेन रथेन नक्तम् रात्रौ सुगेभिः सुष्ठु गन्तुं शक्यैः रजोभिः रञ्जकैर्मार्गैः ऊहथुः तस्माच्छत्रुसमूहान्निरगमयतम् । सीम् इत्येतत् पदपूरणम् । निर्गतेन तेन सह पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान् वि अयातम् विशेषेणागच्छतम् । परिविष्टम् । 'विश प्रवेशने' (धा० vi-10) । कर्मणि निष्ठा । 'गतिरनन्तरः' (vi-2-49) इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । 'सुदुरोरधिकरणे' (iii-2-48-3) इति गमेर्डः । विभिन्दुना । 'भिदिर् विदारणे' (धा० viii-2) । औणादिक

उप्रत्ययो नुमागमश्च । अजरयू । न जरा अजरा । तामात्मन इच्छतः । सुप आत्मनः 'क्यच्' (iii-1-8), 'नच्छन्दस्यपुत्रस्य' (vii-4-35) इतीत्वदीर्घयोर्निषेधः । 'क्याच्छन्दसि' (iii-2-170) इत्युप्रत्ययः ॥२०॥

*स्कन्दस्वामी*:—परिशब्दोऽत्र विश्वत इत्येतेन पौनरुक्त्यप्रसङ्गाद् धात्वर्थानुवादी । विपिर्व्याप्त्यर्थः । व्याप्तं जरया । जाहुषं नामर्षिम् विश्वतः सर्वतः स्वतः पुत्रतो दारतश्च । सपुत्रदारं वृद्धमित्यर्थः । रजोभिः रजःशब्दोऽत्र तेजोवचनोऽन्तर्णीतमत्वर्थश्च । तेजस्विभिः । शीघ्रगामिभिरित्यर्थः । विभिन्दुना पर्वतभेदनसमर्थेन रथेन तुङ्गानपि पर्वतान् हे अजरयू । युशब्दोऽत्र तद्वदर्थे । 'अश्वयुर्गव्यू रथयुः' (ऋ० सं० i-51-14) इति यथा । अजरावन्तौ । जरारहितावित्यर्थः । व्ययातम् । यातिरत्रान्तर्णीतण्यर्थः । विगमितवन्तौ युवाम् । अतिक्रमितवन्तावित्यर्थः ॥२०॥

*वेङ्कटमाधवः*:—विश्वतः । परिगृह्यावष्टभ्यासुरैः पर्वतैः परिवृतम् । जाहुषं नाम देवानां यजमानम् । सुगेभिः । मार्गैः । नक्तम् । ऊहथुः । तदानीं पर्वताना विभेत्रा । रथेन । पर्वतानां मध्ये । जरारहितावजीर्णौ सन्तौ । गतवन्ताविति ॥२०॥

Grif. :—Ye bore away at night by easy pathways Jāhusa compassed round on every quarter,
And, with your car that cleaves the foe asunder, Nāsatyas ne'er decaying! rent the mountains.

---

एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥२१॥

एकस्याः । वस्तोः । आवतम् । रणाय । वशम् । अश्विना ।
सनये । सहस्रा । निः । अहतम् । दुच्छुनाः । इन्द्रऽवन्ता ।
पृथुऽश्रवसः । वृषणौ । अरातीः ॥२१॥

*सायणः*—हे (अश्विना) अश्विनौ वशम् एतत्संज्ञमृषिम् एकस्याः वस्तोः एकस्याह्नः रणाय रमणीयाय सहस्रा सहस्रसंख्याकाय सनये धनलाभाय आवतम् अरक्षतम् । स ऋषिः प्रत्यहं यथा सहस्रसंख्यं धनं लभते तथा रक्षितवन्तावित्यर्थः । अपि च हे वृषणौ कामानां वर्षितारावश्विनौ इन्द्रवन्ता इन्द्रेण संयुक्तौ युवां दुच्छुनाः दुष्टसुखान् दुःखस्य कर्तॄन् पृथुश्रवसः विस्तीर्णयशसः अरातीः शत्रून् निरहतम् निःशेषेणावधिष्टम् । यद्वा । कानीनस्य पृथुश्रवःसंज्ञस्य राज्ञः शत्रूनिति योज्यम् ॥ सहस्रा । 'सुपां सुलुक्' (vii-1-39) इति चतुर्थ्या

डादेशः । अहतम् । लङि थसस्तम् । 'अनुदात्तोपदेश:' (vi-4-37) इत्यादिना-नुनासिकलोपः। दुच्छुनाः । शुनमिति सुखनाम । दुष्टं सुखं यासां तास्तथोक्ताः। 'परादिश्छन्दसि बहुलम्' (vi-2-199) इत्युत्तरपदाद्युदात्तत्वम् ॥२१॥

वेङ्कटमाधवः—एकस्य । अहः कृतो यो रथस्तस्य यथा । वशो राजा । सहस्र धनम् । लभत एवं तं ररक्षतुरिति सहस्रेति चतुर्थ्येकवचनस्याकारः । किञ्च । पृथुश्रव-सस्तस्य । निर्हतवन्तौ । उपद्रवकारिणः । शत्रून् । हे वर्षितारौ । कामानाम् । इन्द्र-सहितावित्यथवा पृथुश्रवाश्च नामापरस्तस्य शत्रूंश्च निरहतमिति ॥२१॥

Grif :—One morn ye strengthened Vaśa for the battle, to gather spoils that might be told in thousands

With Indra joined ye drove away misfortunes, yea, foes of Pṛthuśravas, O ye Mighty.

---

शरस्यं चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥२२॥

शरस्य । चित् । आर्चत्ऽकस्यं । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वाः । शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यम् । पिप्यथुः । गाम् ॥२२॥

सायण.—आर्चत्कस्य ऋचत्कपुत्रस्य शरस्य एतत्संज्ञस्यापि स्तोतुः पिपा-सितस्य पातवे पानार्थं नीचात् नीचीनात् अवतात् कूपात् उच्चा उच्चैरुपरिष्टात् वाः उदकं हे अश्विनौ युवाम् आ चक्रथुः आभिमुख्येन कृतवन्तौ । यथा हे (नासत्या) नासत्यावश्विनौ शचीभिः युष्मदीयैः कर्मभिः परिचरणैः जसुरये श्रान्ताय शयवे चित् शयुनाम्ने ऋषये स्तर्यम् निवृत्तप्रसवां गाम् अग्निहोत्रार्थस्य पयसो दोग्ध्रीं पिप्यथुः पयसा युवामापूरितवन्तौ ॥ पातवे । 'पा पाने' (धा० i-908) 'तुमर्थे सेसेन्' (iii-4-9) इति तवेन्प्रत्ययः । जसुरये । 'जसु हिंसा-याम्' (धा० x-134) । 'जसिसहोरुरिन्' (उ० ii-73) । स्तर्यम् । स्तीर्यते आच्छाद्यते प्रसवसामर्थ्याभावेनेति स्तरीः । 'अवितृस्तृतन्त्रिभ्यः ईः' (उ० iii-158) इतीकारप्रत्ययः । 'वा छन्दसि' (vi-1-106) इत्यमिपूर्वत्वस्य विकल्पितत्वात् तदभावे यणादेशः । 'उदात्तस्वरितयोर्यणः' (viii-2-4) इति परस्यानुदात्तस्य स्वरितत्वम् पिप्यथु. । 'प्यायी वृद्धौ' (धा० i-484) । लिटि व्यत्ययेन परस्मैपदम् । 'लिड्यङोश्च' (vi-1-29) इति पीभावः ॥२२॥

*स्कन्दस्वामी*—अवतात् । सप्तम्यर्थेऽत्र पञ्चमी । कूपे । नीचात् । द्वितीयैकवचनस्यायं 'सुपां सुलुक्' (vi-1-39) इति लुगादेशः । नीचम् । सुदूरवर्तित्वाद् ग्रहीतुमशक्यम् । उच्चा । अयमपि द्वितीयैकवचनस्याकारः । उच्चम् । हस्तग्राह्यमित्यर्थः । आचक्रथुः आभिमुख्येन कृतवन्तौ स्थः ।......शचीभिः स्वाभिरतिशयवतीभिः प्रज्ञाभिः कर्मभिर्वा । जसुरये जसु ताडने । ताडयित्रे शत्रूणाम् । ताडिताय वा । गोः प्रसवनिवृत्त्या अधेनुत्वापत्त्या च पीडितायेत्यर्थः । स्तर्यं निवृत्तप्रसवा स्तरीरुच्यते । तां पिप्यथुः । आप्यायितवन्तौ धेनुतां कृतवन्तौ । काम् ? उच्यते । गाम् । तदेतत्परस्तादपि पुनर्वक्ष्यति 'अधेनुं दस्रा' (ऋ० सं० i-177-20) इति कृत्स्नेनाप्युक्तम्—'याभिर्धेनुम्' (ऋ० सं० i-112-3) इति । शयुर्नाम राजर्षिः । सोऽश्विनौ परिचर्यया तुष्टावोवाच च । मम गौरधेनुर्निवृत्तप्रसवा वृद्धा च । तां मे धेनुं कुरुतमिति । तामस्मा अश्विनौ धेनुं चक्रतुरिति ॥२२॥

*वेङ्कटमाधवः*—तृषितस्य ऋचीकपुत्रस्य । शराख्यस्य । नीचोदकात् । कूपात् । पानाय । जलम् । उच्चैः । आचक्रतुरश्विनौ । तथा शयवे । हे नासत्यौ ! कर्मभिः । उपक्षीणाय क्षुधिताय । निवृत्तप्रसवाम् । गाम् । आप्यायितवन्ताविति ॥२२॥

Grif. :—From the deep well ye raised on high the water, so that
Ṛcatka's son, Śara, should drink it;
And with your might, to help the weary Śayu ye made the barren cow yield milk, Nāsatyas.

---

अ॒व॒स्य॒ते स्तु॑व॒ते कृ॑ष्णि॒याय॑ ऋजूय॒ते ना॑सत्या॒ शची॑भिः ।
प॒शुं न न॒ष्टमि॑व॒ दर्श॑नाय विष्णा॒प्वं॑ ददथु॒र्विश्व॑काय ॥२३॥

अ॒व॒स्य॒ते । स्तु॒व॒ते । कृ॒ष्णि॒याय॑ । ऋ॒जु॒ऽय॒ते । ना॒स॒त्या॒ । शची॑भिः ।
प॒शुम् । न । न॒ष्टम्ऽइ॑व । दर्श॑नाय । वि॒ष्णा॒प्वम् ।
द॒द॒थुः । विश्व॑काय ॥२३॥

*सायणः*—अवस्यते अवनं रक्षणमात्मन इच्छते । स्तुवते स्तुतिं कुर्वते कृष्णियाय कृष्णो नाम कश्चित् । तस्य पुत्राय । ऋजूयते आर्जवमिच्छते विश्वकाय एतत्संज्ञकाय ऋषये नासत्या हे नासत्यौ युवां शचीभिः आत्मीयैः कर्मभिः विष्णाप्वम् नाम विनष्टम् पुत्रं दर्शनाय दर्शनार्थं ददथुः दत्तवन्तौ । तत्र दृष्टान्तः । पशुम् न नष्टमिव । एक उपमार्थीयः पूरकः । यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत् । अवस्यते । अवःशब्दात् सुप आत्मनः 'क्यच्' (iii-1-8) । 'शतुरनुमः' (vi-1-163) इति विभक्तेरुदात्तत्वम् । कृष्णियाय । कृष्णशब्दादपत्यार्थे छान्दसो घच् ॥२३॥

स्कन्दस्वामी:—......पशुं न नष्टमिव दर्शनाय । इवशब्दोऽत्र नेत्यनेन पौनरुक्त्यात् "अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः" (नि० vii–32) इति पदपूरणः ॥२३॥

वेङ्कटमाधवः—ऋजुत्वमिच्छते । स्तुवते । कृष्णपुत्राय । आर्जवमिच्छते विश्वकनाम्ने । नासत्यौ । कर्मभिः । नष्टमिव । पशुं विनष्टम् । विष्णाप्वं नाम पुत्रम् । दर्शनाय । ददथुरिति । इवेति पूरणो नेत्यनेन पौनरुक्त्यादिति ॥२३॥

Grif. :—To Viśvaka, Nāsatyas! son of Kṛṣṇa, the righteous man
who sought your aid and praised you,
Ye with your powers restored, like some lost creature, his son Viṣṇāpu for his eyes to look on.

---

दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः ।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥२४॥

दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धम् । श्नथितम् । अप्ऽसु ।
अन्तरिति । विऽप्रुतम् । रेभम् । उदनि । प्रऽवृक्तम् । उत् ।
निन्यथुः । सोमम्ऽइव । स्रुवेण ॥२४॥

सायणः—अप्सु कूपान्तर्वर्तमानासु अन्तः मध्येऽसुरैः पातितम् अशिवेन दुःखहेतुना दाम्ना अवनद्धम् बद्धं श्नथितम् शत्रुभिर्हिंसितं दश रात्रीः दशसंख्याका निशा नव द्यून् नवसंख्याकान्यहानि । अत्यन्तसंयोगे द्वितीया । एतावन्तं कालं तत्रैव कूपेऽवस्थितम् अत एव उदनि उदके विप्रुतम् विप्लुतं व्याक्लिन्नसर्वाङ्गं प्रवृक्तम् । लुप्तोपममेतत् । प्रवृञ्जनेन सन्तप्तं घर्ममिव व्यथया सन्तप्यमानम् । एवंभूतं रेभम् हे अश्विनौ युवाम् उन्निन्यथुः तस्मात्कूपादुन्नीतमुत्तीर्णं कृतवन्तौ । तत्र दृष्टान्तः । सोममिव यथाग्निहोत्रहोमार्थमभिषुतं सोमरसं कूपसदृशोऽग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेण अध्वर्युरुन्नयति ऊर्ध्वं नयति तद्वत् । अवनद्धम् । 'णह बन्धने' (धा० iv–58) कर्मणि निष्ठा । 'नहो धः' (viii–2–34) 'झषस्तथोर्धोऽधः' (viii–2–40) इति निष्ठातकारस्य धत्वम् । 'गतिरनन्तरः' (vi–2–49) इति गतेः प्रकृतिस्वरत्वम् । श्नथितम् । श्नथ हिंसार्थः, निष्ठा । विप्रुतम् । 'प्रुङ् गतौ' (धा० i–937) । अवनद्धवत्प्रत्ययस्वरौ । 'कपिलकादित्वात्' (viii–2–18 भाष्यम्) लत्वविकल्पः । उदनि । 'पद्दन्नित्यादिना' (vi–1–63) उदकशब्दस्योदन्नादेशः ॥२४॥

स्कन्दस्वामी:—दश रात्रीरिति, 'अश्वं गूळ्हम्' (ऋ० सं० i–117–4) इति । स तत्र मृतकल्पोऽश्विनावाजुहाव । आहूयमानावश्विनौ तं समाजग्मतुरिति । तदपि कक्षीवानेव

वक्ष्यति । 'सं तं रिणीथः' (ऋ० सं० i–117–4) इति । आगत्य चोत्तरयाञ्चक्रतुरिति । तदपि कक्षीवानेव वक्ष्यति । विप्रुतं रेभमिति । घोषापि वक्ष्यति । 'युवं ह रेभम्' (ऋ० सं० x–39–9) इति ॥२४॥

*वेङ्कटमाधवः*—दश । रात्रीः । नव च । अहानि । अशिवेन निगडेन बद्धम् । अप्सु । अन्तः । अवनद्धम् । निगूढम् । विप्लुतचित्तम् । रेभनामानम् । उदके । असुरैरित्यं प्रवृक्तं, वृश्चतिश्छेदनकर्मेह तु हिंसार्थः । तमुन्निन्यथुः । सोममिव । स्रुवेण । सोमोऽप्यग्निहोत्रहविर्भवति ॥२४॥

Grif. :—Aśvins, ye raised, like Soma in a ladle, Rebha who for ten days and ten nights, fettered,
Had lain in cruel bonds, immersed and wounded, suffering sore affliction, in the waters.

---

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।
उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥२५॥

प्र । वाम् । दंसांसि । अश्विनौ । अवोचम् । अस्य । पतिः । स्याम् ।
सुऽगवः । सुऽवीरः । उत । पश्यन् । अश्नुवन् । दीर्घम् । आयुः ।
अस्तम्ऽइव । इत् । जरिमाणम् । जगम्याम् ॥२५॥

*सायणः*—हे अश्विनौ वाम् युवयोः दंसांसि पुरा कृतानि कर्माणि प्र अवोचम् स्पष्टमुक्तवानस्मि । सोऽहं सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरश्च भूत्वा अस्य राष्ट्रस्य पतिः अधिपतिः स्याम् भवेयम् । उत अपि च पश्यन् अक्षिभ्यां पश्यन् । उपलक्षणमेतत् । सर्वैरिन्द्रियैः स्वस्वविषयग्रहणसमर्थः दीर्घम् वर्षशतरूपेणायतम् आयुः जीवितं च अश्नुवन् प्राप्नुवन्नहम् अस्तमिव यथा गृहं स्वामी निष्कण्टकं प्रविशति, एवं जरिमाणं जरां जगम्याम् कण्टकराहित्येन प्राप्नुयाम् । वृद्धः संश्चिरकालं निवसेयमित्यर्थः । स्याम् । अस्तेः प्रार्थनायां लिङ् । यासुट् । 'श्नसोरल्लोपः' (vi–4–111) इत्यकारलोपः । अश्नुवन् । 'अशू व्याप्तौ' (धा० v–18) व्यत्ययेन शतृ । जरिमाणम् । 'जॄष् वयोहानौ' (धा० v–62) अस्मादौणादिक इमनिच् । जगम्याम् । गमेः प्रार्थनायां लिङ् । 'बहुलं छन्दसि' (ii-4–76) इति विकरणस्य श्लुः ॥२५॥

*स्कन्दस्वामी*:—अस्य बुद्धिस्थस्याभिप्रेतस्य धनादेरयं प्रतिनिर्देशः । यद् इदमस्मदभिलषितं धनादि तस्य पतिः स्यां भवेयमहम् । सुगवः शोभना गावो यस्य सः

सुगवः। छान्दसत्वादकारः समासान्तः। शोभनाभिर्गोभिरुपेतः सन्नित्यर्थः। ·········यथा कश्चित् स्वगृहमनुद्विग्नो गच्छेत्तद्वत् जरां गच्छेयम् ॥२५॥

वेङ्कटमाधवः—इत्थं प्रावोचम्। युवयोः। कर्माणि सोऽहम्। शोभनगोयुक्तः। शोभनवीरश्च सन्। अस्योभयस्य। स्वामी। स्याम्। अपि च चक्षुषाऽनन्धः सन्। पश्यन्। दीर्घञ्च। आयुः। प्राश्नुवन्। स्वगृहमिव। अनुद्विग्नहृदयः सन् क्रमेण जराम्। गच्छेयमिति ॥२५॥

Grif :—I have declared your wondrous deeds, O Aśvins : may
this be mine, and many kine and heroes.
May I enjoying lengthened life, still seeing, enter old age
as 'twere the house I live in.

---

## 6. I—124

दीर्घतमा ऋषिः। उषाः देवता। त्रिष्टुप् छन्दः।

उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत्।
देवो नो अत्र सविता न्वर्थं प्रासावीद् द्विपत्प्र चतुष्पादित्यै ॥१॥

उषाः। उच्छन्ती। सम्ऽइधाने। अग्नौ। उत्ऽयन्। सूर्यः। उर्विया।
ज्योतिः। अश्रेत्। देवः। नः। अत्र। सविता। नु। अर्थम्।
प्र। असावीत्। द्विऽपत्। प्र। चतुःऽपत्। इत्यै ॥१॥

सायणः—एषा उषाः समिधाने अग्नौ। अग्नित्वसामान्येनैकवचनम्। अग्निषु समिध्यमानेषु सत्सु। कर्मार्थे कर्तृप्रत्ययः। उषःकाले ह्याहवनीयादयः प्रज्वाल्यन्ते। उच्छन्ती तमो निवासयन्ती उर्विया उरु बहुलं ज्योतिः प्रकाशम् अश्रेत् सेवते प्रकाशते प्रकाशयति वा सर्वम्। किमिव? उद्यन् सूर्यः। उपमाप्रधाननिर्देशः। उदितः सूर्यः इव। सूर्यो यथा प्रकाशयति तथेत्यर्थः, अत्र त्वदुदयानन्तरमस्मिन् कर्मणि वा सविता देवः सर्वस्य प्रेरकः सूर्यः नः अस्मदर्थं नु क्षिप्रम्। अर्थम्। अर्थशब्दोऽत्र विशेषणवाची नपुंसकलिङ्गः। 'अयन्नर्थानि कृणवन्नपांसि' (ऋ० सं० vii-63-4) इत्यादौ तथा दृष्टत्वात्। अरणीयं द्विपत् पादद्वयोपेतं मनुष्यादिरूपं धनं प्रासावीत्। 'इदुदुपधस्य चाप्रत्ययस्य' (viii-3-41) इति विसर्जनीयस्य षत्वम्। किमर्थम्? इत्यै द्विपदां चतुष्पदां च गमनाय। यद्वा। नः इत्यै इति सम्बन्धः अस्मद्गमनागमनादिव्यापारायेत्यर्थः ॥१॥

*वेङ्कटमाधवः*—उषाः । व्युच्छन्ती । होमार्थं दीप्यमाने । अग्नौ भवति । उद्यंश्च सूर्यः । विस्तीर्णम् । ज्योति । श्रयतिः । देवश्च । सविता । अत्र । क्षिप्रम् । अस्मान् । कार्यं प्रति । प्रसौति । द्विपत् । चतुष्पच्च । गमनाय । प्रसौति ॥१॥

Grif. :—The Dawn refulgent when the fire is kindled, and the Sun rising far diffuse their brightness.
Savitar, God, hath sent us forth to labour, each quadruped, each biped, to be active.

---

अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि ।
ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥२॥

अमिनती । दैव्यानि । व्रतानि । प्रऽमिनती । मनुष्या । युगानि ।
ईयुषीणाम् । उपमा । शश्वतीनाम् । आऽयतीनाम् ।
प्रथमा । उषाः । वि । अद्यौत् ॥२॥

*सायणः*—दैव्यानि व्रतानि देवसम्बन्धीन्यग्निहोत्रादीनि कर्माणि । व्रतमिति कर्मनाम ·व्रतम् कर्वरम् (निघ ii–1) इति तन्नामसु पाठात् । तानि कर्माणि अमिनती अहिंसती भानप्रदानेनानुकूलं कुर्वती । तथा मनुष्या मनुष्याणां युगानि युगोपलक्षितान् निमेषादिकालावयवान् प्रमिनती प्रकर्षेण हिंसती, आयुः क्षपयन्तीत्यर्थः । उषाकाले सर्वे यथायथं स्वस्वव्यापाराय गच्छन्तीति प्रसिद्धम् । किञ्च ईयुषीणाम् अतीतानाम् शश्वतीनाम् नित्यानाम् उषसाम् उपमा ताभिः सदृशीत्यर्थः । सादृश्यं च 'सदृशीरद्य सदृशीरिदुश्वः' (ऋ० सं० i–123–8) इत्यत्रोक्तम् । तथा आयतीनाम् प्रथमा आगामिनीनामुषसां प्रथमभाविनी सती व्यद्यौत् विशेषेण प्रकाशते । यद्वा ईयुषीणाम् गमनशीलानां पश्वादीनां शश्वतीनाम् सन्ततिप्रवाहरूपेण नित्यानाम् उपमा तद्वाम्नित्येत्यर्थः । तथा आयतीनाम् रात्र्यवसानसमये उत्पद्यमानानां प्रज्ञावागादीनां प्रथमा प्रथमभाविनी । उषस्यागतायां वाचो बुद्धयश्च स्फुरन्तीति प्रसिद्धम् । तादृशी देवी व्यद्यौत् प्राणिनामनुग्रहाय द्योतते ॥२॥

*वेङ्कटमाधवः*—अहिंसती । यज्ञान् । प्रहिंसन्ती । मनुष्याणाम् । आयुषो व्यवच्छेदकानि, अहोरात्राणि । गतानामुषसाम् । अन्तिमा । आयतीनाम् । मुख्या । प्रादुरभवत् ॥२॥

Grif.:—Not interrupting heavenly ordinances, although she nimisheth human generations,
The last of endless morns that have departedth, the first of those that come, Dawn brightly shineth.

—

एषा दि॒वो दु॑हि॒ता प्रत्य॑दर्शि॒ ज्योति॒र्वसा॑ना स॒मना॑ पु॒रस्ता॑त् ।
ऋ॒तस्य॒ पन्था॒मन्वे॑ति सा॒धु प्र॑जान॒तीव॒ न दिशो॑ मिनाति ॥३॥

एषा । दि॒वः । दु॒हि॒ता । प्रति॑ । अ॒दर्शि॒ । ज्योतिः॑ । वसा॑ना ।
स॒मना॑ । पु॒रस्ता॑त् । ऋ॒तस्य॑ । पन्था॑म् । अनु॑ । ए॒ति॒ ।
सा॒धु । प्र॒जा॒न॒तीऽइ॑व । न । दिशः॑ । मि॒ना॒ति॒ ॥३॥

सायणः—एषा उषाः दिवः द्योतनात्मकस्य द्युलोकस्य दुहिता दुहितृस्थानीया । तत उत्पद्यमानत्वाद्दुहितेत्युपचर्यते । पुरस्तात् पूर्वस्यां दिशि प्रति प्रत्येकम् अदर्शि दृश्यते । सर्वेषामपि प्राणिनामाभिमुख्येन प्रकाशत इत्यर्थः । कीदृशी सा ? ज्योतिः वसाना तेजोरूपं वस्त्रमाच्छादयन्ती तेजसा प्रकाशयन्ती समना सम्यगानाययित्री चेष्टयित्री । अन्तर्भावितण्यर्थोऽयम् । यद्वा सह युगपदेव मन्यतेऽवबुध्यते प्राणिभिरिति समना । व्युत्पत्त्यनवधारणादनवग्रहः । सा तादृशी ऋतस्य आदित्यस्य पन्थाम् पन्थानं मेरोः प्रान्तप्रदेशम् अनु क्रमेण साधु सम्यक् एति गच्छति । सूर्यो यत्र यत्र गच्छति तत्र तत्र पुरस्तादुषा अपि गच्छतीत्यर्थः । सैव विशेष्यते । प्रजानतीव प्रियभूतस्य सूर्यस्य मार्गो मयापि गन्तव्य इति चेतयन्तीव । यथा लोके प्रियतमेऽनुरागयुक्ता काचिद्भर्तारं सर्वास्ववस्थासु न विमुञ्चति तथेयमपीत्यर्थः । किञ्च दिशः प्रागादिकाः न मिनाति न हिनस्ति । किन्तूषा यत्र गच्छति सा प्राचीत्येवं प्रागादिव्यवहारं करोतीत्यर्थः ॥३॥

वेङ्कटमाधवः—एषा । दिवः । प्रतिदृश्यते । पूर्वस्यां दिशि । ज्योतिः । आच्छादयन्ती । समनस्का । आदित्यस्य । पन्थानम् । साधु । अनुगच्छति । प्रागेव अवगच्छन्तीव । दिशश्च । न । हिनस्ति रात्रिरिवेति ॥३॥

Grif.:—There in the eastern region she, Heaven's Daughter, arrayed in garments all of light, appeareth.
Truly she followed the path of Order, nor faileth, knowing well, the heavenly quarter.

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ।
अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥४॥

उपो इति । अदर्शि । शुन्ध्युवः । न । वक्षः । नोधाःऽइव । आविः । अकृत । प्रियाणि । अद्मऽसत् । न । ससतः । बोधयन्ती । शश्वत्ऽतमा । आ । अगात् । पुनः आऽईयुषीणाम् ॥४॥

*सायणः*—एषा उषाः । उपो इति निपातद्वयसमुदायात्मक एको निपातः । सर्वैः समीप एव अदर्शि दृश्यते । तत्र दृष्टान्तः । शुन्ध्युवः न वक्षः । अत्र नकार उपमार्थीय उपरिष्टात् प्रयुज्यमानत्वात् । यत्र तु प्रतिषेधो विवक्षितस्तत्र पुरस्तान्नकारः प्रयुज्यते । तथा च यास्कः—पुरस्तादुपचारस्तस्य यत्प्रतिषेधति (नि० i-4) इति । तस्योदाहरणम्—नेन्द्रं देवममंसत (x-86-1) इति । उपरिष्टादुपचारस्तस्य येनोपमिमीते (नि० i-4) इति, तस्योदाहरणम्—दुर्मदासो न सुरायाम् (ऋ० सं० viii-2-12) इति । शुन्ध्युः आदित्यः सर्वेषां शोधकत्वात् । तस्य वक्षः वक्षःस्थानीयो रश्मिसमूहः । स यथा प्रकाशमानो दृश्यते तथेत्यर्थः । यद्वा । शुन्ध्युरिति जलचरः श्वेतवर्णः पक्षिविशेषः । स यथा स्वकीयं वक्षः प्रकाशयन् दृश्यते तद्वदित्यर्थः । किञ्च नोधाः इव प्रियाणि आविरकृत । नवनं स्तोत्रं धारयतीति नोधाः । एतन्नामा महर्षिर्देवतास्तुतिव्याजेन, नानाविधैर्मन्त्रैः प्रियाणि मनीषितान्याविष्कृतवान् । तथैषापि स्वकीयानि सर्वलोकप्रियाणि तेजांस्याविरकरोत् । किञ्च अद्मसत् न । अत्राप्युपमार्थीयो नकारः । अद्यत इत्यद्म अन्नम्, तस्य पाकाय गृहे सीदतीत्यद्मसत् । पाचिका योषित् ससतः बोधयन्ती । सा यथा स्वपतः पुत्रादीन् भोजनाय बोधयति तद्वत् । यद्वा । अद्मेति गृहनाम । वरूथम् अद्म (निघ० iii-5?) इति तन्नामसु पाठात् । तत्र सीदत्यद्मसत् जननी । सा यथा स्वपतः पुत्रादीनुषःकाले प्रबोधयति तथा भुवनाख्ये गृहे सीदन्ती तत्रत्यान् प्राणिनः प्रबोधयन्तीयमुषाः एयुषीणाम् आगमनशीलानां स्त्रीणां मध्ये शश्वत्तमा पुनः पुनरागच्छति । प्रातर्नियतमागच्छन्तीनां नारयोषितां मध्ये स्वयमेका सती नियतमागच्छतीत्यभिप्रायः ·········॥४॥

*यास्कः*—···उपादर्शि शुन्ध्युवः । शुन्ध्युरादित्यो भवति शोधनात् । तस्यैव वक्षो भासोऽध्यूळ्हम् । इदमपीतरद्वक्ष एतस्मादेव, अध्यूळ्हं काये । शकुनिरपि शुन्ध्युरुच्यते शोभनादेव,—उदकचरो भवति । आपोऽपि शुन्ध्युव उच्यन्ते शोभनादेव । नोधा ऋषिर्भवति नवनं दधाति । स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते । अद्मसद् । अद्मान्नं भवति । अद्मसादि-

नीति वा, अन्नसानिनीति वा। ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम्—स्वपतो बोधयन्ती शाश्वतिकमागात् पुनरागामिनीनाम् (नि० iv–16) इति ॥४॥

*स्कन्दस्वामी*—'उपो' उकारः पदपूरणः। उपोपसर्गश्रुतेश्च योग्यक्रियाध्याहारः। उपगता उदिता सतीत्यर्थः। अदर्शि वर्तमाने कर्मणि लुङ्। दृश्यत उषाः। किमिव? शुन्ध्युवो न वक्षः। उदकचरो यः पक्षी हंसादिः शुक्लवर्णस्तस्येव यद् उरः। भास्वरो शुक्लवर्णो वेत्यर्थः। किञ्च 'आविरकृत' स्वेन ज्योतिषा कृत्स्नं जगदाविष्करोति। नोधाः ऋषिः स यथात्मनः प्रियाणि धनादीनि स्वेनार्पेण 'सपर्यामि प्रयसा' (ऋ० सं० i–58–7) 'नूचिदं मरुतो वीरवन्तम्' (ऋ० सं० i–64–15) इत्यादिनाविष्कृतवान्, तद्वत्। किञ्च अद्मसत् अदनादद्म तस्मिन् पक्तृत्वेन सीदति सनोति वा या सा अद्मसत्। सा च सामर्थ्यात् सूपकारी। मक्षिका वात्राभिप्रेता। सा यथा प्रातरुत्थाय क्षीरादिसंग्रहार्थं जनान् प्रबोधयति। 'शश्वत्तमागात्पुनरेयुषीणाम्।' शश्वच्छब्दो नित्यवचनः पुनरायान्ति। गवादयो हि गव्यूतिपर्यन्तं गत्वा गत्वा पुनरायान्ति निर्धारणे चेयं षष्ठी। अतिशयेन नित्या पुनरेयुषीणां मध्य आगात् कृत्स्नं जगदभ्येति व्याप्नोतीत्यर्थः ॥४॥

*वेङ्कटमाधवः*—उषा उपदृश्यते। शोधयितुरादित्यस्य। वक्षः। इव। सेयमृषिर्नोधा इव स्तुत्या कामान्। आविष्कुरुते। रूपाणि। सुदस्त्री। इवान्ने सीदन्ती सिद्धेऽन्ने। स्वामिनः स्वपतः। बोधयन्ती। नित्या। आगता। पुनः पुनः। आगच्छन्तीनामुषसा मध्ये ॥४॥

Grif. :—Near she is seen, as't were the Bright One's bosom: she showeth sweet things like a new song-singer.
She cometh like a fly awaking sleepers, of all returning dames, most true and constant.

---

पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुम्।
व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥५॥

पूर्वे। अर्धे। रजसः। अप्त्यस्य। गवाम्। जनित्री। अकृत। प्र। केतुम्। वि। ऊँ इति। प्रथते। विऽतरम्। वरीयः। आ। उभा। पृणन्ती। पित्रोः। उपऽस्था ॥५॥

*सायणः*—अप्त्यस्य व्यापनशीलस्य विस्तृतस्य रजसः रञ्जकस्यान्तरिक्षलोकस्य। रजःशब्दोऽन्तरिक्षलोकवाची, 'लोका रजांस्युच्यन्ते' इति

यास्केनोक्तत्वात् (नि० iv–19) तस्य पूर्वे अर्धे पूर्वस्मिन् भागे जनित्री उत्पन्ना सती गवाम् दिशां रश्मीनां वा केतुं प्रज्ञानं प्राकृत प्रकर्षेण करोति। यद्वा। अप्स्यस्य कर्मसु स्थितस्य जन्तोः केतुम् गमनागमनादिरूपं कर्म। केतुरिति कर्मनाम, 'केतः केतुः' (निघ० iii–9) इति तन्नामसु पाठात्। प्राकृत प्रकर्षेण करोति। किञ्च पित्रोः पालयित्रोर्द्यावापृथिव्योः उपस्था उपस्थस्य उत्सङ्गेऽनन्तरालप्रदेशे स्थित्वा उभा उभे द्यावापृथिव्यौ पृणन्ती स्वतेजसा पूरयन्ती यद्वा। उभा उभयोः पित्रोरिति सम्बन्धः वितरम् विशिष्टतरं वरीयः उरुतरमितिविस्तीर्णं यथा भवति तथा वि उ प्रथते विशेषेण प्रख्याता भवति। प्रकाशत इत्यर्थः। उशब्दोऽवधारणार्थः पदपूरणो वा, 'मिताक्षरेष्वनर्थकाः कमीमिद्विति' इति यास्केनोक्तत्वात्॥५॥

*वेङ्कटमाधवः*—अब्दयो जातस्य। पूर्वस्मिन्। भागे। अन्तरिक्षस्योषाः। तेजसाम्। जनयित्री। आदित्यस्य तेजः। प्रकृणोति। उरुत्वं च। अतिशयेन तत्र। विप्रथयति। द्यावापृथिव्योः। उभौ। उपस्थौ। आपूरयन्ती तेजसा॥५॥

Grif. :—There in the east half of the watery region the Mother of the cows hath shown her ensign.
Wider and wider still she spreadeth onward, and filleth full the laps of both her Parents.

---

एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम्।
अरेपसा तन्वा शाशदाना नार्भादीषते न महो विभाती॥६॥

एव। इत्। एषा। पुरुऽतमा। दृशे। कम्। न। अजामिम्। न। परि। वृणक्ति। जामिम्। अरेपसा। तन्वा। शाशदाना। न। अर्भात्। ईषते। न। महः। विऽभाती॥६॥

*सायणः*—एषा उषा एवेत्। इच्छब्द एवकारार्थः। एवमेवेदानीं भासमानप्रकारेणैव पुरुतमा विपुलतमात्यन्तविस्तृता सती अजामिम् विजातीयमनुष्यादिजातिं न परिवृणक्ति परितः सर्वतो न वर्जयति। तथा जामिम् सजातीयदेवजातिं न परिवृणक्ति न परिवर्जयति। मनुष्यादिकं देवादिकं च तदुपलक्षितं लोकद्वयं वा कार्त्स्न्येन प्रकाशयतीत्यर्थः। किमर्थमिति तदुच्यते। दृशे कम् सुखेन सर्वेषां दर्शनाय। सुखं यथा भवति तथा सर्वान् दर्शयितुं वा। किञ्च अरेपसा अपापया निर्मलया तन्वा शरीरेण। शाशदाना। शाशद्यमाना। 'शाशदानः शाशद्यमानः' इति यास्कः (नि० iii–16) स्पष्टतां गच्छन्तीत्यर्थः।

विभाती विशेषेण प्रकाशयन्ती सा। अर्भात् अल्पात् पुत्रिकादेः सकाशात् न ईषते न गच्छति। न तमपि प्रकाशयतीत्यर्थः। पूर्वं लोकद्वयं प्रकाशत इत्युक्तम्। इदानीमस्मिँल्लोके परमाण्वादि पर्वतपर्यन्तं कृत्स्नं प्रकाशयतीत्युच्यते ॥६॥

वेङ्कटमाधवः—एवम्। एव। एषा। पुरुतमा। दर्शनाय भवति। न च। वर्जयति। बन्धुम्। अबन्धुम् वा। उज्ज्वलया। तन्वा सर्वम्। अपबाधमाना सेयम्। कुमारात्। न। पलायते। न च। वृद्धात्। व्युच्छन्ती सर्वं जरयतीति ॥६॥

Grif. :—The verily exceeding vast to look on debarreth from her light nor kin nor stranger.
Proud of her spotlees form she, brightly shining, turneth not from the high nor from the humble.

---

अभ्रातेवं पुंस एंति प्रतीची गर्तारुगिव सनये धनानाम्।
जायेव पत्यं उशती सुवासां उषा हस्रेव नि रिणीते अप्सः ॥७॥

अभ्राताऽइंव। पुंसः। एति। प्रतीची। गर्तऽआरुगिव। सनये।
धनानाम्। जायाऽइंव। पत्यें। उशती। सुऽवासाः। उषाः।
हस्राऽइंव। नि। रिणीते। अप्सः ॥७॥

सायणः—अभ्रातेव भ्रातृरहितेव पुंसः पित्रादीन् प्रति प्रतीची स्वकीयस्थानात् प्रतिनिवृत्तमुखी सती एति गच्छति। यथा लोके भ्रातृरहिता योषित् स्वोचितवासोऽलङ्कारादिलाभाय पितृनेति। सति भ्रातरि स एवोचितप्रदानादिना सम्यक् तोषयति, तदभावात् पितरमेव प्राप्नोति। यद्वा। सति स्वभ्रातरि स एव पितुः पिण्डदानादिकं सन्तानकृत्यं करोति। तस्याभावात् स्वयमेव तत्कर्तुं पित्रादीन् गच्छति। तद्वदियमुषा अपि स्वोचितप्रकाशादिलाभाय स्वप्रकाशनाय वा पितृभूतं सूर्यमाभिमुख्येन गच्छति। अयमेको दृष्टान्तः। गर्त इति गृहनाम, 'कृदरो गर्तः' (निघ iii–4) इति तन्नामसु पाठात्। अत्रौचित्येन राजपुरुषैर्न्यायनिर्णेतृभिश्चाधिष्ठितं स्थानमुच्यते तदारोहतीति गर्तारुक्। यथा लोके काचिद्गतभर्तृका योषिद् धनानाम् स्वकीयरिक्थानां सनये लाभाय गर्तमागच्छति। तां तु सभ्या विचार्य यदीयं रिक्थं लभत इति निश्चित्य यात अत्रैः सन्ताड्य तदीयं धनं वितरन्ति। तथेयमपि धनानां प्रीणनसाधनानां प्रकाशानां सनये लाभाय गर्तमाकाशं सूर्यनिवासस्थानमारोहति। देशविशेषाचारमपेक्ष्यैवं दृष्टान्तितम्। किञ्च पत्ये उशती कामयमाना सुवासाः जायेव अयमपरो दृष्टान्तः। यथा च

लोके सुवासा दुकूलादिशोभनवसना स्वलंकृता पूर्वं रजोदर्शनसमये मलिनवस्त्रा सती स्नानानन्तरं शोभनवस्त्राभरणादिना शोभमाना विशेषेण पतिं भोगाय काङ्क्षन्ती तेन सह संक्रीडते तथेयमुषा अपि नैशेनान्धकारेणावृतत्वान्मलिनवसनापि प्रभाते स्वतेजसावृतत्वात् सुवसना सती पतिस्थानीयेन सूर्येण सार्कं संक्रीडमाना इस्रेव इसनेव अप्सः दन्तस्थानीयानि रूपाणि नीलपीतादीनि । यद्वा । निरूप्यमाणानि पदार्थजातानि । नि रिणीते नितरां रिणीते गमयति प्रकाशयतीत्यर्थः । यथा लोके काचिद्रमणीया योषित् स्मितव्याजेन दन्तान् विवृणुते तथेयमपि सर्वाणि रूपाणि प्रकाशयतीत्यर्थः । अयं मन्त्रो निरुक्ते (iii–5) स्पष्टं व्याख्यातः ॥७॥

*यास्कः*—अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिं गर्तारोहिणीव धनलाभाय दाक्षिणाजी । गर्तः सभास्थाणुः गृणातेः । सत्यसंगरो भवति । तं तत्र यापुत्रा यापतिका सारोहति तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते । इति । 'जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान् विवृणुते' इति च ॥७॥

*स्कन्दस्वामी*—'यथाभ्रातृका' स्त्री येभ्य उत्पन्ना तानेव पुंसः पितॄन् एति गच्छति सन्तानकर्मणे पिण्डदानाय च । एवमुषा यत उत्पन्ना तमेवादित्यं गच्छति; तत्रैव प्रलीयत इत्यर्थः । प्रतीची प्रत्यग्गामिनी गर्तारुगिव यथा दक्षिणापथे क्वापि प्रदेशेऽपुत्रापतिका चास्फारारोहिणी स्त्री सनये लाभाय धनानाम् भर्तुः स्वभूतानां सर्वलोकप्रकाशमास्फारं गच्छति तद्वत् । जायेव पत्ये । द्वितीयार्थे चतुर्थी । पतिम् । 'उशती' कामयमाना सुवासा निर्विशङ्कं परया प्रीत्या युक्ता गच्छति तद्वत् । किञ्च इस्रेव यथा हसनशीला स्वदन्तान् नि रिणीते । रिणातिर्गतिकर्मा । निः प्रकर्षे । अन्तर्णीतण्यर्थश्चायम् । प्रकर्षेण गमयति प्रकाशयति ज्ञापयतीत्यर्थः । एवमुषा निरिणीते । किम् ? अप्सः रूपं कृत्स्नस्य जगतः ।

गर्तारोहिणीति ताच्छील्ये क्विप् अन्येभ्योऽपि दृश्यते (iii–2–187) इति । गर्तारोहिणीति भाष्ये ताच्छीलिकेनार्थप्रदर्शनात् । 'दक्षिणाजी' दक्षिणां दिशं देशं वा अजिता, गता, जाता वा तत्र दक्षिणाजी, तस्यापत्यं स्त्री दाक्षिणाजी । दक्षिणेन वा कितवानां गच्छतीति । गर्तः सभास्थाणुरित्यर्थकथनम् । अक्षनिवपनपीठः । सभास्थानमिति पाठान्तरम् । सभा च द्यूतसभा कितवस्थानम् । गृणातेरिति निर्वचनम् । सत्यसङ्गर इति धात्वर्थोपपत्तिवचनम् । सत्यं हि तत्र संगीर्यते । कथम् ? न पुनर्देविष्यामीति मातृहस्तग्रहणादिना कृतशपथोऽपि व्यसनेनैवाकृष्यमाणो गीत्वा शपथं खादयित्वा दीव्यत्येव कितवः । सङ्कर इत्यन्ये पठन्ति । सङ्कीर्यन्ते हि तत्र सत्यमनृतेनानेकविधेन । 'तं गर्तं तत्र यापुत्रापतिका सारोहति । दक्षिणापथे किलैष क्वचिद्देशधर्मः । कितवानां दक्षिणत आस्फारे तिष्ठति । 'तामक्षैराघ्नन्ति सा रिक्थं लभते' पतिबन्धुभ्यः । यो वा तां प्रथममाहन्ति स वैनां गृह्णाति । सा च धनं लभत इति ॥७॥

वेङ्कटमाधवः—अभ्रातेव। यथा अभ्रातृका कन्यका। पुंसः पितॄन् एति। अभिमुखी सन्तानकर्मणे पिण्डदानाय न पतीनेवमुषा अभिमुख्यागच्छति। गर्तारोहिणीव। धनलाभायाक्षिकान्। गर्तो द्यूतास्तारस्तमपतिकपुत्रा च स्त्री भर्तुर्धनहरणायारोहति। तां तत्राक्षेण कितवा घ्नन्ति। न सा ततोऽन्यमाश्रयते, न च तामन्यः परिगृह्णाति, धनमुपगच्छति दाक्षिणात्येषु। जायेव पत्ये कामयमाना। सुवासा ऋतुकालेषु। उषाः हसनेव स्त्री दन्तान्। आत्मीयं रूपम्। विवृणुत इति ॥७॥

Grif.—She seeketh men as she who hath no brother, mounting her car, as'twere to gather riches.
Dawn, like a loving matron for her husband, smiling and well attired, unmasks her beauty.

---

स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव।
व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगाइव व्राः ॥८॥

स्वसा। स्वस्रे। ज्यायस्यै। योनिम्। अरैक्। अप। एति। अस्याः।
प्रतिचक्ष्यऽइव। विऽउच्छन्ती। रश्मिऽभिः। सूर्यस्य। अञ्जि।
अङ्क्ते। समनगाःऽइव। व्राः ॥८॥

सायणः—एकस्मादेवान्तरिक्षादुत्पन्नत्वात् परस्परं स्वसृभावः, तथाप्यह्नः प्राथम्यात् तेजस्वित्वाच्च ज्यायस्त्वम्। स्वयमेव सरतीति वा स्वसा रात्रिः स्वस्रे ज्यायस्यै उक्तरीत्या ज्येष्ठायै योनिम् उत्पत्तिस्थानम् अपररात्ररूपम् अरैक् अरिचत् प्रादात् प्ररेचयतीत्यर्थः। तथा च पूर्वत्राम्नातम्—'रात्र्युषसे योनिमारैक्' (i-113-1) इति। दत्त्वा च अस्याः उत्पन्नाया उषसः प्रतिचक्ष्येव ज्ञापयित्वेव अपैति स्वयमपसृत्यैव गच्छति। ज्यायस्यामागतायां तस्यै स्वस्थानं दत्त्वा स्वयं तत्सन्निधौ स्थातुमनुचितमिति विज्ञायैवापगच्छतीति भावः। एवमुत्पन्नैषा सूर्यस्य रश्मिभिः व्युच्छन्ती तमो विवासयन्ती। अञ्जि व्यञ्जकं तेजः। यद्वा। अञ्जि व्यक्तं जगत्। अङ्क्ते अनक्ति प्रकाशयति। किमिव? समनगाः इव सम्यागमनहेतव आपः समनाः। ता गच्छन्तीति समनगा विद्युतः। व्राः। व्राताः। विद्युत्सङ्घा इव। यद्वा। सम्यगननाय गच्छन्तीति समनगाः सूर्यरश्मयः। त इव व्राः व्राताः सङ्घीभूताः। ते यथाक्ताते जगत् प्रकाशयन्ति तथेत्यर्थः। व्रात इत्यत्र तकारलोपश्छान्दसः ॥८॥

वेङ्कटमाधवः—रात्रिः। ज्येष्ठायै। स्वस उषसे। स्थानम्। अरिचत्। तामुषसं दृष्ट्वेव रात्रिः। अपगच्छति। तस्याः सकाशादपि वा यथा श्वशुरं दृष्ट्वा

स्नुपापगच्छत्येवमिति । सेयम् । सूर्यतेजोभिः सह । प्रादुर्भवन्ती अञ्जनसाधनं तेज आत्मनि । अङ्क्ते । यथा युद्धे गच्छन्तः । वृता आभरणैः ॥८॥

Grif. :—The Sister quitteth, for the elder Sister, her place and having looked on her, departeth.
She decks her beauty, shining forth with sunbeams, like women trooping to the festal meeting.

---

आसां पूर्वासामहंसु स्वसॄणामपरा पूर्वामभ्येति पश्चात् ।
ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः ॥९॥

आसाम् । पूर्वासाम् । अहऽसु । स्वसॄणाम् । अपरा । पूर्वाम् । अभि ।
एति । पश्चात् । ताः । प्रत्नऽवत् । नव्यसीः । नूनम् । अस्मे इति ।
रेवत् । उच्छन्तु । सुऽदिनाः । उषसः ॥९॥

*सायणः*—स्वसॄणां परस्परं स्वसृभावमापन्नानां स्वयं सरन्तीनां वा पूर्वासाम् पुरातनीनाम् आसाम् उषसाम् मध्ये अहसु अहःसु प्रतिदिनम् अपरा अन्या अद्यतन्युषा पूर्वाम् अतीतदिवससम्बन्धिनीम् उषसम् पश्चात् अनुसृत्य अभ्येति अभिमुखं गच्छति, अव्यवधानेन गच्छतीत्यर्थः । सर्वेष्वहःस्वेव-मेवाभ्येति । नव्यसीः नवीयस्यो नवतरा आगामिन्यः ताः उषासः उषसोऽपि नूनम् निश्चयम् प्रत्नवत् पुरातन्य इव सुदिनाः शोभनकर्मानुष्ठानसाधनदिवसाः शोभनदिनमुखा वा सत्यः अस्मे अस्माकं रेवत् बहुधनविशिष्टं यथा भवति तथा उच्छन्तु प्रकाशयन्तु । पूर्वतन्यो यथौच्छंस्तथागामिन्योऽप्यु-च्छन्त्वित्यर्थः ॥९॥

*वेङ्कटमाधवः*—आसाम् । उषसाम् । पूर्वकालानाम् । उत्तरोषाः । पूर्वा गताम् । पश्चात् । अभ्येत्यनुक्रमेण गतेष्वहः स्वगमन् । ताः । पुराणा इव । इदानीं । नवतराः । अस्माकम् । धनयुक्तम् । व्युच्छन्तु । शोभनदिवसाः । एकस्माज्जननात् सहागमनाद्वा स्वसार उषस इति ॥९॥

Grif. :—To all these Sisters who ere now have vanished a later one each day in course succeedeth.
So like the past, with days of happy fortune, may the new Dawns shine forth on us with riches.

---

प्र बोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तु ।
रेवदुच्छ मघवद्भ्यो मघोनि रेवत्स्तोत्रे सूनृते जारयन्ती ॥१०॥

प्र । बोधय । उषः । पृणतः । मघोनि । अबुध्यमानाः । पणयः ।
ससन्तु । रेवत् । उच्छ । मघवत्ऽभ्यः । मघोनि । रेवत् ।
स्तोत्रे । सूनृते । जारयन्ती ॥१०॥

*सायणः*—हे मघोनि मघवति अस्मभ्यं दातव्यैर्बहुभिर्धनैस्तद्वति उषः हे उषोदेवि पृणतः हविष्प्रदानस्मान् यजमानान् प्रबोधय प्रज्ञापय प्रतिबुद्धान् कुरु । किञ्च पणयः व्ययासहिष्णवो वणिजः । 'पणिर्वणिग् भवति' इति यास्कः । (नि० ii–17) । पणय इव लुब्धका अबुध्यमानाः यागादीनकुर्वाणा अदानशीला अस्मच्छत्रवः ससन्तु स्वपन्तु दीर्घनिद्रा भवन्तु म्रियन्तामित्यर्थः । तथा च मन्त्रान्तरम्—ससन्तु त्या अरातयो बोधन्तु शूर रातयः (ऋ० सं० i-29-4) इति । किञ्च, हे मघोनि अस्मद्दत्तहविर्भिस्तद्वति हे उषः मघवद्भ्यः हविर्लक्षणान्नवद्भ्यो यजमानेभ्यस्तेषामर्थं रेवत् धनवत् समृद्धिमत् उच्छ विभाहि । किञ्च हे सूनृते सुष्ठु मनुष्याणां नेत्रि देवि जारयन्ती सर्वप्राणिनः क्षपयन्ती त्वं स्तोत्रे स्तुतिकर्त्रे यजमानाय तदर्थं रेवत् धनवत् समृद्ध्यर्थं उच्छेति शेषः ॥१०॥

*वेङ्कटमाधवः*—प्रयच्छत । उदारान् । धनवति । अबुध्यमानाः । कदर्याः । स्वपन्तु । धनयुक्तम् । व्युच्छ धनवद्भ्यः । मघोनि । रेवत् । स्तोत्रे । मह्यम् । सूनृते । स्तोत्रं कारयन्ती जरयति कर्मेति ? ॥१०॥

Grife. :—Rouse up, O Wealthy One, the liberal givers ;
Let niggard traffickers sleep on unawakened :
Shine richly, Wealthy One, on those who worship,
Richly glad Dawn ! while wasting on the singer.

---

अवेयमश्वैद्युवतिः पुरस्ताद्युङ्क्ते गवामरुणानामनीकम् ।
वि नूनमुच्छादसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥११॥

अव । इयम् । अश्वैत् । युवतिः । पुरस्तात् । युङ्क्ते । गवाम् । अरुणानाम् ।
अनीकम् । वि । नूनम् । उच्छात् । असति । प्र । केतुः ।
गृहम्ऽगृहम् । उप । तिष्ठाते । अग्निः ॥११॥

*सायणः*—इयम् उषाः युवतिः यौवनोपेतयोषित्स्थानीया। यद्वा। सर्वेषु भावेषु मिश्रयन्ती पुरस्तात् पूर्वस्यां दिशि अव अश्वैत् अत्यर्थमागच्छति वर्धते वा। अत्र 'अव' शब्दो विनिग्रहार्थीयः, 'न्यवेति विनिग्रहार्थीयौ' इति यास्केनोक्तत्वात् (नि० i–3)। तत् कथमवगम्यत इति तत्राह—यत् इयम् अरुणानाम् अरुणवर्णानां गवां प्रसिद्धानाम् एतन्नामकानामश्वानां वा अनीकं समूहं युङ्क्ते रथे योजयति। अरुण्यो गाव उषसां प्रतिनियतत्वात्। तथा च निरुक्तम्—'अरुण्यो गाव उषसाम्। श्यावाः सवितुः' (निघ० i–15) इति। यथा लोके वाहनसन्नाहं दृष्ट्वा प्रयाणमनुमीयते तथात्राप्यरुणरश्मीनामश्वानां दर्शनादुषा आगच्छतीत्यध्यवसीयते। यद्वा। अरुणानां रश्मीनां समूहं युङ्क्ते। तथा नूनम् निश्चितमेषा वि उच्छात् तमो विवर्जयिष्यति। यत इयं गा युनक्ति अत एव कारणात् यथा लोके सन्नाहं दृष्ट्वा जयोऽनुमीयते तथाऽत्रापीत्यर्थः। तादृशी सा असति असत्प्राये नीरूपेऽन्तरिक्षे, तिरोधायकत्वादशोभने तमसि वा केतुः केतुस्थानीया ज्ञापयित्री प्रकर्षेण विविधं भासत इति शेषः। उपसर्गवशाद्योग्यक्रियाध्याहारः। यद्वा। असति। तमोरूपेऽन्धकारे प्रकेतुः प्रकर्षेण ज्ञापयित्री सती नूनं व्युच्छादिति पूर्वत्रान्वयः। तस्मिन् काले अग्निः आहवनीयादिरूपः गृहंगृहम् सर्वयजमानगृहम् अग्निहोत्राद्यर्थम् उप तिष्ठाते उपतिष्ठते दीप्यते इत्यर्थः ॥११॥

वेङ्कटमाधवः—इयम्। अधः। द्योतते। युवतिः। पूर्वस्यां दिशि। युङ्क्ते च। अश्वानाम्। अरुणवर्णानाम्। समूहं रथे। सैवेयं व्युष्टाऽभवत्। सम्प्रति प्रभवति च। प्रज्ञानम्। अथाऽनुग्रहम्। अग्निः स्वाहाप्रतिग्रहार्थम्। सङ्गच्छते ॥११॥

Grif.:—This young Maid from the east hath shone upon us; she harnesses her team of bright red oxen.
She will beam forth, the light will hasten hither and Agni will be present in each dwelling.

---

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥१२॥

उत्। ते। वयः। चित्। वसतेः। अपप्तन्। नरः। च। ये। पितुऽभाजः। विऽउष्टौ। अमा। सते। वहसि। भूरि। वामम्। उषः। देवि। दाशुषे। मर्त्याय ॥१२॥

सायणः—ते तव व्युष्टौ सत्यां वयश्चित् गमनवन्तः पक्षिणोऽपि। चिदित्येषोऽपिशब्दार्थे निपातानामेकार्थत्वात्। 'उच्चावचेष्वर्थेषु निपतन्ति' (नि० i–4) इति यास्केनोक्तत्वात्। वसतेः निवासस्थानान्नीडादेः उत् ऊर्ध्वम् अपप्तन् पतन्ति। पूर्ववाक्ये 'गृहंगृहमुप तिष्ठाते अग्निः' इत्युक्तत्वादपेक्षयापि-शब्दः। किञ्च, नरश्च मनुष्याश्च पितुभाजः अन्नवन्तोऽन्नार्थिनः कृषिवाणिज्या-दिकर्तारः स्वस्वव्यापारार्थम् उत् उन्मुखा अपप्तन् गच्छन्ति। तथा च मन्त्रान्त-रम्—'पद्वदीयत'.........(ऋ० सं० i–48–5) इति। एवं व्युष्टौ सत्यां हे देवि देवनशीले उषः देवते अमा गृहे देवयजनाख्ये सते तिष्ठते यजमानाय। तदर्थम्। अमेति गृहनाम 'अमा दमे' (निघ० iii–4) इति तन्नामसु पठितत्वात्। यद्वा अमा सह, हूयमानेनाग्निना सह, निवसते यजमानाय, अमा वसेताम् इत्यादौ सहार्थे प्रयोगात्। मर्त्याय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय भूरि वामम् बहु शोभनं धनं वहसि प्रापयसि ॥१२॥

वेङ्कटमाधवः—तव। व्युष्टौ। पक्षिणः। अपि। वसतेः। उदपप्तन्। मनुष्याः। च। ये। अन्नस्य भाजकाः। गृहे। वसते। याचितृभ्यः प्रयच्छते। मनुष्याय। त्वमुषः। देवि। बहु। धनम्। वहसि ॥१२॥

Grif. —As the birds fly forth from their resting-places, so men with store of food rise at the dawning.
Yea to the liberal mortal who remaineth at home, O Goddess Dawn, much good thou bringest.

---

अस्तो॑ढ्वं स्तोम्या॒ ब्रह्म॑णा॒ मेऽवी॑वृधध्वमुश॒तीरु॑षासः।
यु॒ष्माकं॑ देवी॒रव॑सा सनेम सह॒स्रिणं॑ च श॒तिनं॑ च॒ वाज॑म् ॥१३॥

अस्तो॑ढ्वम्। स्तो॒म्याः॒। ब्रह्म॑णा। मे॒। अवी॑वृधध्वम्। उ॒श॒तीः। उ॒षसः॒। यु॒ष्माक॑म्। दे॒वीः॒। अव॑सा। स॒नेम॒। स॒ह॒स्रि-णम्। च॒। श॒तिन॑म्। च॒। वाज॑म् ॥१३॥

सायणः—हे स्तोम्याः! स्तोमः स्तोत्रम्। तदर्हन्तीति स्तोम्याः स्तुत्यर्हा उषसः। यतो यूयं तादृश्यः अतः मे मत्स्वभूतेन ब्रह्मणा सूक्तद्वयगतमन्त्ररूपेण स्तोत्रेण अस्तोढ्वम् स्तुता भवत। किञ्च, हे उषासः उषसः उशतीः स्तोतॄनस्मान-स्मत्समृद्धिं वा कामयमाना यूयम् अवीवृधध्वम् अस्मान् प्रवर्धयत। किञ्च, हे देवीः देव्यो देवनशीलाः युष्माकम् अवसा युष्मत्सम्बन्धिना रक्षणेन वयं सहस्रिणम् सहस्रसंख्याकमभीष्टं धनं सनेम लभेमहि। तथा शतिनम् च वाजम्

शतसंख्याकमपरिमितं धनं सनेम। युष्मत्कृतेन शतसहस्रपरिमितधनादिरूप-रक्षणेन वयमप्यर्थिभ्यः शतसहस्रपरिमितस्य धनस्य सनितारो भवेमे-त्यर्थः ॥१३॥

*वेङ्कटमाधवः*—हे स्तोमार्हा उषसः। यूयम्। मम। अनेन स्तोत्रेण। स्तुता भवत। वर्धयतास्मान्। कामयमानाः। उषसः। युष्माकम्। देव्यः! पालनेन। सम्भजेमहि। सहस्रसङ्ख्याकम्। शतसङ्ख्याकम् च धनम् ॥१३॥

Grif. :—Praised through my prayer be ye who should be lauded.
Ye have increased our wealth, ye Dawns who love us.
Goddesses, may we win by your good favour wealth to be
*told by hundreds and by thousands.*

---

## 7—I—154

दीर्घतमा ऋषिः। त्रिष्टुप् छन्दः। विष्णुर्देवता।

**विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि।**
**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥**

विष्णोः। नु। कम्। वीर्याणि। प्र। वोचम्। यः। पार्थिवानि। विऽ-
ममे। रजांसि। यः। अस्कभायत्। उत्ऽतरम्। सधऽस्थम्।
विऽचक्रमाणः। त्रेधा। उरुऽगायः ॥१॥

*सायणः*—हे नराः! विष्णोः व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नु कम् अतिशीघ्रं प्र वोचम् प्रब्रवीमि। अत्र यद्यपि नु कमिति पदद्वयं तथापि यास्केन 'नवोत्तराणि पदानि' नि० (iii–12) इत्युक्तत्वात्, शाखान्तर एकत्वेन पाठाच्च 'नु' इत्येतस्मिन्नेवार्थे 'नु कम्' इति पदद्वयम्। कानि तानीति तत्राह। यः विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोक-त्रयाभिमानीन्यग्निवाय्वादित्यरूपाणि तेजांसि विममे विशेषेण निर्ममे। अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः। तथा च मन्त्रान्तरम् 'यदिन्द्राग्नी……' (ऋ० सं० i–108–9) इति। तैत्तिरीयेऽपि 'योऽस्यां……' (तै० सं० i–2–12–1) इति। तस्माल्लोकत्रयस्य पृथिवीशब्दवाच्यत्वम्। किञ्च, यः विष्णुः उत्तरम् उद्गततरम् अतिविस्तीर्णं सधस्थम् सहस्थानं लोकत्रयाश्रयभूतमन्तरिक्षम् अस्क-भायत् तेषामाधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः। अनेनान्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति। यद्वा। यः विष्णुः पार्थिवानि पृथिवी-

सम्बन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविधं निर्मितवान्। रजःशब्दो लोकवाची, 'लोका रजांस्युच्यन्ते' (नि० iv-10) इति यास्केनोक्तत्वात्। किञ्च, यः च उत्तरम् उत्कृष्टतरं सर्वेषां लोकानामुपरिभूतम्। अपुनरावृत्तेस्तस्योत्कृष्टत्वम्। सधस्थम् उपासकानां सहस्थानं सत्यलोकम् अस्कभायत् स्कम्भितवान् ध्रुवं स्थापितवानित्यर्थः। किं कुर्वन्? त्रेधा विचक्रमाणः त्रिप्रकारं स्वसृष्टाँल्लोकान् विविधं क्रममाणः। विष्णोस्त्रेधा क्रमणम् 'इदं विष्णुर्वि चक्रमे' (ऋ० सं० i-22-17) इत्यादिश्रुतिषु प्रसिद्धम्। अत एव उरुगायः उरुभिर्महद्भिर्गीयमानः, अतिप्रभूतं गीयमानो वा। य एवं कृतवांस्तादृशस्य विष्णोर्वीर्याणि प्रवोचम्॥१॥

*वेङ्कटमाधवः*—विष्णोः। कर्माण्यहम्। क्षिप्रमेव। ब्रवीमि। यः। पृथिव्या भवान्। लोकान्। विममे। यश्च। द्याम्। उत्तभ्नाति। विक्रममाणः। त्रेधा। उरुगमन उरुभिर्वा स्तोतव्यः॥१॥

Pes. :—I will sing the mighty deeds of Viṣṇu; how in three great strides he measured out earth's fields, and fixed fast the heavens to be his seat on high.

---

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥२॥

प्र। तत्। विष्णुः। स्तवते। वीर्येण। मृगः। न। भीमः।
कुचरः। गिरिऽस्थाः। यस्य। उरुषु। त्रिषु। विऽक्रमणेषु।
अधिऽक्षियन्ति। भुवनानि। विश्वा॥२॥

*सायणः*—तत् विष्णुः यस्येति वक्ष्यमाणत्वात् स इत्यवगम्यते। स महानुभावः वीर्येण स्वकीयेन वीरकर्मणा (प्र) प्रकृष्टरूपेण स्तवते स्तूयते सर्वैः। कर्मणि व्यत्ययेन शप्। वीर्येण स्तूयमानत्वे दृष्टान्तः! मृगः न सिंहादिरिव यथा स्वविरोधिनो मृगयिता सिंहः भीमः भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा गिरिष्ठाः। पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते। तद्वदयमपि मृगः अन्वेष्टा शत्रूणां भीमः भयानकः सर्वेषां भीत्यपादानभूतः। परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते०' (तै० आ० viii-8-1) इत्यादिश्रुतिषु प्रसिद्धा। किञ्च कुचरः शत्रुवधादिकुत्सितकर्मकर्ता, कुषु सर्वासु भूमिषु लोकत्रये सञ्चारी वा, तथा गिरिष्ठाः गिरिवदुच्छ्रितद्युलोकस्थायी। यद्वा। गिरि

मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः । ईदृशोऽयं स्वमहिम्ना स्तूयते । किञ्च, यस्य विष्णोः उरुषु विस्तीर्णेषु त्रिषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति आश्रित्य निवसन्ति । स विष्णुः स्तूयते ॥२॥

*यास्कः*—मृगो न भीमः कुचरो गिरिष्ठाः । मृग इव भीमः कुचरो गिरिष्ठाः । मृगो मार्ष्टेर्गतिकर्मणः । भीमो बिभ्यत्यस्मात्, भीष्मोऽप्येतस्मादेव । कुचर इति चरति कर्म कुत्सितम्, अथ चेद्देवताभिधानं क्वायं न चरति इति वा । गिरिष्ठा गिरिस्थायी । गिरिः पर्वतः, समुद्गीर्णो भवति । पर्ववान् पर्वतः । पर्व पुनः पृणातेः प्रीणातेर्वा ॥२॥

*वेङ्कटमाधवः*—प्र । सः । विष्णुः । स्तूयते । वीर्येण । मृगः । इव । भयानकः । कुत्सित-कर्मचारी । पर्वते वर्तमानः । यस्य । विस्तीर्णेषु । त्रिषु । पदनिधानस्थानेषु । सर्वाणि । भूतानि । अधिवसन्ति ॥२॥

Pet.:—Viṣṇu makes loud boast of this, like a fierce lion roaming on the mountain tops; under his three steps all worlds abide.

प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥३॥

प्र । विष्णवे । शूषम् । एतु । मन्म । गिरिऽक्षिते । उरुऽगायाय ।
वृष्णे । यः । इदम् । दीर्घम् । प्रऽयतम् । सधऽस्थम् ।
एकः । विऽममे । त्रिभिः । इत् । पदेभिः ॥३॥

*सायणः*—विष्णवे सर्वव्यापकाय शूषम् अस्मत्कृत्यादिजन्यं बलम् महत्त्वं मन्म मननं स्तोत्रम् मननीयं शूषं बलं वा विष्णुम् (प्र) एतु प्राप्नोतु । कर्मणः सम्प्रदानाच्चतुर्थी । कीदृशाय ? गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानाम् । एवं महानुभावं शूषं प्राप्नोतु । कोऽस्य विशेष इत्युच्यते । यः विष्णुः इदम प्रसिद्धं दृश्यमानं दीर्घम् अतिविस्तृतं प्रयतम् नियतं सधस्थम् सहस्थानं लोकत्रयम् एकः इत् एकाद्वितीयः सन् त्रिभिः पदेभिः पादैः विममे विशेषेण निर्मितवान् ॥३॥

*वेङ्कटमाधवः*—प्रगच्छतु । विष्णवे । बलकरम् । स्तोत्रम् । पर्वते वर्तमानाय । महागमनाय । वर्षित्रे । यत् । इदम् । दीर्घम् । प्रकर्षेण सम्बद्धम् । त्रैलोक्यम् । एकः । त्रिभिः । एव । पदैः । परिचिच्छेद ॥३॥

Pet. :—Let the loud song go out to Viṣṇu, the Bull, the wide paces who dwell in the hill: who alone measured out in three steps this great and wide world to be his dwelling-place.

---

यस्य॒ त्री पू॒र्णा मधु॑ना प॒दान्यक्षी॑यमाणा स्व॒धया॒ मद॑न्ति ।
य उ॑ त्रि॒धातु॑ पृथि॒वीमु॒त द्यामेको॑ दा॒धार॒ भुव॑नानि॒ विश्वा॑ ॥४॥

यस्य॑ । त्री । पू॒र्णा । मधु॑ना । प॒दानि॑ । अक्षी॑यमाणा । स्व॒धया॑ ।
मद॑न्ति । यः । उँ॒ इति॑ । त्रि॒ऽधातु॑ । पृ॒थि॒वीम् । । उ॒त ।
द्याम् । एकः॑ । दा॒धार॑ । भुव॑नानि । विश्वा॑ ॥४॥

सायणः—यस्य विष्णोः मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्री त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान् । यः उ य एव पृथिवीम् प्रख्यातां भूमिम् द्याम् उत द्योतनात्मकं अन्तरिक्षं च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दश लोकांश्च । यद्वा पृथिवीशब्देनाधोवर्तीन्यन्यतलवितलादिसप्तभुवनान्युपात्तानि । द्युशब्देन तदवान्तररूपाणि भूरादिसप्तभुवनानि । एवं चतुर्दश लोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि । त्रिधातु । त्रयाणां धातूनां समाहारस्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान् । तुजादित्वादभ्यासस्य दीर्घत्वम् । उत्पादितवानित्यर्थः । छन्दोगारण्यके "तत्तेजोऽसृजत तदन्नमसृजत ता आप ऐक्षन्त" इति भूतत्रयसृष्टिमुक्त्वा "हन्ताहमिमास्तिस्रो……" (छा० उ० vi-3-2-3) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः ॥४॥

वेङ्कटमाधवः—यस्य । त्रीणि । पदानि । ओषध्यादिभिः स्वरसैः । पूर्णानि । अक्षीयमाणान्नेन । मादयन्ति । यः । च । पृथिवीम् । च । द्यां चान्तरिक्षसम्बन्धत्वात् त्रिसन्धानम् । दाधारेत्येतदेवोक्तम् । एको दाधार । भुवनानि सर्वाणीति ॥४॥

Pet :—Whose three stps are full of honey and, knowing no decay, rejoice ever in heavenly food: who alone sustains *this triple* earth and heaven (earth, heaven and the space between), with all that dwell therein (or Heaven, and all the worlds).

---

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥५॥

तत् । अस्य । प्रियम् । अभि । पाथः । अश्याम् । नरः । यत्र ।
देवऽयवः । मदन्ति । उरुऽक्रमस्य । सः । हि । बन्धुः । इत्था ।
विष्णोः । पदे । परमे । मध्वः । उत्सः ॥५॥

*सायणः*—अस्य महतः विष्णोः प्रियम् प्रियभूतं तत् सेव्यत्वेन प्रसिद्धं पाथः अन्तरिक्षनामैतत्, 'पाथोऽन्तरिक्षं पथा व्याख्यातम्' (नि० vi–7) इति यास्केनोक्तत्वात्। अविनश्वरं ब्रह्मलोकमित्यर्थः अश्याम् व्याप्नुयाम्। तदेव विशेष्यते। यत्र स्थाने देवयवः देवं द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः नरः मदन्ति तृप्तिमनुभवन्ति। तदश्यामित्यन्वयः। पुनरपि तदेव विशेष्यते। उरुक्रमस्य अत्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना, अत एव विष्णोः व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वः मधुरस्य परमानन्द-रसस्य सुधारूपस्य उत्सः निष्यन्दो वर्तते। तदश्याम्। यत्र क्षुत्तृष्णाजरामरण-पुनरावृत्त्यादिभयं नास्ति, सङ्कल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृश-मित्यर्थः। ततोऽधिकं नास्तीत्याह। इत्था इत्थम् उक्तप्रकारेण सः हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरो बन्धकः, तस्य पदं प्राप्तवतामपुनरा-वृत्तेः। 'न च पुनरावर्तते' (छा० उ० viii–15–1) इति श्रुतेस्तस्य बन्धुत्वम्। हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थम् ॥५॥

*वेङ्कटमाधवः*—तत्। अस्य विष्णोः। प्रियम्। स्थानम्। अभिप्राप्नुयात्। नरः। यत्र। देवकामाः। मदन्ति। विस्तीर्णं क्रममाणस्य। स्तोत्रैर्बन्धनकृत्। इत्थं तत्स्थानमभिप्राप्नोति। विष्णोः। पदे। परमे दिवि। उदकस्य। उत्पत्तिस्थानम् ॥५॥

Pet. :—O that I may come to that dear home of his, where god-fearing men live in bliss: there is the fellowship of the God of the mighty strides; in Viṣṇu's seat on high there is a spring of honey.

---

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥६॥

ता । वाम् । वास्तूनि । उश्मसि । गमध्यै । यत्र । गावः । भूरिऽशृङ्गाः ।
अयासः । अत्र । अह । तत् । उरुऽगायस्य । वृष्णः ।
परमम् । पदम् । अव । भाति । भूरि ॥६॥

सायणः—हे पत्नीयजमानौ ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि वां युवयोः गमध्यै गमनाय उश्मसि कामयामहे । तदर्थं विष्णुं प्रार्थयाम इत्यर्थः । तानीत्युक्तं कानीत्याह । यत्र येषु वास्तुषु गावः रश्मयः भूरिशृङ्गाः अत्यन्तोन्नत्युपेता. बहुभिराश्रयणीया वा । अयासः अयना गन्तारोऽतिविस्तृताः । यद्वा । अयासः गन्तारः अतादृशाः अत्यन्तप्रकाशयुक्ता इत्यर्थः । अत्र अह अत्र खलु वास्त्वाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामानां वर्षितुर्विष्णोः तत् तादृशं सर्वत्रेतिहासपुराणादिषु गन्तव्यत्वेन प्रसिद्धं परम् निरतिशयं पदम् स्थानं भूरि अतिप्रभूतम् अव भाति स्वमहिम्ना स्फुरति । अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक व्याचक्षाणेन व्याख्यातः (नि० ii-17) ॥६॥

यास्कः—तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गाः । भूरीति बहुनो नामधेयं प्रभवतीति सतः । शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणोयद्गतमिति वा शिरसो निर्गतमिति वा । अयासोऽयनाः । तत्र तद् उरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थम् । अव भाति भूरि । पदः पद्यतेः इति ॥६॥

वेङ्कटमाधव.—तानि । इन्द्राविष्णवोः स्थानानि । कामयामहे । गमनाय । यत्र । रश्मयः । बहुशिरस्काः । गच्छन्तः । अत्र । एव । तत् । महागतेः । वर्षितुर्विष्णोः । परार्धस्थम् । पदम् । भासते । विस्तीर्णम् ॥६॥

Pet, :—I long to go to that house of yours, O Twin Gods, where are the many-horned unresting kine, here that highest seat of the God of the mighty strides shines bright upon us.

---

## 8—I—160.

दीर्घतमा ऋषिः । जगती छन्दः । द्यावापृथिवी देवते ॥

ते हि द्यावापृथिवी विश्वशम्भुव ऋतावरी रजसो धारयत्कवी ।
सुजन्मनी धिषणे अन्तरीयते देवो देवी धर्मणा सूर्यः शुचिः ॥१॥

ते इति । हि । द्यावापृथिवी इति । विश्वऽशंभुवा । ऋतवरी इत्यृतऽवरी । रजसः । धारयत्कवी इति धारयत्ऽकवी । सुजन्मनी इति सुऽजन्मनी । धिषणे इति । अन्तः । ईयते । देवः । देवी इति । धर्मणा । सूर्यः । शुचिः ॥१॥

*सायणः*—ते हि ते खलु प्रसिद्धे द्यावापृथिवी अन्तः तयोरन्तराले शुचिः शुद्धो विश्वस्य शोचयिता वा देवः दीप्यमानः सूर्यः धर्मणा प्रकाशोदकदानादि-धारणेन युक्तः सन् ईयते सर्वदा गच्छति । 'ईङ् गतौ' । दैवादिकः । तादृशं कर्म युवयोरनुग्रहादिति स्तुतिः । कीदृश्यौ ते । विश्वशंभुवा । विश्वं सुखभावयितृ ययोः ते विश्वशंभुवा । विश्वस्य सुखयित्र्यावित्यर्थः । ऋतावरी ऋतवत्यौ । ऋतशब्दात् 'छन्दसीवनिपौ' इति वनिप् । 'वनो रच' इति ङीब्रेफौ । रजसः उदकस्य उदकोत्पत्तौ । 'उदकं रज उच्यते' (Nir, iv–19) इति निरुक्तम् । धारयत्कवी अकृच्छ्रेण धारकं कवि ययोस्ते तादृश्यौ । उदकोत्पादनाय अप्रयत्नवत्यौ इति । यद्वा । धारयत्कविर्मनीषी आदित्यो ययोस्ते तादृश्यौ । वृष्ट्युदकं धारयत्सूर्योपेते इति । सुजन्मनी शोभनजन्मवत्यौ, धिषणे धर्षणोपेते स्वव्यापारेषु प्रगल्भे इति । देवी द्योतमाने । अत्र यद्यपि धिषणे इत्येतत् 'धिषणे रोदसी' (Nir, iii–30–3) इति तन्नामसु उक्तत्वात् द्यावापृथिवी नाम, तथापि द्यावापृथिवी इत्यस्य विद्यमानत्वात् यौगिकं द्रष्टव्यम् ॥१॥

*वेङ्कटमाधवः*—ते । हि । द्यावापृथिव्यौ । सर्वस्य सुखस्य भावयित्र्यौ । उदकवत्यौ । लोकार्थम् । ध्रियमाणस्तोत्रे । शोभनजन्मानौ । धृष्टे । देवी । मध्येन । सर्वस्य धारणार्थम् । निर्मलः । सूर्यः । देवः । गच्छति ॥१॥

Grif. :—There, Heaven and Earth, bestow prosperity on all,
sustainers of the region, Holy ones and wise,
Two bowls of noble kind : between these Goddesses the
God the fulgent Sun, travels by fixed decree.

---

उरुव्यचसा महिनी असश्चता पिता माता च भुवनानि रक्षतः ।
सुधृष्टमे वपुष्ये न रोदसी पिता यत्सीमभि रूपैरवासयत् ॥२॥

उरुऽव्यचसा । महिनी इति । असश्चता । पिता । माता । च । भुवनानि । रक्षतः । सुधृष्टमे इति सुधृष्टमे । वपुष्ये इति । न । रोदसी इति । पिता । यत् । सीम् । अभि । रूपैः । अवासयत् ॥२॥

*सायण*:—उरुव्यचसा प्रभूतव्यचनवत्यौ अतिविस्तीर्णे महिनी अत एव महत्यौ असश्चता असज्जमाने परस्परवियुक्ते इति। पिता पालयित्री द्यौः माता निर्मात्री पृथिवी च इत्युभे भुवनानि भूतजातानि रक्षतः पालयतः। 'द्यौष्पितः पृथिवि मात.' (Rv,vi-51-5) इत्यादिश्रुतेर्मातापितृरूपत्वम्।। किंच सुधृष्टमे अतिशयेन धृष्टे। छान्दसस्तकारलोपः। प्रगल्भे रोदसी द्यावापृथिव्यौ वपुष्ये न वपुषो हिते इव। प्राणिनां पितराविव शरीररक्षके इति। तदेवोपपादयति। यत् यस्मात् सीं सर्वतः पिता पितृस्थानीया द्यौः रूपैः निरूपणसाधनैः प्रशस्तैः प्रकाशैः निरूप्यमाणैर्वृष्ट्यादिभिर्वा अभि अवासयत् अभिवासयति अधितिष्ठति तस्मात् पिता माता च भुवनानि रक्षतः ॥२॥

वेङ्कटमाधवः—बहुवकाशे। महत्यौ। असक्ते द्यावापृथिव्यौ। पितृमातृभूते। भूतानि। रक्षतः। सुधृष्टतमे। वपुषे हिते च भवतः। यस्मात्। एते। सर्वतः। सूर्यः। परिगृह्य। नक्षत्रैरोषधीभिश्च। अभिवासयति ॥२॥

Grif. :—Widely capacions Pair, mighty, that never fail, the Father and the Mother keep all creatures safe :
Two world-halves, the spirited, the beautiful, because the Father hath clothed them in goodly forms.

---

स वह्निः पुत्रः पित्रोः पवित्रवान् पुनाति धीरो भुवनानि मायया।
धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो अस्य दुक्षत ॥३॥

सः। वह्निः। पुत्रः। पित्रोः। पवित्रऽवान्। पुनाति। धीरः। भुवनानि। मायया। धेनुम्। च। पृश्निम्। वृषभम्। सुऽरेतसम्। विश्वाहा। शुक्रम्। पयः। अस्य। धुक्षत ॥३॥

*सायण*:—पित्रोः मातापित्रोः द्यावापृथिव्योः। 'पिता मात्रा' इति पिता शिष्यते। 'उदात्तयण०' इति पितुर्विभक्तिरुदात्ता। पुत्रः पुरुत्राता पुत्रस्थानीयः आदित्य. पवित्रवान् पावनरश्मियुक्तः धीरः धीमान् सः वह्निः फलस्य वोढा धारकः सन् मायया प्रज्ञया स्वकीयया भुवनानि भूतजातानि पुनाति पावयति प्रकाशयतीति। किं च स एव पुत्र. पृश्निं शुक्लवर्णां धेनुं प्रीणयित्रीं भूमिं सुरेतसं शोभनसामर्थ्यं शोभनोदकं वा वृषभं सेक्तारं द्युलोकं च मायया पुनाति प्रकाशयतीति। कदा। विश्वाहा सर्वाण्यहानि सर्वकालीनानि। किंच अस्य द्युलोकस्य। यद्वा। कर्मणि षष्ठी। इति द्युलोकम्. शुक्रं पयः दीप्तं पयः सदृशमुदकं

धुक्षत दोग्धि। दुहेश्छान्दसे लुङि 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः। ईदृशो महानुभावः आदित्यस्तयोः पुत्रः इति द्यावापृथिव्योः स्तुतिः ॥३॥

*वेङ्कटमाधवः*—सः। वोढा। द्यावापृथिव्योः। पुत्रः। पवित्ररश्मियुक्तः। शोधयति। भुवनानि। प्राज्ञः। कर्मणा। पृथिवीम्। च। सस्यानामुत्पादयित्रीम्। उदकस्य सेक्तारम्। शोभनरेतस्कम्। दिवसैः। सर्वदा दीप्तम्। उदकस्य स्वभूतम्। कवयो दुहन्ति। सारमिति ॥३॥

*Grif.* :—*Son of these parents, be the priest with power to cleanse,*
Sage, sanctifies the worlds with his surpassing power.
Thereto for his bright milk he milked through all the
days the party-coloured cow and the prolific Bull.

---

अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशंभुवा।
वि यो ममे रजसी सुक्रतूययाजरेभिः स्कम्भनेभिः समानृचे ॥४॥

अयम्। देवानाम्। अपसाम्। अपःतमः। यः। जजान। रोदसीऽइति।
विश्वऽशंभुवा। वि। यः। ममे। रजसी इति। सुक्रतुऽयया।
अजरेभिः। स्कम्भनेभिः। सम्। आनृचे ॥४॥

*सायणः*—पूर्वं पुत्रमाहात्म्येनैते प्रशस्य इदानीं स्वोत्पादकस्तुत्या प्रशंसति। अयं देवानां मध्ये देवतमः, अपसामपस्तमः। अप इति कर्मनाम। तेन तद्वान् लक्ष्यते। कर्मवतां मध्ये प्रकृष्टकर्मा। अयमित्युक्तं क इत्याह। यः देवः विश्वशंभुवा सर्वप्रकारेण भूतानां सुखस्य भावयित्र्यौ रोदसी द्यावापृथिव्यौ महानुभावे जजान उत्पादितवान्। न केवलमुत्पादनमात्रं अपि तु यः देवः रजसी रञ्जनात्मिके द्यावापृथिव्यौ। रजसी इति द्यावापृथिव्योर्नाम, 'रजसी सदसी' (*Nir, iii–30–5*) इति तन्नामसु पाठात्। उक्तरूपे वि ममे विशेषेण परिच्छिनत्ति। किं स्वोपभोगाय नेत्याह। सुक्रतूयया उक्तेन निमित्तेन इमे द्यावापृथिव्यौ अजरेभिः अजीर्णैः दृढतरैः स्कम्भनेभिः गतिप्रतिबन्धसाधनैः शङ्कुभिः समानृचे सम्यक् सर्वतः पूजितवान् स्थापितवानिति। 'ऋच स्तुतौ'। लिटि रेफसामान्यात् द्विहल्त्वमस्तीति 'तस्मान्नुड्द्विहलः' इत्यभ्यासस्य नुट्। यस्मादेवं तस्मादयमेव देवः अयमेव अपस्तमः इत्येवं महानुभावेन परमेश्वरेणोत्पन्ने इति स्तुतिः ॥४॥

वेङ्कटमाधवः—अयम् । देवानाम् । व्याप्तानाम् । व्याप्ततमः । यः । जजान । द्यावापृथिवी । सर्वस्य सुखस्य भावयित्र्यौ । विममे च । यः । ते । शोभनकर्मेच्छया । स देवः, एते अजरैः । उत्तम्भसाधनै रश्मिभिः । इतरेतरावष्टम्भे करोति ॥४॥

Grif. :—Among the skilful Gods most skilled is he, who made the two world-halves which bring prosperity to all,
Who with great wisdom measured both the regions out, and stablished them with pillars that shall n'er decay.

---

ते नो॑ गृणा॒ने म॑हिनी॒ महि॒ श्रवः॑ क्ष॒त्रं द्या॑वापृथिवी धासथो बृ॒हत् ।
येना॒भि कृ॒ष्टीस्त॒तना॑म वि॒श्वहा॑ प॒नाय्य॒मोजो॑ अ॒स्मे समि॑न्वतम् ॥५॥

ते इति॑ । नः॒ । गृ॒णा॒ने इति॑ । म॒हि॒नी॒ इति॑ । महि॑ । श्रवः॑ । क्ष॒त्रम् ।
द्या॒वा॒पृ॒थि॒वी॒ इति॑ । धा॒स॒थः॒ । बृ॒हत् । येन॑ । अ॒भि । कृ॒ष्टीः ।
त॒तना॑म । वि॒श्वहा॑ । प॒नाय्य॑म् । ओजः॑ । अ॒स्मे इति॑ ।
सम् । इ॒न्व॒त॒म् ॥५॥

सायणः—ते प्रसिद्धे हे द्यावापृथिवी द्यावापृथिव्यौ गृणाने अस्माभिः स्तूयमाने सत्यौ । कर्मणि कर्तृप्रत्ययः । महि महदति प्रभूतं श्रवः सर्वत्र प्रसिद्ध-मन्नं सर्वत्र श्रूयमाणं कीर्तिं वा नः अस्मभ्यं धासथः धत्तम् । दधातेर्लेट्यडागमः । 'सिब्बहुलम्०' इति सिप् । तथा बृहत् अतिप्रभूतं क्षत्रं बलं धासथः । तदेव विशेष्यते । येन अन्नबलेन विश्वहा सर्वेष्वपि अहःसु कृष्टीः पुत्रादिरूपाः प्रजाः अभि ततनाम अभितो विस्तारयाम । तनोतेर्लोटि छान्दसो विकरणस्य श्लुः । 'आडुत्तमस्य०' इति आडागमः । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अभ्यस्तात्द्युदात्तत्वाभावे धातुस्वरः । कृष्टय इति मनुष्यनाम, 'कृष्टयः चर्षणयः' (Nir, ii–3–7) इति तन्नामसु पाठात् । किंच पनाय्यं स्तुत्यम् ओजः शरीरबलम् अस्मे अस्मासु सम्यक् इन्वतं व्याप्नुतं प्रवर्धयतमिति । इन्वतिर्व्याप्तिवचनः, 'इन्वति ननक्ष' (Nir, ii–18–1) इति तन्नामसु पाठात् ॥५॥

वेङ्कटमाधवः—ते । अस्मभ्यम् । स्तूयमाने । महती । महत् । अन्नम् । बलञ्च । महती । युवा । द्यावापृथिवी । धत्तम् । येन । सर्वाः । प्रजाः । अभिभवेम । सर्वदा । तत् । स्तुत्यम् । बलम् । अस्मासु । सम्प्रेरयतम् ॥५॥

Grif. :—Extolled in song, O. Heaven and Earth, bestow on us, ye mighty pair, great glory and high lordly sway,
Whereby we may extend ourselves ever over the folk, and send us strength that shall deserve the praise of men.

---

## 9—II—12.

गृत्समद ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।

**यो जात एव प्रथमो मनस्वान्देवो देवान् क्रतुना पर्यभूषत् ।**
**यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥१॥**

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना ।
परिऽअभूषत् । यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् ।
नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥१॥

*सायणः*—जनासः जनाः हे असुराः, यः जातः एव जायमान एव सन्, प्रथमः देवानां प्रधानभूतः मनस्वान् मनस्विनामग्रगण्यः देवः द्योतमानः सन, क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान् यागदेवान्, पर्यभूषत् रक्ष्यत्वेन पर्यग्रहीत् । 'भूष अलङ्कारे' (धा० i–669) भ्वादिः । लङि रूपम् । यद्वा सर्वानन्यान् देवान् पर्यभूषत् पर्यभवत् अत्यक्रामत् । अस्मिन् पक्षे भवतेर्व्यत्ययेन क्सः । 'श्र्युकः किति' (vii–2–11) इतीट्प्रतिषेधः । यस्य इन्द्रस्य शुष्मात् शरीरात् बलात्, रोदसी द्यावापृथिव्यौ अभ्यसेताम् अबिभीताम् । 'भ्यस भये' (धा० i–619) अनुदात्तेत् । 'भ्यस भयवेपनयोः' इति नैरुक्ताः (नि० iii–21) । अभ्यसेताम् अवेपेतामिति वा । तथा च मन्त्रान्तरम्—'इमे चित्तव'...(ऋ० सं० i–80–11) इति । नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः सः इन्द्रः नाहमिति ॥१॥

*यास्कः*—'यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा । यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इति ऋषेर्दृष्टार्थस्य' 'प्रीतिर्भवत्याख्यानसंयुक्ता' (नि० x–10) इति ॥१॥

*वेङ्कटमाधवः*—यः । जायमानः । एव । प्रथमः । मनस्वी । देवः । देवान् । कर्मणा । पर्यभवत १ पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा इति यास्कः । यस्य । शोषकात् तेजसः । द्यावापृथिव्यावपि । अबिभीताम् । बलस्य च । महत्त्वेन । सः । जनासः । इन्द्रः । नाहमिति ॥१॥

Pet. :—The fierce God who, so soon as he was born their chief, surpassed all the gods, in strength : from before whose breath heaven and earth trembled, He, O men, is Indra.

—

यः पृ॒थि॒वीं व्यथ॑माना॒मदृं॑ह॒द् यः पर्व॑ता॒न् प्रकु॑पिताँ॒ अर॑म्णात् ।
यो अ॒न्तरि॑क्षं वि॒म॒मे वरी॑यो॒ यो द्याम॒स्त॑भ्ना॒त् स ज॑नास॒ इन्द्रः॑ ॥२॥

यः । पृ॒थि॒वीम् । व्यथ॑मानाम् । अदृं॑हत् । यः । पर्व॑तान् । प्रऽकु॑पितान् ।
अर॑म्णात् । यः । अ॒न्तरि॑क्षम् । वि॒ऽम॒मे । वरी॑यः । यः । द्याम् ।
अस्त॑भ्नात् । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥२॥

*सायणः*—हे जनासः जनाः, यः इन्द्रः व्यथमानाम् चलन्तीम् पृथिवीम् अदृंहत् शर्करादिभिर्दृढामकरोत् । 'दृह दृहि वृद्धौ' (धा० i–712–2 ) । यः च प्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान् पर्वतान् अरम्णात् नियमितवान्, स्वे स्वे स्थाने स्थापितवान्, अरम्णात् । 'रमु क्रीडायाम्' (धा० i–8–38) अन्तर्भावितण्यर्थस्य व्यत्ययेन श्नाप्रत्ययः । यः च वरीयः उरुतमम् अन्तरिक्षं विममे निर्ममे, विस्तीर्णं चकारेत्यर्थः । यः च द्यां दिवम् अस्तभ्नात् तस्तम्भ निरुद्धमकरोत । 'स्तम्भु रोधने' इति सौत्रो धातुः सः एव इन्द्रो नाहमिति ॥२॥

*वेङ्कटमाधवः*—यः । पृथिवीम् । चलन्तीम् । अदृंहत् । यश्च । पर्वतान् पक्षवतः । प्रकुपितान् । रम्णातिः संयमनकर्मा, स्वे स्वे स्थाने रमयामासेति । यश्च । अन्तरिक्षम् । विस्तीर्णम् । चकार । यश्चाधः स्थित्वा । दिवम् । धारयति ॥२॥

Pet. :—Who fixed fast the quivering earth, who made the moving mountains rest; who measured out the wide sky, who propped up heaven, He, O men, is Indra.

---

यो ह॒त्वाहि॒मरि॑णात् स॒प्त सिन्धू॒न् यो गा उ॒दाज॑दप॒धा व॒लस्य॑ ।
यो अश्म॑नोर॒न्तर॒ग्निं ज॒जान॑ सं॒वृक्स॒मत्सु॒ स ज॑नास॒ इन्द्रः॑ ॥३॥

यः । ह॒त्वा । अहि॑म् । अरि॑णात् । स॒प्त । सिन्धू॑न् । यः । गाः ।
उ॒त्ऽआज॑त् । अ॒प॒ऽधा । व॒लस्य॑ । यः । अश्म॑नोः । अ॒न्तः ।
अ॒ग्निम् । ज॒जान॑ । स॒म्ऽवृक् । स॒मत्ऽसु॑ । सः ।
ज॒ना॒सः॒ । इन्द्रः॑ ॥३॥

*सायणः*—यः अहिम् मेघं हत्वा, मेघहननं कृत्वा सप्त सर्पणशीलाः सिन्धून् स्यन्दनशीला अपः अरिणात् प्रैरयत् । यद्वा सप्त गङ्गायमुनाद्या मुख्या नदीररिणात् । रीङ् स्रवणे । क्र्यादिः । यः च वलस्य वलनामकस्यासुरस्य अपधा तत्कर्तृकान्निरोधान्निरुद्धाः गाः उदाजत् निरगमयत् । अपधा अपपूर्वाद् दधातेः 'आतश्चोपसर्गे' (iii–3–106) इति भावेऽङ्प्रत्ययः । 'सुपां सुलुक्' (vii–1–39) इति पञ्चम्या आकारः । यः च अश्मनोः अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः । अत्यन्तमृदुरूपयोर्मेघयोः अन्तः मध्ये वैद्युतम् अग्निम् जजान उत्पादयामास । यश्च समत्सु संभक्षयन्ति योद्धॄणामायूंषि इति समदः संग्रामाः । तेषु संवृक् भवति । वृणक्तेर्हिंसार्थस्य क्विपि रूपम् । स इन्द्रो नाहमिति ॥३॥

*वेङ्कटमाधवः*—यश्च । अहिम् । हत्वा । निरगमयत् । सप्त । नदीः । यो वा । पशून् । उदाजत् । अपधा विलान्तरविहिता । वलस्यासुरस्य । यश्च । मेघयोः । मध्ये । अभिघातजं वैद्युतमग्निम् । जनयति । सः । छेत्ता । सङ्ग्रामेषु ॥३॥

Pet. :—Who slew the serpent and let loose the seven streams, who drove out the kine frome the cave of Vala; who begot fire within the two stones, a spoiler in battles, He O men, is Indra.

---

येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।
श्वघ्नीव यो जिगीवाँल्लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥४॥

येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासम् । वर्णम् । अधरम् । गुहा । अकरित्यकः । श्वघ्नीऽइव । यः । जिगीवान् । लक्षम् । आदत् । अर्यः । पुष्टानि । सः । जनासः । इन्द्रः ॥४॥

*सायणः*—येन इन्द्रेण इमा इमानि विश्वा (विश्वानि) च्यवना (च्यवनानि) नश्वराणि भुवनानि कृतानि स्थिरीकृतानि । यः च दासं वर्णं शूद्रादिकम् । यद्वा दासम् उपक्षपयितारम् अधरम् निकृष्टं असुरं गुहा गुहायां गूढस्थाने नरके वा अकः अकार्षीत् करोतेर्लुङि 'मन्त्रे घस' (ii–4–8 ) इत्यादिना च्लेर्लुकि रूपम् । लक्षं लक्ष्यं जिगीवान् 'जि जये' (धा० i–554) । क्वसौ 'सन्लिटोर्जेः' (vii–3–57) इत्यभ्यासादुत्तरस्य कुत्वम् । दीर्घश्छान्दसः । जितवान् यः अर्यः अरेः । षष्ठ्येकवचने छान्दसो यणादेशः । शत्रोः सम्बन्धीनि पुष्टानि समृद्धानि आदत् आदत्ते । तत्र दृष्टान्तः । श्वघ्नीव, श्वभिर्मृगान् हन्तीति श्वघ्नी व्याधः, यथा व्याधो जिघृक्षितं मृगं परिगृह्णाति तद्वत् । (स इन्द्रो नाहमिति) ॥४॥

*वेङ्कटमाधवः*—येन । एतानि सर्वाणि । च्यवनानि । कृतानि । यश्च । असुरम् । वारयितारम् । अधरम् । गुहायाम् । करोति । लुब्धक इव । जिगीवान् । लक्ष्यमाणं शत्रुम् । भक्षयति विनाशयति । पोषणानि स्तोतॄणाम् प्रेरयन्निति ॥४॥

Pet. :—By whom all this world was shaken, who put under us the dark skins; who, like a gambler that has won a lakh, laid hold of the wealth of our foe, He, O men is Indra.

---

यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥५॥

यम् । स्म । पृच्छन्ति । कुह । सः । इति । घोरम् । उत । ईम् । आहुः ।
न । एषः । अस्ति । इति । एनम् । सः अर्यः । पुष्टीः । विजःऽइव ।
आ । मिनाति । श्रत् । अस्मै । धत्त । सः । जनासः । इन्द्रः ॥५॥

*सायणः*—अपश्यन्तो जनाः घोरम् शत्रूणां घातकं यं पृच्छन्ति स्म कुह सेति स इन्द्रः क्कुत्र वर्तत इति । सेति 'सोऽचि लोपे चेत् पादपूरणम्' (vi-1-134) इति सोर्लोपे गुणः । न क्वचिदसौ तिष्ठतीति मन्यमाना जनाः एनम् इन्द्रम् आहुः एषः इन्द्रो नास्ति इति । तथा च मन्त्रः 'नेन्द्रो अस्तीति नेम उ त्व आह' (ऋ० viii-100-3) इति । ईम् इति पूरणः । स इन्द्रो विज इव इवशब्द एवार्थे । उद्वेजक एव सन् अर्यः अरेः सम्बन्धीनि पुष्टीः पोषकाणि गवाश्वादीनि धनानि आ मिनाति सर्वतो हिनस्ति । 'मीञ् हिंसायाम्' (धा० ix-4) । 'मीनातेर्निगमे' (vii-3-81) इति ह्रस्वः । तस्मात्, श्रत् अस्मै इन्द्राय धत्त स इन्द्रोऽस्तीति विश्वासमत्र कुरुत । यद्यप्यसौ विशेषतोऽस्माभिर्न दृश्यते, तथाप्यस्तीति विश्वासं कुरुत । एवं निर्धारणीयमहिमोपेतः इन्द्रो नाहमिति ॥५॥

*वेङ्कटमाधवः*—युद्धे प्रविशन्तो यमिन्द्रम् । पृच्छन्ति । घोरम् । क्व । स इन्द्रः ? इति । अपि च । एनम् । आहुः । न । एषः । अत्र विद्यते । शीघ्रं प्रविश युद्धमिति । स ईश्वरः । शत्रूणाम् । पुष्टीः । हिनस्ति । यथा श्वघ्नी पणिनो हिनस्ति । अस्मै । श्रत् । धत्त इति ॥५॥

Pet.:—Of whom they ask, 'Where is He" in this awful manner, and even say,"He is not"; He brings to nought the wealth of the foe like a gambler's stake, He, O men, is Indra.

---

यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः ॥६॥

यः । रध्रस्य । चोदिता । यः । कृशस्य । यः । ब्रह्मणः । नाधमानस्य । कीरेः । युक्तऽग्राव्णः । यः । अविता । सुऽशिप्रः । सुतऽसोमस्य । सः । जनासः । इन्द्रः ॥६॥

*सायणः*—यो रध्रस्य 'रध हिंसासंराद्धयोः' (धा० iv–85) । समृद्धस्य चोदिता धनानां प्रेरयिता भवति । यः च कृशस्य दरिद्रस्य च, यः च नाधमानस्य । 'नाधृ नाधृ याच्ञोपतापैश्वर्याशीःषु' (धा० i–6–7) याचमानस्य, कीरेः करोतेः कीर्त्तयतेर्वा, स्तोतुः, ब्रह्मणः ब्राह्मणस्य च धनानां प्रेरयिता । यः च सुशिप्रः शोभनहनुः सुशीर्षको वा सन्, युक्तग्राव्णः अभिषवार्थम् उद्यतग्राव्णः सुतसोमस्य अभिषुतसोमस्य यजमानस्य अविता रक्षिता भवति, सः एव इन्द्रः नाहमिति । ब्रह्मशब्दस्य त्वन्नपरत्वे ह्याद्युदात्तता स्यात्, यथा—'ब्रह्म वन्वानो......'(ऋ० सं० iii–8–2) इति । अयन्त्वन्तोदात्तः पठ्यत इति नान्नपरः ॥६॥

*वेङ्कटमाधवः*—यः । समृद्धस्य । कृशस्य च । धनं चोदयति । यो वा । ब्राह्मणस्य । याचमानस्य । स्तोतुः । यश्च । युक्तग्राव्णः सुतसोमस्य । रक्षकः । सुहनुः ॥६॥

Pet. :—Who is the furtherer of the rich, and of the poor, of the priest and of the suppliant singer: who is the helper of the man that brings together the stones, and pours out for him the soma, God of the shining face, He, O men, is Indra.

---

यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः ।
यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः ॥७॥

यस्य । अश्वासः । प्रऽदिशि । यस्य । गावः । यस्य । ग्रामाः । यस्य । विश्वे । रथासः । यः । सूर्यम् । यः । उषसम् । जजान । यः । अपाम् । नेता । सः । जनासः । इन्द्रः ॥७॥

*सायणः*—यस्य सर्वान्तर्यामितया वर्तमानस्य प्रदिशि प्रदेशनेऽनुशासने अश्वासः अश्वा वर्तन्ते । यस्य अनुशासने गावः । यस्य अनुशासने ग्रामाः ।

'ग्रसन्तेऽत्रेति' (उ० i-142) ग्रामा जनपदाः। यस्य आज्ञायां विश्वे सर्वे रथासः रथा वर्तन्ते। यः च वृत्रं हत्वा सूर्यं जजान जनयामास। यः च उषसम्। तथा च मन्त्रः—'जजान…' (ऋ० सं० iii-32-8) इति। यः च मेघभेदनद्वारा अपां नेता प्रेरकः सः इन्द्रः इत्यादि प्रसिद्धम् ॥७॥

वेङ्कटमाधवः—यस्य। प्रदेशेन। स्तोतृणामश्वादयो भवन्ति। शिष्टं स्पष्टमिति ॥७॥

Pet. :—In whose gift are horses, and kine, and villages and all chariots, who begat the sun, who begat the dawn, who is the leader of the waters, He, O men, is Indra.

---

यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः।
समानं चिद्रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः ॥८॥

यम्। क्रन्दसी इति। संयती इति सम्ऽयती। विह्वयेते इति विऽह्वयेते। परे। अवरे। उभयाः। अमित्राः। समानम्। चित्। रथम्। आतस्थिऽवांसा। नाना। हवेते इति। सः। जनासः। इन्द्रः ॥८॥

सायणः—यं क्रन्दसी रोदसी, शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा, संयती परस्परं सङ्गच्छन्त्यौ, यमिन्द्रं विह्वयेते स्वरक्षार्थं विविधमाह्वयतः। परे उत्कृष्टा अवरे अवमाश्च उभयाः उभयविधा अमित्राः शत्रवः यमाह्वयन्ति। समानम् इन्द्ररथसदृशं रथम् आतस्थिवांसा आस्थितौ द्वौ रथिनौ; तमेवेन्द्रं नाना पृथक् पृथक् हवेते आह्वयेते। यद्वा समानमेकरथमारूढाविन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथक् पृथगाहूयेते। तयोरन्यतरः स इन्द्रः नाहमिति ॥८॥

वेङ्कटमाधवः—यम्। संक्रन्दमाने। सेने। मामागच्छ मामागच्छेत्याह्वयेते इति। एतदेवोक्तम् तत्रत्याः। अतस्याश्च। उभये। शत्रव आह्वयन्तः। एकम्। एव। इन्द्ररथम्। आतस्थिवांसौ युयुत्सू राजानौ। नाना। हवेते तमिन्द्रमिति ॥८॥

Pet. :—On whom Heaven and Earth, who are joined, call, and all enemies, high and low; on whom two warriors standing in the same chariot call, each for himself, He, O men, is Indra.

यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते ।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः ॥९॥

यस्मात् । न । ऋते । विऽजयन्ते । जनासः । यम् । युध्यमानाः । अवसे ।
हवन्ते । यः । विश्वस्य । प्रतिऽमानम् । बभूव । यः ।
अच्युतऽच्युत् । सः । जनासः । इन्द्रः ॥९॥

*सायणः*—यस्मात् ऋते जनासः जनाः न विजयन्ते विजयं न प्राप्नुवन्ति । अतो युध्यमानाः युद्धं कुर्वाणा जनाः अवसे स्वरक्षणाय यम् इन्द्रं हवन्ते आह्वयन्ति । यः च विश्वस्य सर्वस्य जगतः प्रतिमानम् प्रतिनिधिः बभूव । यः च अच्युतच्युत् अच्युतानां क्षयरहितानां पर्वतादीनां च्यावयिता, स इन्द्रः इत्यादि प्रसिद्धम् ॥९॥

Pet :—Without whom men do not conquer, on whom the warriors call for help ; who is the image of this whole world, who is the shaker of what never before was shaken, He, O men, is Indra.

यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान ।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः ॥१०॥

यः । शश्वतः । महि । एनः । दधानान् । अमन्यमानान् । शर्वा ।
जघान । यः । शर्धते । न । अनुऽददाति । शृध्याम् । यः ।
दस्योः । हन्ता । सः । जनासः । इन्द्रः ॥१०॥

*सायणः*—यो महि महत् एनः पापं दधानान् शश्वतो बहून् अमन्यमानान् आत्मानमजानत इन्द्रमपूजयतो वा जनान् शर्वा शृणाति शत्रूननेनेति शरुर्वज्रः । तेनायुधेन जघान । हन्तेर्लिटि रूपम् । यः च शर्धते उत्साहं कुर्वते अनात्मज्ञाय जनाय शृध्याम् उत्साहनीयं कर्म नानुददाति न प्रयच्छति । अनुपूर्वः डुदाञ् 'दाने' (धा० iii–9) जौहोत्यादिकः । 'अभ्यस्तानामादिः' (vi–1–189) इत्याद्युदात्तः । 'तिङि चोदात्तवति' (viii–1–71) इति गतेर्निघातः । यः च दस्योः उपक्षपयितुः शत्रोः हन्ता घातकः, स इन्द्र इत्यादि पूर्ववत् ॥१०॥

वेङ्कटमाधवः—यः । बहून् । महत् । पापम् । दधानान् । इन्द्रममन्यमानान् । हिंसकेन । जघान । यश्च । बलमाचरते । बलवत्तमाम् । न । अनुप्रयच्छति शीघ्रं तं हन्ति । यश्च । असुरस्य । हन्तेति ॥१०॥

Pet. :—Who has struck down with his dart, while they least thought of it, many who were doing great evil; who does not forgive the stubbornness of the man that provokes him, who is the slayer of his foe. He, O men, is Indra.

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् ।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥११॥

यः । शम्बरम् । पर्वतेषु । क्षियन्तम् । चत्वारिंश्याम् । शरदि । अनुऽअविन्दत् । ओजायमानम् । यः । अहिम् । जघान । दानुम् । शयानम् । सः । जनासः । इन्द्रः ॥११॥

सायणः—यः पर्वतेषु क्षियन्तम् इन्द्रभिया बहून् संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु निवसन्तं शम्बरम् एतन्नामकं मायाविनमसुरं चत्वारिंश्यां शरदि चत्वारिंशे संवत्सरे अन्वविन्दत् अन्विष्यालभत । लब्ध्वा च व्यनाशयदित्यर्थः किं च यः ओजायमानम् । 'कर्तुः क्यङ् सलोपश्च' 'ओजसोऽप्सरसो नित्यम्' (iii–1–112) इति सकारलोपः । बलमाचरन्तम् अहिम् आहन्तारं दानुं दानवं शयानं शम्बरमसुरं जघान हतवान् सः इन्द्रः नाहमिति ॥११॥

वेङ्कटमाधवः—यः । शम्बरम् असुरम् । इन्द्रभयात् पर्वतेषु निलीय । निवसन्तम् । चत्वारिंश्याम् । शरदि संवत्सरे । यः । बलमाचरन्तम् । अहिम् । हतवान् । दानु च । शयानमिति ॥११॥

Pet. .—Who found out in the *fortieth* autumn Sambara abiding in the hills; who slew that dragon boasting of his might, the sprawling demon. He, O men, is Indra.

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥१२॥

यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिन्धून् । यः । रौहिणम् । अस्फुरत् । वज्रऽबाहुः । द्याम् । आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥१२॥

*सायणः*—यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्या रश्मयो यस्य (सः)। ते च रश्मयो 'वराहव:स्वतपसो विद्युन्महसो धूपयः......'(तै० आ० i-9-4-5) इति तैत्तिरीयारण्यके ह्याम्नातः वृषभः वर्षकः तुविष्मान् बुद्धिमान् बलवान् वा, सप्त सर्पणस्वभावान् सिन्धून् अपः सर्तवे सरणाय अवासृजत् अवसृष्टवान्। यदा गङ्गाद्याः सप्त मुख्या नदीरवासृजत्। यः च वज्रबाहुः सन् द्यां दिवम् आरोहन्त रौहिणम् असुरम् अस्फुरत् जघान। 'स्फुर स्फुरणे' (दुर्गधातुपाठः vi-12) तुदादिः ॥१२॥

*वेङ्कटमाधवः*—यः। सप्तरश्मिः। वर्षिता बलवान्। अवासृजत्। सरणाय। सप्त। नदीश्च। रौहिणमसुरम्। हतवान्। वज्रबाहुः। दिवम्। आरोहन्तम् ॥१२॥

Pet:—who—a strong Bull with strings (to guide him, showing his power)—let loose on their path the seven streams, —who, thunderbolt in hand, smote down Rauhiṇa as he was climbing heaven. He, O men, is Indra.

---

द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥१३॥

द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् । चित् । अस्य । पर्वताः । भयन्ते । यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥१३॥

*सायणः*—अस्मै इन्द्राय, द्यावा पृथिवी। इतरेतरापेक्षया द्विवचनं 'प्रमित्रयोर्वरुणयोः' (ऋ० सं० vii-66-1) इतिवत्। नमेते स्वयमेव प्रह्वीभवतः। णम् प्रह्वत्वे। कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' (iii-1-89) इति यकः प्रतिषेधः। चित् अपि च, अस्य इन्द्रस्य शुष्मात् बलात् पर्वताः भयन्ते बिभ्यति। यः सोमपाः सोमस्य पाता निचितः सर्वैः। यद्वा अन्येभ्योऽपि देवेभ्यो दृढाङ्गः। वज्रबाहुः वज्रसदृशबाहुः। यः च वज्रहस्तः वज्रयुक्तहस्तः स इन्द्र इत्यादि प्रसिद्धम् ॥१३॥

वेङ्कटमाधवः—अस्मै । द्यावापृथिवी । प्रह्वीभवतः । तथा । अस्य । भयात् । पर्वताः । बिभ्यति । यः । सोमपाः । दृढशरीरः । तस्य बाहौ कदाचिद्वज्रः, कदाचिद्धस्त इति ।

Pet:—Heaven even and Earth bow down before him, at his very breath the hills are in fear: known to us as the drinker of our soma, and the wielder of the thunderbolt, He, .. men, is Indra.

---

यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॥१४॥

यः । सुन्वन्तम् । अवति । । यः । पचन्तम् यः । शसन्तम् । यः । शशमानम् । ऊती । यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः । यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥१४॥

सायणः—यः सुन्वन्तम् सोमाभिषवं कुर्वन्तं यजमानम् अवति रक्षति । यः च पुरोडाशादीनि हवींषि पचन्तम् । यः च ऊती ऊतये । 'सुपां सुलुक्' (viii-1-39) इति चतुर्थ्याः पूर्वसवर्णदीर्घः । स्वरक्षार्थं शस्त्राणि शंसन्तम् यः च शशमानम् अवति स्तोत्रं कुर्वाणं रक्षति । ब्रह्म परिवृढं स्तोत्रम् यस्य वर्धनन् वृद्धिकरम् भवति । तथा यस्य सोमः वृद्धिहेतुर्भवति । यस्य च इदम् अस्मदीयं राधः पुरोडाशादिलक्षणमन्नं वृद्धिकरं भवति । स इन्द्र इत्यादि सिद्धम् ॥१४॥

वेङ्कटमाधवः—यः । अभिगमनेन सुन्वन्तम् । रक्षति । पचन् पशुंगानि च पचन्तन् । शस्त्राणि शंसतन् । स्तुतिभिः । अर्चयन्तम् । यस्य च । ब्रह्म । वर्धनं भवति । सोमश्च । यस्य । इदमपि । अन्नं हविश्च ।

Pet:—Who protects with his help both him that pours out the soma and him that brews it, who helps the singer and the sacrificer; to whom our prayer and our soma and these our gifts are for an increase of strength, He, O men, is Indra.

---

यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः ।
वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥१५॥

यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजम् । दर्दर्षि । सः ।
किल । असि । सत्यः । वयम् । ते । इन्द्र । विश्वह ।
प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥१५॥

*सायणः*—इदानीमृषिः साक्षात्कृतमिन्द्रं प्रति प्रब्रूते—हे इन्द्र, यः दुध्रः दुर्धरः सन्, सुन्वते सोमाभिषवं कुर्वते, पुरोडाशादि हवींषि पचते यजमानाय वाजम् अन्नं बलं वा आ दर्दर्षि भृशं प्रापयसि, सः तादृशस्त्वं सत्यः यथार्थभूतः असि । न पुनर्नास्तीति बुद्धियोग्योऽसि । किल इति प्रसिद्धौ । ते तव प्रियासः प्रियाः सुवीरासः कल्याणपुत्रपौत्राः सन्तो वयं विश्वह सर्वेष्वहःसु विदथं स्तोत्रम् आवदेम ब्रूयाम ॥१५॥

*वेङ्कटमाधवः*—यस्त्वम् । दुर्धरः । सुन्वते । पचते च । अन्नम् । आदयसि । स त्वम् । असि । अम''' । वयम् ते । इन्द्र । सदा । प्रियाः । सुपुत्राः । गृहम् । सर्वदा । आभिमुख्येन वदामेति ॥१५॥

Pet. :—O Mighty God, that hast rich gifts for all that worship thee, thou indeed art true : may we, O Indra, at all times be dear to thee, and, with our children about us, praise thy deeds.

---

## II—33

गृत्समद ऋषिः । त्रिष्टुप् छन्दः । रुद्रो देवता ।

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य सन्दृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥१॥

आ । ते । पितः । मरुताम् । सुम्नम् । एतु । मा । नः । सूर्यस्य ।
सम्ऽदृशः । युयोथाः । अभि । नः । वीरः । अर्वति । क्षमेत ।
प्र । जायेमहि । रुद्र । प्रऽजाभिः ॥१॥

*सायणः*—हे मरुतां पितः मरुत्संज्ञकानां देवानामुत्पादक रुद्र । 'परमपि छन्दसि' (ii-1-2-6) इति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात् सर्वानुदात्त-

स्वम्। ते त्वदीयम् अस्मभ्यं दातव्यं सुम्नम् सुखम् (नः अस्मान्) आ एतु आगच्छतु। रुद्रस्य च मरुतां पितृत्वम् 'इदं पित्रे मरुताम्' (i-114-6) इत्यत्राख्यायिकामुखेनाभिहितम्। तथा त्वं नः अस्मान् सूर्यस्य सन्दृशः सन्दर्शनात् मा युयोथाः मा पृथक्कार्षीः। 'यु मिश्रणामिश्रणयोः' (धा० ii-23) लङि छान्दसः शपः श्लुः। 'छन्दस्युभयथा' (iii-4-227) इत्यार्धधातुकत्वेन ङित्त्वाभावाद् गुणः। अर्वति अश्वे। 'भ्रातृव्यो वा अर्वा' (तै० सं० vi-3-8-4) इति श्रुतेः। नः अस्माकं वीरः वीर्यवान् पुत्रादिः अभि क्षमेत अभिभवतु। यद्वा वीरः त्वं नः अस्मान् अभिक्षमेथाः अस्मान् कृतापराधान् अभिक्षमस्व। हे रुद्र, प्रजाभिः पुत्रपौत्रादिभिः प्र जायेमहि प्रभूताः स्याम ॥१॥

वेङ्कटमाधवः—हे मरुतां पितः ते तव सुम्नम् सुखम् अस्मान् आ एतु आगच्छतु। मा नः अस्मान् सूर्यस्य सन्दृशः सन्दर्शनात् युयोथाः पृथक्कुरु। तथा नः अस्माकं वीरः पुत्रः अर्वति अश्वे अभिक्षमेत शक्तो भवतु। हे रुद्र तव प्रसादात् प्रजाभिः वयं प्रजायेमहि ॥१॥

Mm :—O Father of the Maruts, let thy favour come near, and do not deprive us of the sight of the sun; may the hero (Rudra) be gracious to our horse, and may we increase in offspring, O Rudra!

त्वादत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः ।
व्यस्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥२॥

त्वाऽदत्तेभिः । रुद्र । शम्ऽतमेभिः । शतम् । हिमाः । अशीय ।
भेषजेभिः । वि । अस्मत् । द्वेषः । विऽतरम् । वि । अंहः । वि ।
अमीवाः । चातयस्व । विषूचीः ॥२॥

सायणः—हे रुद्र त्वादत्तेभिः त्वया दत्तैः शन्तमेभिः अतिशयेन सुखकरैः भेषजेभिः भेषजैरोषधिभिः शतं हिमाः शतं हेमन्तान् शतं संवत्सरान् अशीय व्याप्नुयाम्। अश्नोतेर्लिङि छान्दसो विकरणस्य लुक्। अपि च अस्मत् अस्मत्तो द्वेषः द्वेष्टॄन् वि चातयस्व विनाशय। तथा अंहः पापं वितरम् अत्यन्तं विचातयस्व। अमीवाः रोगान् विषूचीः विषु नाना अञ्चन्तीः कृत्स्नशरीरव्यापकान् रोगान् वि चातयस्व अस्मत्तः पृथक्कृत्य विनाशय ॥२॥

वेङ्कटमाधवः—त्वादत्तेभिः त्वया दत्तैः, हे रुद्र, शन्तमेभिः सुखतमैः भेषजेभिः शतं हिमाः संवत्सरान् अशीय व्याप्नुयाम्। अस्मत् अस्मत्तः शत्रून् वि चातयस्व

विनाशय दूरं कुरु, अंहः पापं च वितरं दूरं, एवम् अमीवा रोगान् विषूचीः नानादिक्षु गमय इति ॥२॥

Mm:—May I attain to a hundred winters through the most blissful medicines which thou hast given! Put away far from us all hatred, put away anguish, put away sicknesses in all directions!

---

श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥३॥

श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसाम् । वज्रबाहो इति वज्रऽबाहो । पर्षि । नः । पारम् । अंहसः । स्वस्ति । विश्वाः । अभिऽइतीः । रपसः । युयोधि ।

सायणः—हे रुद्र, जातस्य उत्पन्नस्य सर्वस्य जगतो मध्ये श्रिया ऐश्वर्येण श्रेष्ठः प्रशस्यतमः असि भवसि । तथा हे वज्रबाहो आयुधहस्त रुद्र तवसाम् प्रवृद्धानां मध्ये तवस्तमः अतिशयेन प्रवृद्धोऽसि । स त्वं नः अस्मान् अंहसः पापस्य पारम् तीरं स्वस्ति क्षेमेण पर्षि पारय । तथा रपसः पापस्य विश्वाः सर्वाः अभीतीः अभिगमनानि युयोधि पृथक्कुरु । यौतेश्छान्दसः शपः श्लुः । 'वा छन्दसि' (iii–1–88) इत्यपित्त्वस्य विकल्पनात् ङित्त्वाभावे 'अङितश्च' (vi–1–103) इति धिः ।

वेङ्कटमाधवः—श्रेष्ठः जातस्य सर्वस्य भूतजातस्य त्वमेव श्रेष्ठः असि भवसि श्रिया । तवस्तमः वेगवत्तमः तवसाम् वेगवताम् अपि । वज्रबाहो आयुधयुक्तबाहो । स त्वं नः अस्मान् पर्षि पारय अंहसः पापस्य पारम् स्वस्ति अविनाशेन । रपसः पापस्य विश्वाः सर्वाः अभीतीः अभिगतीः युयोधि पृथक्कुरु ॥३॥

Mm:—In beauty thou art the most beautiful of all that exists, O Rudra, the strongest of the strong, thou wielder of the thunderbolt! Carry us happily to the other shore of our anguish, and ward off all assaults of mischief.

---

मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥४॥

मा । त्वा॒ । रु॒द्र॒ । चु॒क्रु॒धा॒म॒ । नमः॑ऽभिः । मा । दुःऽस्तु॑ती । वृ॒ष॒भ॒ ।
मा । सऽहू॑ती । उत् । नः॒ । वी॒रान् । अ॒र्प॒य॒ । भे॒ष॒जेभिः॑ ।
भि॒षक्ऽत॑मम् । त्वा॒ । भि॒षजा॑म् । शृ॒णो॒मि॒ ॥४॥

*सायणः*—हे रुद्र, त्वा त्वां नमोभिः अयथाक्रियमाणैर्नमस्कारैः, हविर्भिर्वा मा चुक्रुधाम मा क्रोधयाम, क्रुद्धं मा कार्ष्म। 'क्रुध कोपे' (धा० iv-81)। अस्माण्ण्यन्ताल्लुङि चङि रूपम्। हे वृषभ कामानां वर्षितः दुष्टुती दुःस्तुत्या अशोभनया स्तुत्या मा चुक्रुधामेत्येव। तथा सहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेन मा क्रोधयाम। श्रेष्ठो हि स्वस्मान्न्यूनेन सहाह्वाने क्रुद्धो भवति। स त्वम् नः अस्माकं वीरान् पुत्रान् भेषजेभिः त्वदीयैर्भेषजैः औषधैः उत् अर्पय उत्कृष्टं संयोजय। हे रुद्र, त्वा त्वां भिषजाम् चिकित्साभिज्ञानां मध्ये भिषक्तमम् अतिशयेन भैषज्यस्य कर्तारं शृणोमि। 'प्रथमो दैव्यो भिषक्' (तै० सं० iv-5-1-2, वा० सं० xvi-5) इति च मन्त्रान्तरेऽप्युक्तम् ॥४॥

*वेङ्कटमाधवः*—हे रुद्र, नमोभिः नमस्कारैः मा त्वा त्वां चुक्रुधाम क्रोधयाम। मा च दुष्टुती दुःस्तोत्रेण, हे वृषभ, मा च सहूती अन्यैर्देवैः सहूत्या 'सोमारुद्रा वि वृहतम्' (ऋ० सं० vi-74-2) इत्यादिकया। नः अस्माकम् वीरान् उदर्पय उत्थापय भेषजेभिः भेषजैः। भिषक्तम त्वा भिषजा शृणोमि वृद्धेभ्य इति ॥४॥

Mm:—Let us not incense thee, O Rudra, by our worship, nor by praise, O hero, and not by divided praise! Raise upon us thy medicines, for I hear thou art the best of all physicians,

---

ह॒वीम॑भि॒र्हव॑ते॒ यो ह॒विर्भि॒रव॒ स्तोमे॑भी रु॒द्रं दि॑षीय ।
ऋ॒दू॒दरः॑ सु॒हवो॒ मा नो॑ अ॒स्यै ब॒भ्रुः सु॒शिप्रो॑ रीरधन्म॒नायै॑ ॥५॥

ह॒वीम॑ऽभिः । हव॑ते । यः । ह॒विःऽभिः॑ । अव॑ । स्तोमे॑भिः । रु॒द्रम् ।
दि॒षी॒य॒ । ऋ॒दू॒दरः॑ । सु॒ऽहवः॑ । मा । नः॒ । अ॒स्यै । ब॒भ्रुः ।
सु॒ऽशिप्रः॑ । री॒र॒ध॒त् । म॒नायै॑ ॥

*सायणः*—यः रुद्रः हविर्भिः चरुपुरोडाशादिसहितैः हवीमभिः आह्वानैः स्तुतिलक्षणैः हवते आहूयते स्तूयते। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। 'बहुलं छन्दसि' (vi-1-34) इति ह्वयतेः सम्प्रसारणम्। तं रुद्रम् स्तोमेभिः स्तोत्रैः

अवदिषीय अवखण्डयामि पृथक्करोमि । अपगतक्रोधं करोमीति यावत् । 'दो अवखण्डने' (धा० iv–40) व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' (vii–4–78) इतीत्त्वम् । ऋदूदरः । 'ऋदूदरो मृदूदरः' (नि० vi–4) इति यास्कः । सुहवः शोभनाह्वानः बभ्रुः भर्ता सर्वस्य बभ्रुवर्णो वा । सुशिप्रः 'शिप्रे हनू नासिके वा' (नि० vi–17) । शोभनशिप्रः । एवंगुणविशिष्टः स रुद्रः अस्यै मनायै हन्मीति मन्यमाना बुद्धिर्मना । तस्यै नः अस्मान् मा रीरधत् मा वशं नैषीत् । 'रध हिंसासंराद्धयोः' (धा० iv–85) । अस्माण्ण्यन्ताल्लुङि चङि रूपम् । 'रध्यतिर्वशगमने' (नि० vi–32) इति यास्कः ॥५॥

*वेङ्कटमाधवः*—हवीमभिः होमयोग्यैः हविर्भिः सह यः हवते आहूयते तं रुद्रं स्तोमैः अवदिषीय । पृथक्करोम्यस्मत् । 'ऋदूदरः सोमः, मृदूदर' इति यास्कः । सुहवः स्वाह्वानः मा नः अस्मान् अस्यै मनायै पुरुषान्मन्यमानायै रीरधत् वशं नयतु । अस्य बुद्धिः सर्वान् मन्यत इति । बभ्रुः बभ्रुवर्णः । सुशिप्रः सुहनुः ॥५॥

Mm. :—He who is invoked by invocations and libations, may I pay off that Rudra with my hymns of praise. Let not him who is kind-hearted, who readily hears our call, the tawny with beautiful cheeks, deliver us to this wrath !

---

उन्मा ममन्द वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानम् ।
घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥६॥

उत् । मा । ममन्द । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा ।
नाधमानम् । घृणिऽइव । छायाम् । अरपाः । अशीय ।
आ । विवासेयम् । रुद्रस्य । सुम्नम् ॥६॥

*सायणः*—वृषभः कामानां वर्षिता मरुत्वान् मरुद्भिः पुत्रैर्युक्तो रुद्रः नाधमानम् याचमानं मा मां त्वक्षीयसा दीप्तेन वयसा अन्नेन उत् ममन्द उत्कर्षेण तर्पयतु । अपि चाहं घृणीव छायाम् यथा सूर्यकिरणसन्तप्तश्छायां प्रविशति एवं रुद्रस्य सुम्नम् सुखम् अरपाः अपापः सन् अशीय व्याप्नुयाम् । तदर्थं तं रुद्रम् आ विवासेयम् परिचरेयम् । विवासतिः परिचरणकर्मा ॥६॥

*वेङ्कटमाधवः*—उत् ममन्द उन्मन्दितवान् वृषभः कामाना वर्षिता मरुत्वान् मरुद्भिः सहितः त्वक्षीयसा दीप्तेन वयसा हविषा नाधमानम् याचमानम् । घृणीव यथा

वर्मगृहीतं भूतं छायाम् अश्नुते एवम् अरपा अहमपि सुम्नं सुखम् अशीय प्राप्नुयाम् ।
आविवासेयम् अस्य रुद्रस्य सुम्नम् सुखम् अधिष्ठानमाविवासः ॥६॥

Mm :—The manly hero with the Maruts has gladdened me, the suppliant, with more vigorous health, May I without mischief find shade, as if from sunshine, may I gain the favour of Rudra!

---

क्व१ स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥७॥

क्व । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः ।
जलाषः । अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा ।
वृषभ । चक्षमीथाः ॥७॥

सायणः—हे रुद्र, ते तव मृळयाकुः सुखयिता स्यः सः हस्तः क्व कुत्र वर्तते । यः हस्तः भेषजः भैषज्यकृत् जलाषः सर्वेषां सुखकरः अस्ति भवति । स हस्तो विद्यत एव । तेन हस्तेन मां रक्षेति भावः । अपि च हे वृषभ कामानां वर्षितः दैव्यस्य देवकृतस्य रपसः पापस्य अपभर्ता अपहर्ता विनाशयिता भूत्वा कृतापराधं मा मां नु क्षिप्रम् अभिचक्षमीथाः अभिक्षमस्व । 'क्षमूष् सहने' (धा० I–438) लिङि छान्दसः शपः श्लुः । 'बहुलं छन्दसि' (vii–3–97) इतीडागमः ॥७॥

वेङ्कटमाधवः—क्व स्यः सः ते रुद्र सुखयिता हस्तः यः अस्ति विद्यते भेषजः भैषज्यकृत् जलाषः सुखकरः । अपभर्ता अपहर्ता रपसः पापस्य दैव्यस्य देवकृतस्य । वृषभ ! तादृश ! त्वं मा माम् नु अत्यन्तम् अभिचक्षमीथाः अभिक्षमस्व ॥७॥

Mm:—O Rudra, where is thy softly striking hand which cures and relieves? Thou, the remover of all heaven-sent mischief, will thou, O Strong hero, bear with me?

---

प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि ।
नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥८॥

प्र । ब्भ्रवे । वृषभाय । श्वितीचे । महः । महीम् । सुऽस्तुतिम् ।
ईरयामि । नमस्य । कल्मलीकिनम् । नमःऽभिः ।
गृणीमसि । त्वेषम् । रुद्रस्य । नाम ॥८॥

*सायणः*—बभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा वृषभाय कामानां वर्षित्रे तद्वत्प्रसह्यकारिणे वा श्वितीचे श्वैत्यमञ्चते। 'श्विता वर्णे' (धा० i–721) औणादिक इन्प्रत्ययः। 'श्वितिमञ्चतीत्यञ्चतेः ऋत्विग्' (vi–2–59) इत्यादिना दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। एवंगुणविशिष्टाय रुद्राय महः महीम् महतोऽपि सुष्टुतिम् शोभनस्तुतिं प्र ईरयामि प्रकर्षेणोच्चारयामि। हे स्तोतः कल्मलीकिनम्। 'ज्वलतो नामधेयम्' (नि० i–17)। ज्वलन्तम्। कलयति अपगमयति मलमिति कल्मलीकं तेजः। तद्वन्तं रुद्रं नमोभिः नमस्कारैः हविर्भिर्वा। नमस्य पूजय। वयं च रुद्रस्य महादेवस्य त्वेषं दीप्तं नाम गृणीमसि गृणीमः संकीर्तयामः। 'गॄ शब्दे' (धा० x–27) क्रैयादिकः। 'इदन्तो मसि' (vii–1–46)। 'प्वादीनां ह्रस्वः' (vii–3–80) ॥८॥

*वेङ्कटमाधवः*—प्रेरयामि बभ्रवे वृषभाय वर्षित्रे श्वितीचे श्वेतिमानमञ्चते महो महीम् महतोऽपि महतीम् सुष्टुतिम् सुस्तुतिम्। नमस्य नमोभिः नमस्कारैः कल्मलीकिनम् दीप्तम्। ज्वलन्नामसु पठितं कल्मलीकिनम् इति (निघ० i–27) उज्ज्वलम्। गृणीमसि उच्चारयामः त्वेषं दीप्तं रुद्रस्य नाम नामधेयम् ॥८॥

Mm.:—I send forth a great, great hymn of praise to the bright tawny bull. Let me reverence the fiery god, with prostrations, we celebrate the flaring name of Rudra.

---

स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः।
ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम् ॥९॥

स्थिरेभिः । अङ्गैः । पुरुऽरूपः । उग्रः । बभ्रुः । शुक्रेभिः । पिपिशे ।
हिरण्यैः । ईशानात् । अस्य । भुवनस्य । भूरेः । न । वै ।
ऊँ इति । योषत् । रुद्रात् । असुर्यम् ॥९॥

*सायणः*—स्थिरेभिः स्थिरदृढैः अङ्गैः अवयवैर्युक्तः पुरुरूपः अष्टमूर्त्यात्मकैः बहुभी रूपैरुपेतः उग्रः उद्गूर्णस्तेजस्वी बभ्रुः भर्ता बभ्रुवर्णो वा रुद्रः शुक्रेभिः दीप्तैः हिरण्यैः हिरण्मयैर्हितरमणीयैर्वालङ्कारैः पिपिशे दीप्यते। 'पिश अवयवे'

(धा० vi-153)। कर्मणि लिट्। ईशानात् ईश्वरात् अस्य भुवनस्य भूतजातस्य भूरेः भर्तुः रुद्रात् असुर्यम्। 'असु क्षेपणे' (धा० iv-101)। 'असेरुन्' (उ० I-41)। असुरः क्षेप्ता। 'तत्र साधुः' (iv-4-98) इति यत्। असुर्यं बलम् न वै उ योषत् नैव पृथग्भवति। यौतेर्लेट्यडागमः। 'सिब्बहुलं लेटि' (iii-1-34) इति सिप्॥९॥

वेङ्कटमाधवः— स्थिरेभिः दृढैः अङ्गैर्युक्तः पुरुरूपः बहुरूपः उग्र उद्गूर्णः बभ्रुः बभ्रुवर्णः। 'शुक्रं शोचतेर्ज्वलतिकर्मणः' (नि० viii-11)। दीप्तैः आभरणैः पिपिशे अङ्गानि संयोजयति। हिरण्यैः हिरण्मयैः। अस्य सर्वस्य भूरेः बहोः भुवनस्य ईशानात् ईश्वरात् अस्मात् न योषत् पृथग्भवतु असुर्यम् असुराणां हन्तृ रूपमिति॥९॥

Mm:—He, the fierce god, with strong limbs, assuming many forms, the tawny Rudra. decked himself with brilliant golden ornaments. From Rudra, who is lord of the wide world, divine power will never depart.

---

अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम्।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति॥१०॥

अर्हन्। बिभर्षि। सायकानि। धन्व। अर्हन्। निष्कम्। यजतम्। विश्वऽरूपम्। अर्हन्। इदम्। दयसे। विश्वम्। अभ्वम्। न। वै। ओजीयः। रुद्र। त्वत्। अस्ति॥१०॥

सायणः—हे रुद्र, त्वम् अर्हन् अर्हो योग्य एव सन् सायकानि शरान् धन्व धनुश्च बिभर्षि धारयसि। तथा अर्हन् एव यजतम् यजनीयं पूजनीयं विश्वरूपं बहुविधरूपयुक्तं निष्कम् हारं बिभर्षि। तथा अर्हन् एव इदम् विश्वम् सर्वम् अभ्वम् महन्नामैतत्। अतिविस्तृतं जगत्। दयसे रक्षसि। 'देङ् रक्षणे' (धा० I-943)। हे रुद्र, त्वत् त्वत्तोऽन्यत् किञ्चित् ओजीयः ओजस्वितरं बलवत्तरं न वै अस्ति न खलु विद्यते। अतस्त्वमेवोक्तव्योपारेषु योग्य इत्यर्थः। ओजः शब्दान्मत्वर्थीयो विनिः। तत् आतिशायनिक इष्ठन्। 'विन्मतोर्लुक्' (v-3-64)। 'टेः' (vi-4-155) इति टिलोपः॥१०॥

वेङ्कटमाधवः—तदर्हस्त्वं सायकानि धन्व धनुश्च बिभर्षि। निष्कम् आभरणं यजतं शोभनं विश्वरूपं नानारूपम्। तथार्हस्त्वं विश्वं सर्वम् इदम् अभ्वम् महत् भुवनं दयसे अनुगृह्णासि। न त्वत् त्वत्तः ओजीयः बलवत्तरम् इह किञ्चित् अस्ति॥१०॥

Mm:—Worthily thou bearest arrows and bow, worthily, O worshipful, the golden variegated chain; worthily thou cuttest every fiend here to pieces, for there is nothing indeed stronger than thou, O Rudra.

---

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥११॥

स्तुहि । श्रुतम् । गर्तऽसदम् । युवानम् । मृगम् । न । भीमम् । उपऽहत्नुम् ।
उग्रम् । मृळ । जरित्रे । रुद्र । स्तवानः । अन्यम् । ते । अस्मत् ।
नि । वपन्तु । सेनाः ॥११॥

*सायणः*—हे स्तोतः श्रुतम् विश्रुतं प्रख्यातं रुद्रं स्तुहि । कीदृशम् ? गर्तसदम् । गर्तो रथः । तत्र सीदन्तं युवानम् नित्यतरुणं मृगम् न भीमम् सिंहमिव भयङ्करम् । उपहत्नुम् उपहन्तारम् शत्रूणाम् उग्र उद्गूर्णं हे रुद्र त्वं स्तवानः अस्माभिः स्तूयमानः सन् जरित्रे स्तोत्रे मह्यं मृळ सुखय । ते त्वदीयाः सेनाः अस्मात् अन्यम् अस्मद्व्यतिरिक्तं पुरुषं नि वपन्तु निघ्नन्तु ॥११॥

*वेङ्कटमाधवः*—हे स्तोतः, स्तुहि श्रुत विश्रुतम् गर्तसदं रथस्थं युवानं मृगम् इव भीमम् उपहन्तारं शत्रूणाम् उग्रम् उद्गूर्णम् । त्वं च रुद्र स्तवानः स्तूयमानः जरित्रे स्तोत्रे मृळा सुखं कुरु । अस्मत् मत्तः अन्यम् ते तव सेना निवपन्तु छिन्दन्तु ॥११॥

Mm. :—Praise him, the famous, sitting in his chariot, the youthful, who [is] fierce and attacks like a terrible wild beast (the lion). And thou hast been praised, O Rudra, be gracious to him, who magnifies thee, and let thy armies mow down others.

---

कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥१२॥

कुमारः । चित् । पितरम् । वन्दमानम् । प्रति । ननाम । रुद्र ।
उपऽयन्तम् । भूरेः । दातारम् । सत्ऽपतिम् । गृणीषे ।
स्तुतः । त्वम् । भेषजा । रासि । अस्मे इति ॥१२॥

सायणः—वन्दमानम् 'आयुष्मान् भव सौम्य' इति स्तुवन्तं पितरम् कुमारः चित् यथा कुमारः। 'चिदित्युपमार्थे' (नि० I—4—13) हे रुद्र, उपयन्तम् अस्मत्समीपे गच्छन्तं त्वां प्रति ननाम प्रतिनतोऽस्मि। अपि च भूरेः बहुनो धनस्य दातारम् सत्पतिम् सतां पालयितारम्। 'पत्यावैश्वर्ये' (VI—2—18) इति पूर्वपदप्रकृतिस्वरत्वम्। हे रुद्र एवम्भूतं त्वां गृणीषे स्तौमि। मिपः 'तिङां तिङो भवन्ति' इति से आदेशः। स्तुतः च त्वम् अस्मे अस्मभ्यं भेषजा भेषजानि रासि देहि ॥१२॥

वेङ्कटमाधवः—कुमारः बालः चित् इव पितरं वन्दमानं प्रह्वीभवन्तम् उपगच्छन्तमहं त्वां प्रतिननाम प्रणतोऽस्मि, तथा गृणीषे स्तौमि च भूरेः बहुनः दातारं सत्पतिं सतां पतिम्, स्तुतश्च त्वम् अस्मे अस्मभ्यं भेषजा भेषजानि रासि प्रयच्छसि ॥१२॥

Mm.:—O Rudra, a boy indeed makes obeisance to his father who comes to greet him : I praise the lord of brave men, the giver of many gifts, and thou, when thou hast been praised, wilt give us thy medicines.

—

या वो॑ भेष॒जा म॑रुतः॒ शुची॑नि॒ या शन्त॑मा वृषणो॒ या म॑यो॒भु।
यानि॒ मनु॒रवृ॑णीता पि॒ता न॒स्ता शं च॒ योश्च॑ रु॒द्रस्य॑ वश्मि ॥१३॥

या। वः। भे॒ष॒जा। म॒रु॒तः॒। शुची॑नि। या। शम्ऽत॑मा। वृ॒ष॒णः॒। या। म॒यः॒ऽभु। यानि॑। मनुः॑। अवृ॑णीत। पि॒ता। नः॒। ता। शम्। च॒। योः। च॒। रु॒द्रस्य॑। व॒श्मि॒ ॥१३॥

सायणः—हे मरुतः रुद्रपुत्राः वः युष्माकं या यानि भेषजा भेषजानि अस्मदारोग्यहेतुभूतान्यौषधानि शुचीनि शुद्धानि निर्मलानि सन्ति। हे वृषणः कामानां वर्षितारो मरुतः या यानि च युष्मदीयानि भेषजानि शन्तमा अतिशयेन सुखकराणि। या यानि च भेषजानि मयोभु मयोभूनि मयसः सुखस्य भावयितॄणि। नः अस्माकं पिता मनुः यानि भेषजानि युष्मदीयानि अवृणीत वृतवान्। ता तानि भेषजानि रुद्रस्य महादेवस्य सम्बन्धि शं च योश्च यच्छमनीयानां रोगाणामुपशमनं यावनीयानां भयानां यद्यावनम् अस्मत्तः पृथक्करणं तदुभयं च वश्मि कामये। 'वश कान्तौ' (धा० II—70), आदादिकः ॥१३॥

वेङ्कटमाधवः—हे मरुतः, या यानि वः भेषजा भेषजानि शुचीनि या यानि शन्तमा सुखतमानि या मयोभु यानि च सर्वेषामस्माकमर्थाय भवद्भ्यो मनुः अवृणीत ता तानि रुद्रस्य शं च यो च वश्मि कामये ॥१३॥

Mm.:—O Maruts, those pure medicines of yours, the most beneficent and delightful, O heroes, those which Manu, our father, chose, those I crave from Rudra, as health and wealth.



परि॑ णो हे॒ती रु॒द्रस्य॑ वृज्याः॒ परि॑ त्वे॒षस्य॑ दुर्म॒तिर्म॒ही गा॑त् ।
अव॑ स्थि॒रा म॒घव॑द्भ्यस्तनुष्व॒ मीढ्व॑स्तो॒काय॒ तन॑याय मृळ ॥१४॥

परि॑ । नः॒ । हे॒तिः । रु॒द्रस्य॑ । वृ॒ज्याः॒ । परि॑ । त्वे॒षस्य॑ । दुः॒ऽम॒तिः ।
म॒ही । गा॒त् । अव॑ । स्थि॒रा । म॒घव॑त्ऽभ्यः । त॒नु॒ष्व॒ । मीढ्वः॑ ।
तो॒काय॑ । तन॑याय । मृ॒ळ॒ ॥१४॥

सायणः—रुद्रस्य महादेवस्य हेतिः आयुधं नः अस्मान् परिवृज्याः परिवर्जयतु । तथा त्वेषस्य दीप्तस्य रुद्रस्य मही महती दुर्मतिः दुःखकारिणी बुद्धिरपि परिगात् अस्मान् वर्जयित्वान्यत्र गच्छतु । 'अपपरी वर्जने' (I–4–88)। हे मीढ्वः सेचनसमर्थ रुद्र स्थिरा स्थिराणि त्वदीयानि धनूंषि मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः अवतनुष्व अवततज्यानि कुरु । तथा तोकाय अस्मत्पुत्राय तनयाय तत्पुत्राय च मृळ सुखं कुरु ॥१४॥

वेङ्कटमाधवः—रुद्रस्य हेतिः आयुधम् नः अस्मान् परिवृज्याः वर्जयतु । तथा त्वेषस्य दीप्तस्य दुर्मतिश्च अस्मान् अपहाय गात् गच्छतु मही महती । किञ्च स्थिरा आततज्यानि स्थिराणि धनूंषि अवतनुष्व हविष्मद्भ्यः अवततज्यानि कुरु । मीढ्वः हे वर्षितः तोकाय पुत्राय तनयाय तत्पुत्राय च मृळ न क्रुद्धो भव ॥१४॥

Mm.:—May the weapon of Rudra avoid us, may the great anger of the flaring one pass us by. Unstring thy strong bows for the sake of our liberal lords, O bounteous Rudra, be gracious to our kith and kin.



ए॒वा ब॑भ्रो वृषभ चेकितान॒ यथा॑ देव॒ न हृ॑णी॒षे न हंसि॑ ।
ह॒व॒न॒श्रुन्नो॑ रुद्रे॒ह बो॑धि बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥१५॥

एव । बभ्रो इति । वृषभ । चेकितान । यथा । देव । न । हृणीषे ।
न । हंसि । हवनऽश्रुत् । नः । रुद्र । इह । बोधि ।
बृहत् । वदेम । विदथे । सुऽवीराः ॥१५॥

सायणः—हे बभ्रो, जगतो भर्तर्बभ्रुवर्ण वा वृषभ कामानां वर्षितः चेकितान सर्वं जानन् हे देव द्योतमान रुद्र यथा येन प्रकारेण न हृणीषे न क्रुध्यसि न च हंसि । 'हृणीङ् लज्जायाम्' (धा० कंड्वादि 33) । अयं क्रुध्यतिकर्मा च । एवं हवनश्रुत् अस्मदीयाह्वानं शृण्वन् नः अस्मान् हे रुद्र इह अस्मिन् देशे बोधि बुध्यस्व । विदथे यज्ञे गृहे वा सुवीरा. शोभनपुत्राः सन्तः बृहत् प्रौढं त्वदीयं स्तोत्रं वदेम उच्चारयाम ॥१५॥

वेङ्कटमाधवः—एवा एवमेव बभ्रो बभ्रुवर्ण वृषभ चेकितान विद्वन् देव यथा न हृणीषे न क्रुध्यसि न हंसि च तथा हवनश्रुत् स्तोत्रस्य श्रोता नः अस्मान् इह अनुकम्प्यमानः बोधि बुध्यस्व विदथे यज्ञे दीयता श्रूयतामिति बृहद्वचनं वदेम सुवीराः सुपुत्राः ॥१५॥

Mm.:—Thus, O tawny and manly god, showing thyself, so as neither to be angry nor to kill, be mindful of our invocations, and, rich in brave sons, we shall magnify thee in the congregation.

---

## II-35

गृत्समद ऋषिः । त्रिष्टुप् छन्दः । अपांनपात् देवता ॥

उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे ।
अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि ॥१॥

उप । ईम् । असृक्षि । वाजऽयुः । वचस्याम् । चनः । दधीत ।
नाद्यः । गिरः । मे । अपाम् । नपात् । आशुऽहेमा ।
कुवित् । सः । सुऽपेशसः । करति । जोषिषत् । हि ॥१॥

सायणः—वाजयुः वाजमन्नमात्मन इच्छन्नहम् ईम् एनां वचस्यां वचसः स्तोत्रस्येच्छाम् उप असृक्षि उपासृजामि उत्पादयामि । अपां नपातं स्तोतुं प्रवृत्तोऽस्मीत्यर्थः । सृजेश्छान्दसो लुङ् । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्त्वाद्गुणाभावः । स; च नाद्यः नदीनां शब्दकारिणीनां मेघस्थानां

अपां सम्बन्धी आशुहेमा आशु शीघ्रं गन्ता। "हि गतौ" इत्यस्मात् "अन्येभ्योऽपि दृश्यन्ते" इति मनिन्। एवंभूतः अपां नपात् अपां पौत्रस्थानीयः। अद्भ्यः ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एषोऽग्निर्जायत इति तत्पौत्रत्वम्। एतत्संज्ञकः देवः गिरः। गृणातीति गीः स्तोता। तस्य मे मम कुवित्। बहुनामैतत्। बहुलं चनः अन्नं दधीत दधातु विदधातु। प्रयच्छत्वित्यर्थः। अपि चास्मिन् सुपेशसः शोभनरूपान् शोभनालंकारान् वा करति करोतु। करोतेर्व्यत्ययेन शप्। "कः करत्करति कृधिकृतेष्वनदितेः" (पा. सू. ८. ३. ५०) इति विसर्जनीयस्य सत्वम्। हि यस्मात् अयं देवः जोषिषत् स्तोत्राणि सेवते तस्मादस्मानेवमनुगृह्णात्वित्यर्थः॥ "जुषीप्रीतिसेवनयोः।" लेट्यडागमः। विकरणः शप्। इडागमश्च। 'हि च' इति निघातप्रतिषेधः ॥१॥

वेङ्कटमाधवः—मध्यमस्थानपठितोऽग्निरपां नपादिति। उप। एनाम्। सृजामि। अन्नमिच्छन्। स्तुतीच्छाम्। हविः। धारयतु। स्तुतीश्च। नादेयः। सोऽयम्। अपाम्। पुत्रः। यजमानेषु बहुः। शीघ्रं गन्ता भवति। सुरूपांश्च। करोति। सेवते। हि स्तोतृनिति ॥१॥

Grif.:—Eager for spoil my flow of speech I utter: may the Floods' child accept my songs with favour.
Will not the rapid Son of waters make them loverly, for he it is who shall enjoy them?

---

इमं स्वस्मै हृद आ सुतष्टं मन्त्रं वोचेम कुविदस्य वेदत्।
अपां नपादसुर्यस्य मह्ना विश्वान्यर्यो भुवना जजान ॥२॥

इमम्। सु। अस्मै। हृदः। आ। सुऽतष्टम्। मन्त्रम्। वोचेम। कुवित्।
अस्य। वेदत्। अपाम्। नपात्। असुर्यस्य। मह्ना। विश्वानि।
अर्यः। भुवना। जजान ॥२॥

सायणः—अस्मै अपांनपात्संज्ञकाय देवाय हृदः हृदयात् सुतष्ट सुष्ठु निर्मितं इमं मन्त्रं सुष्ठु आ आभिमुख्येन वोचेम ब्रवाम। अस्य अस्माभिरुक्तं इमं मन्त्रं कुवित् वेदत् बहुलं जानातु। वेत्तेर्लेट्यडागमः। 'निपातैर्यद्यदिहन्त' इति निघातप्रतिषेधः। किं स्तोत्रमिति चेदुच्यते। अर्यः स्वामी अपा नपात्संज्ञको वैद्युतोऽग्निः असुर्यस्य। असुरः शत्रून् क्षेप्ता। तस्य स्वभूतस्य बलस्य मह्ना

महिम्ना महत्त्वेन विश्वानि सर्वाणि भुवना भुवनानि वृष्ट्युदकानि वृष्ट्युत्पादनेन भूतजातानिवा जजान जनयामास ॥२॥

वेङ्कटमाधवः—इमम्। मन्त्रम्। मदीयाद् हृदयात्। सुष्ठु तष्टम्। वोचेम। अस्मै। बहु। इमं मन्त्रमुच्यमानम्। अयं वेत्ति हि। सोऽयम्। असुरहननिमित्तस्य बलस्य। महत्त्वेन। विश्वानि। भुवनानि। जनयितुम्। स्वामी ॥२॥

Grif.—To him let us address the song, well-fashioned, forth from the heart. Shall he not understand it?
The friendly Son of waters by the greatness of God-head hath produced all things existing.

---

समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति।
तमू शुचिं शुचयो दीदिवांसम् अपां नपातं परि तस्थुरापः॥३॥

सम्। अन्याः। यन्ति। उप। यन्ति। अन्याः। समानम्। ऊर्वम्। नद्यः। पृणन्ति। तम्। ऊँ इति। शुचिम्। शुचयः। दीदिऽवांसम्। अपाम। नपातम्। परि। तस्थुः। आपः ॥३॥

सायणः—अन्या वर्ष्याः आपः सं यन्ति भूम्या संगच्छन्ते। अन्याः च पूर्वं तत्रावस्थिताः उप यन्ति उपगच्छन्ति। ताः सर्वाः आपः समानं संहृ नद्यः नदीभूताः ऊर्वं समुद्रमध्ये वर्तमानं वडवानलं पृणन्ति प्रीणयन्ति। 'पृण प्रीणने' तौदादिकः। तमु तमेव अपां नपातं शुचि निर्मलं दीदिवासम् दीप्यमानम्। दीदितेश्छान्दसो दीप्तिकर्मा। लिटः क्वसुः। 'वस्वेकाजाद्धसमा' इति नियमादिडभावः। 'छन्दसि वेतिवक्तव्यम्' इति वचनात् द्विर्वचनाभावः। एवं भूतं शुचयः शुद्धा आपः परि तस्थु परिवृत्य तिष्ठन्ति। एष हि वैद्युताग्निरूपेण मेघे वर्तमानः अस्मानजीजनदिति बुद्ध्या वडवानलरूपेण वर्तमानं तु पर्युपासते इत्यर्थः। यद्वा अन्या एकधनाख्या आपः संयन्ति चात्वालोत्कर्योर्मध्ये वसतीवरीभिः संगच्छन्ते। अन्या वसतीवर्याख्या आपश्चोपयान्ति उपगच्छन्ति। ऐकमत्यं प्राप्ता भवन्ति। एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्यवृष्टिद्वारा नद्यो भूत्वा ऊर्वं पृणन्ति इत्यादि समानम्। एवं हि "आपो

वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्यामः' (ऐ.ब्रा. २-२०) इत्यादिकं ब्राह्मणं विनियोगश्चानुगृह्यते ॥३॥

*वेङ्कटमाधवः*—काश्चिन्महानद्यः । स्वरूपेण संगच्छन्त उर्वेण । अथान्यथा क्षुद्रनद्यः । महानदीभिः सङ्गताः । उपगच्छन्ति । ताः सर्वाः । नदीनाम साधारणम् । इममपूर्वम् । पूरयन्ति । तम् । एव । शुचिम् । दीप्तम् । निर्मलाः । अपां । नपातम् । परितः । तिष्ठन्ति । अपः ॥३॥

Grif.:—Some floods unite themselves and others join them : the sounding rivers fill one common storehouse.
On every side the bright Floods have encompassed the bright resplendent offspring of the Waters.

---

**तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।**
**स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥४॥**

सम् । अस्मेराः । युवतयः युवानम् । मर्मृज्यमानाः । परि । यन्ति । आपः । सः । शुक्रेभिः । शिक्वऽभिः । रेवत् । अस्मे इति । दीदाय । अनिध्मः । घृतऽनिर्निक् । अप्ऽसु ॥४॥

*सायणः*—सम् अपां नपातमग्निमस्मेरा अस्मयाना दर्परहिताः युवतयो युवानं युवराजमिव मर्मृज्यमानाः अत्यर्थमलंकुर्वाणाः आपः । "मृजू शौचालंकारयोः" । परियन्ति परितोगच्छन्ति प्राप्नुवन्ति । घृतनिर्णिक क्षरणशीलोदकनिर्णेजनः । यद्वा निर्णिगिति रूपनाम । दीप्तरूपः । सः अपां नपादग्निः मेघान्तर्गतासु समुद्रगतासु न मध्ये अनिध्मः इन्धनरहितः एवं सन् अस्मे अस्माकं रेवत् धनयुक्तं अन्नं यथा भवति तथा शुक्रेभिः शुभ्रैः निर्मलैः शिक्वभिः तेजोभिः दीदाय दीप्यते ॥४॥

*वेङ्कटमाधवः*—स्मेरमुखा युवतयो भवन्ति, अताहशाः । काश्चिद् युवतयः । युवानम् । अत्यन्तं परिचरन्त्यः । परितः यन्ति । आपः । सः । दीप्तैः । तेजोभिः । धनयुक्तम् अस्माकम् । दीप्यते काष्ठरहितम् । तेजसाऽऽवृतरूपः । उदकेषु ॥४॥

Gift:—The never-sullen waters, youthful Maidens, carefully decking wait on him, the youthful.
He with bright rays shines forth in splendid beauty, unfed with wood, in waters, oil-enveloped.

---

अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषन्त्यन्नम् ।
कृता इवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् ॥५॥
अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय । देवीः । दिधिषन्ति ।
अन्नम् । कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽसु । सः
पीयूषम् । धयति । पूर्वऽसूनाम् ॥५॥

*सायणः*—नारीः नेत्र्यः तिस्रः देवीः देव्यः इळा सरस्वती भारत्याख्याः अव्यथ्याय अव्यथनाय अस्मै देवाय अपां नपाते अन्नं सोमाख्यं दिधिषन्ति धारयन्ति । 'धिष शब्दे' । जौहोत्यादिकः । व्यत्ययेनान्तादेशः । धातूनामनेकार्थत्वादत्र धारणार्थः । अप्सु उदकेषु कृता इव उप प्रसर्स्रे प्रसरन्ति । 'सृ गतौ' । लिटि 'इरयो रे' इति रे आदेशः । छान्दसो हलादिशेषाभावः । यस्मादेवं तस्मात् पूर्वसूना पूर्वं ब्राह्मणसकाशात् उत्पन्नानामपां पीयूषं सारभूतं सोमाख्य अमृतं सः अपां नपादग्निः धयति पिबति । हि पूरणः ॥५॥

*वेङ्कटमाधवः*—व्यथिर्हिंसाकर्मा अव्यथनीयाय । अस्मै । देवाय । इळा सरस्वती भारती च तिस्रः । धारयन्ति । अन्नम् । नार्यः । जनयित्रीरिव पुत्रे । उपसार् । अप्सु । पीयूषं सारम् । पिबति एव या एनमजयन्निति ॥५॥

Grif.:—To him three Dawns are offering food to feed him, Goddesses to the God whom none may injure.
Within the waters hath he pressed, as hollows, and drinks their milk who now are first made mothers.

---

अश्वस्यात्र जनिमास्य च स्वर्द्रुहो रिषः संपृचः पाहि सूरीन् ।
आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि ॥६॥
अश्वस्य । अत्र । जनिम । अस्य । च । स्वः । द्रुहः । रिषः । सम्ऽपृचः ।
पाहि । सूरीन् । आमासु । पूर्षु । परः । अप्रऽमृष्यम् । न ।
अरातयः । वि । नशन् । न । अनृतानि ॥६॥

*सायण*:—अत्र अपां नपात्संज्ञके देवे अश्वस्य जन्म भवति। अपांनप्त्रधिष्ठितात् समुद्रात् उच्चैःश्रवसो जातत्वात्। किं बहुना। अस्य च स्वः सुष्ठरणीयस्य सर्वस्य जगतो जन्म अस्मिन्नेव भवति। अयं हि मेघमध्ये वर्तमानो वृष्टिद्वारेण सर्वं जगज्जनयति। तादृशोऽपां नपात्त्वं द्रुहः द्रोग्धुः अपःहर्तुं। रिषः हिंसकस्य च। पृचः संपर्कात् सूरीन् स्तोतृनस्मान् पाहि रक्ष। आमासु अपरिपक्वासु पूर्षु पूरयितव्यास्वप्सु परः परस्तात् वर्तमानं अप्रमृष्यं अप्रधृष्यमाणं देवम् अरातयः आदातारः पुरुषाः न वि नशन् न प्राप्नुवन्ति। नशतिर्व्याप्तिकर्मा। लेट्यडागमः। अनृतानि मायाविनो रक्षांसि च न प्राप्नुवन्ति।

वेङ्कटमाधवः—'अप्सु योनिर्वा अश्वः' इति ब्राह्मणम्। अस्मात्। अश्वः। अजायत। स्वरित्युदकनाम अस्योदकस्य। च। अस्मादेव जन्म। स त्वं द्रोग्धुः। विनाशयितुश्च। सम्पर्कात्। स्तोतॄन्। रक्ष। आर्द्रासु। पूरयित्रीषु नदीषु। परोऽयमपां नपात्। अनभिभवनायमुग्रं तेजो विसृजति। नास्मान्। अरातयः। व्याप्नुवन्तु। न च। रक्षांसि।

Grif.:—Here was the horse's birth; his was the sunlight-save thou our princes from the oppressor's onslaught. Him, indestructible, dwelling at a distance in forts unwrought, lies and ill-spirits reach not.

---

स्व आ दमे॑ सु॒दुघा॒ यस्य॑ धे॒नुः स्व॒धां पी॑पाय सु॒भ्वन्न॑मत्ति।
सो अ॒पां नपा॑दू॒र्जय॑न्न॒प्स्व१॒॑न्तर् व॑सु॒देया॑य विध॒ते वि भा॑ति ॥ ७ ॥

स्वे। आ। दमे॑। सु॒ऽदुघा॑। यस्य॑। धे॒नुः। स्व॒धाम्। पी॒पा॒य॒।
सु॒ऽभु। अन्न॑म्। अ॒त्ति॒। सः। अ॒पाम्। नपा॑त्। ऊ॒र्जय॑न्।
अ॒प्ऽसु। अ॒न्तः। व॒सु॒ऽदेया॑य। वि॒ध॒ते। वि। भा॒ति॒ ॥७॥

*सायण*:—यः अपां नपात् स्वे दमे स्वकीये गृहेऽन्तरिक्षलक्षणे आ सीदति। यस्य च धेनुः माध्यमिका वाक् सुदुघा सुखेन दोग्धव्या भवति। सः देवः। स्वधां वृष्ट्युदकं पीपाय वर्धयति। 'प्यायी वृद्धौ'। 'लिड्यङोश्च' इति पीभावः। सुभु सुष्ठु भूतं वृष्टेः सकाशादुत्पन्नं हविर्लक्षणमन्नं अत्ति भक्षयति। सः अपां नपात्संज्ञको देवः ऊर्जयन् बलं कुर्वन् अप्स्वन्तः मेघस्थास्वप्सु मध्ये विधते परिचरते यजमानस्य वसुदेयाय धनदानार्थं वि भाति विशेषेण दीप्यते ॥७॥

वेङ्कटमाधवः—स्वे । गृहे । सुदोहा । यस्य । धेनुर्नदी । स्वधाम् । आप्याययति । स शोभनमन्नम् । अन्नम् । अत्ति । सोऽयम् । अपां नपात् । अप्सु । अन्तः । बलं कुर्वन् । वसुदानाय । परिचरते । दीप्यते ॥७॥

Grif:—He in whose mansion is the teeming Milch-cow, swells the God's nectar and eats noble viands.
The Son of waters, gathering strength in waters, shines for his worshipper, go give him treasures.

---

यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।
वया इदन्या भुवनान्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः ॥ ८ ॥

यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः ।
उर्विया । विऽभाति । वयाः । इत् । अन्या । भुवनानि ।
अस्य । प्र । जायन्ते । वीरुधः । च । प्रऽजाभिः ॥८॥

*सायणः*—यः अपांनपात् ऋतावा । ऋतमित्युदकनाम । ऋतवान् सत्यवान् वा अजस्रः नित्यः एकरूपेण सदा वर्तमानः उर्विया उरुविस्तीर्णः अप्सु मेघस्थासु मध्ये शुचिना शोचकेन दैव्येन देवसम्बन्धिना तेजसा आ समन्तात् विभाति विशेषेण प्रकाशते । अस्य अपांनपातः अन्या अन्यानि भुवनानि सर्वाणि भूतजातानि वया इत् शाखा एव । वीरुधः ओषधयः प्रजाभिः स्वकीयाभिः पुष्पफलादिभिः सह अस्मादेव प्र जायन्ते । च पूरणः ॥८॥

वेङ्कटमाधवः—यः । अप्स्वन्तः । निर्मलेन । देवार्हेण तेजसा । यज्ञवान् । नित्यः । उरुः । विभाति । अस्यापानप्तुः । शाखाः एव । अन्यानि । भूतानि । किं च । अस्य प्रसादाद् वीरुधः । प्रजायमानैः पुष्पफलैः । प्रजायन्त इति । ॥८॥

Grif:—He who in waters with his own pure Godhead shines widely, law-abiding, everlasting—
The other worlds are verily his branches, and plants are born of him with all their offspring.

---

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।
तस्य ज्येष्ठं महिमानं वहन्तीर् हिरण्यवर्णाः परि यन्ति यह्वीः ॥ ९ ॥

अपाम् । नपात् । आ । हि । अस्थात् । उपऽस्थम् । जिह्मानाम् ।
ऊर्ध्वः । विऽद्युतम् । वसानः । तस्य । ज्येष्ठम् । महिमानम् ।
वहन्तीः । हिरण्यऽवर्णाः । परि । यन्ति । यह्वीः ॥९॥

*सायणः*—अपां नपात्संज्ञकोऽग्निः उपस्थम् अपामुपस्थानमन्तरिक्षे आ अस्थात् आस्थितवान् आरूढवान् खलु । किं कुर्वन् । जिह्मानां कुटिलगतीनामपां मध्ये ऊर्ध्वः स्वयमूर्ध्वं ज्वलन् विद्युतं विद्योतमानं मेघं वसानः आच्छादयन् । अन्तरिक्षमास्थाय वर्षणं कृतवान् । तस्य वर्षितुरपां नपातः ज्येष्ठं प्रशस्यतमं महिमानं माहात्म्यं वहन्तीः वहन्त्यः सर्वत्र प्रापयन्त्यः यह्वीः यह्व्यः महत्यः हिरण्यवर्णाः । नदीनामेतत् । हिरण्यवन्निर्मलरूपा नद्यः परि यन्ति परितो गच्छन्ति । अपांनप्त्रा महती वृष्टिरस्माकं प्रवहनायोत्पादिता इति कृतज्ञतया तदीयं माहात्म्यं सर्वत्र प्रकटयन्त्य इव नद्यः प्रवहन्तीत्यर्थः ॥९॥

*वेङ्कटमाधवः*—अपांनपात् । आतिष्ठति । अपामुपस्थम् । तिर्यग्गच्छन्तीनां मध्ये । स्वयमूर्ध्वे । दीप्तिम् । आच्छादयन् । तस्य । प्रशस्यतमम् । तेजः । वहन्त्यः नद्यः परितो । गच्छन्ति । महत्यः ॥९॥

Grif:—The Waters' Son hath risen, and clothed in lightening
ascended up unto the curled cloud's bosom;
And bearing with them his supremest glory the youthful
Ones, gold-coloured, move around him.

---

हिरण्यरूपः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात्परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥१०॥

हिरण्यऽरूपः । सः । हिरण्यऽसंदृक् । अपाम् । नपात् । सः । इत् ।
ऊँ इति । हिरण्यऽवर्णः । हिरण्ययात् । परि । योनेः । निऽसद्य ।
हिरण्यऽदाः । ददति । अन्नम् । अस्मै ॥१०॥

*सायणः*—सः अपां नपात् हिरण्यरूपः, रूप्यते इति रूपं शरीरम् । सुवर्णमयशरीरो वा । तथा हिरण्यसंदृक् । सम्यक् पश्यन्तीति सदृशाइन्द्रियाणि सुवर्णमयेन्द्रियो हितरमणीयेन्द्रियो वा । सेदु स एवापांनपात् हिरण्यवर्णः हिरण्यसदृशकान्तियुक्तः । एवंभूतः सन् हिरण्ययात् सुवर्णमयात् योनेः स्थानात् परि उपरि निषद्य उपविश्य राजते, इति शेषः । अस्मै ईदृग्विधाय अपां नपाते

हिरण्यदाः दक्षिणारूपस्य सुवर्णस्य दातारो यजमानाः अन्नं हविर्लक्षणं ददति प्रयच्छन्ति ॥१०॥

वेङ्कटमाधव—हिरण्याङ्गः । हिरण्यसंदर्शनः । अयम् । तथा । सः । एव । हिरण्यवर्णः । तस्य योनिश्च । हिरण्मयः, तस्मात् आगत्य । इह निषद्य । हिरण्यस्य दाता । अस्मै यजमानाय । अन्नम् । प्रयच्छति ॥१०॥

Grif.:—Golden in form is he, like gold to look on, his colour is like gold, the Son of waters.
When he is seated fresh from golden birth-place there who present their gold give food to feed him.

---

तद॒स्यानी॑कमु॒त चारु॒ नामा॑पी॒च्यं॑ वर्धते॒ नप्तु॑र॒पाम् ।
यमि॒न्धते॑ युव॒तयः॒ समि॒त्था हिर॑ण्यवर्णं घृ॒तमन्न॑मस्य ॥११॥

तत् । अ॒स्य॒ । अनी॑कम् । उ॒त । चारु॑ । नाम॑ । अ॒पी॒च्य॑म् । व॒र्ध॒ते॒ ।
नप्तुः॑ । अ॒पाम् । यम् । इ॒न्धते॑ । यु॒व॒तयः॑ । सम् ।
इ॒त्था । हिर॑ण्यऽवर्णम् । घृ॒तम् । अन्न॑म् । अ॒स्य॒ ॥११॥

*सायणः*—अस्य अपां नप्तुः देवस्य अनीकं रश्मिसमूहरूपं शरीरं चारु शोभनम् । उत अपि च अस्य नाम संज्ञा च चारु शोभनम् । न पातयति न विनाशयति इति नपादिति तद्व्युत्पत्तेः । तदुभयम् । अपीच्यम् । अन्तर्हितनामैतत् । मेघान्तर्हितं सत् वर्धते । युवतयः संगमनस्वभावाः आपः हिरण्यवर्णं हिरण्यसमानतेजसं यम् अपां नपातम् इत्था अमुत्रान्तरिक्षे सम् इन्धते सम्यक् अस्य च देवस्य घृतं क्षरणशीलमुदकं अन्नम् भक्ष्यम् । अविन्धनो ह्यसौ वैद्युतोऽग्निः ॥११॥

*वेङ्कटमाधवः*—तत् । अस्य । तेजः । 'तस्य ह्रस्मयोऽनीकानि' इति ब्राह्मणम् । अपि चास्य शोभनम् । नाम । अन्तर्हितम् । वर्धते । अपां नप्तुः, तद् वेदविद्भ्योऽवगन्तव्यम् । यम् । इत्थम् । नद्यः । समिन्धते । हिरण्यवर्णम् । अस्य । उदकम् । अन्नम् भवति ॥११॥

Grif. :—This the fair name and this the lovely aspect of him the Waters' Son increases in secret.
Whom here the youthful Maids together kindle, his food is sacred oil of golden colour.

---

अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परि वन्द ऋग्भिः ॥१२॥
अस्मै । बहूनाम् । अवमाय । सख्ये । यज्ञैः । विधेम । नमसा ।
हविःऽभिः । सम् । सानु । मार्ज्मि । दिधिषामि । बिल्मैः ।
दधामि । अन्नैः । परि । वन्दे । ऋक्ऽभिः ॥१२॥

*सायणः*—अस्मै पुरोवर्तिने बहूनाम् देवानाम् अवमाय आद्याय सख्ये अस्माभिः समानख्यानाय अपां नपाते यज्ञैः यागसाधनैः हविर्भिः चरुपुरोडाशादिभिः नमसा नमस्कारेण च विधेम परिचरेम। अस्यापांनपातः सानु समुच्छ्रितं प्रदेशं सं मार्ज्मि सम्यक् शोधयामि अलंकरोमि वा। 'मृजू शौचालंकारयोः'। 'चादिलोपे विभाषा' इत्यस्य निघातप्रतिषेधः। दिधिषामि धारयामि च बिल्मैः भासनैः काष्ठैरेनम्। 'धिष शब्दे', अयं धारणार्थोऽपि। जुहोत्यादित्वात् शपः श्लु। मिपो व्यत्ययेनाडागमः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। दधामि धारयामि चैनं गार्हपत्यादिरूपेण स्थितम् अन्नैः हविर्लक्षणैः। तथा ऋग्भिः मन्त्रैः परि वन्दे परितः स्तौमि ॥१२॥

माधवः—अस्मै। बहूनामपि देवानाम् अन्तिकतमाय 'अग्निर्वै देवानामवमः' इति ब्राह्मणम्। सख्ये। यज्ञैः। परिचरेम। नमस्कारेण। हविर्भिश्च। तस्य। निधानार्थे समुच्छ्रितं विषयम्। सम्मार्ज्मि। बिल्मशब्द उपायवचनः, धारयामि च। उपायैः धारयामि च। हविर्भिः परिस्तौमि च। मन्त्रैः ॥१२॥

Grif :—Him, nearest Friend of Many, will we worship with sacrifice and reverence and oblation.
I wake his back to shine, with chips provide him; I offer food and with my songs exalt him.

---

स ईं वृषाजनयत्तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति ।
सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष ॥१३॥
सः । ईम् । वृषा । अजनयत् । तासु । गर्भम् । सः । ईम् । शिशुः ।
धयति । तम् । रिहन्ति । सः । अपाम् । नपात् । अनभिम्लातऽवर्णः ।
अन्यस्यऽइव । इह । तन्वा । विवेष ॥ १३ ॥

*सायणः*—स ईं सोऽयमपांनपात्संज्ञको देवः वृषा सेक्ता भूत्वा तासु मेघस्थास्वप्सु गर्भम् अजनयत् स्वात्मानमेव गर्भरूपेण वर्षणार्थे कृतवानित्यर्थः। गर्भो भूत्वा च स ईं सोऽयं माध्यमिकः वैद्युतोऽग्निस्तासां शिशुः पुत्रः सन् धयति मेघस्थास्ताः पिबति। अविन्धनो ह्यसौ। तं पुत्रस्थानीयमद्भिः आपश्च रिहन्ति लिहन्ति॥ "लिह आस्वादने"। कपिलकादित्वाल्लत्वविकल्पः। सः अयम् अपां नपात् वृष्ट्या सह भूमौ निपतितः अनभिम्लातवर्णः अभितो म्लातो म्लानः क्षीणो वर्णो यस्य तद्विपरीतोऽत्यर्थं दीप्यमानः सन् इह अस्मिन् लोके अन्यस्येव। इव शब्दोऽवधारणे। अन्यस्य पार्थिवस्यैवाग्नेः तन्वा शरीरेण काष्ठेन्धनत्वलक्षणेन विवेष व्याप्तो बभूव। 'विष्लृ व्याप्तौ'॥१३॥

*वेङ्कटमाधवः*—अग्निरेव। एनम्। रेतसो वृषा। अजनयत्। ओषधीषु। गर्भम्। अथौषधिवनस्पतिभ्यो जातः सः। एता ओषधीः। शिशुर्भूत्वा। धयति। ताश्चैनं वत्समिव। जिह्वया लिहन्ति। सोऽयम्। अपाम्। पौत्रः। अम्लानवर्णः। अन्यस्येव। शरीरेण। अस्मिँल्लोके। आविवेष व्याप्तः॥१३॥

Grif. :—The Bull hath laid his own life-germ within them. He sucks them as an infant, and they kiss him.
He, Son of waters, of unfading colour, hath entered here as in another's body.

---

अ॒स्मिन्प॒दे प॑र॒मे त॑स्थि॒वांस॑मध्व॒स्मभि॑र्वि॒श्वहा॒ दीदि॒वांस॑म्।
आपो॒ नप्त्रे॑ घृ॒तमन्नं॒ वह॑न्तीः स्व॒यमत्कैः॒ परि॑ दीयन्ति य॒ह्वीः॥१४॥

अ॒स्मिन्। प॒दे। प॒र॒मे। त॒स्थि॒ऽवांस॑म्। अ॒ध्व॒स्मऽभिः॑। वि॒श्वहा॑। दी॒दि॒वांस॑म्। आपः॑। नप्त्रे॑। घृ॒तम्। अन्न॑म्। वह॑न्तीः। स्व॒यम्। अत्कैः॑। परि॑। दी॒य॒न्ति॒। य॒ह्वीः॥ १४॥

*सायणः*—परमे उत्कृष्टे अस्मिन् पदे अन्तरिक्षलक्षणे स्थाने तस्थिवांसम् स्थितवन्तम् अध्वस्मभिः ध्वंसनरहितैः तेजोभिः विश्वहा सर्वाण्यहानि दीदिवांसम् दीप्यमानमपां नपातं यह्वीः यह्व्यो महत्यः आपः स्वयम् आत्मनैव अत्कैः अतनशीलैः सततं गन्तृभिः स्वकीयैः रूपैः परि दीयन्ति परिगच्छन्ति। दीयतिर्गतिकर्मा। "दीङ् क्षये" व्यत्ययेन परस्मैपदम्। किं कुर्वन्त्यः, नप्त्रे अपां नपाते घृतं क्षरणशीलोदकात्मकम् अन्नं वहन्तीः वहन्त्यः॥१४॥

*वेङ्कटमाधवः*—अस्मिन्। परमे। पदे। तस्थिवांसमन्तरिक्षे। अशुष्यद्भिस्तेजोभिः। सदा। दीप्यमानम्। स्वयमेव। अन्नैः। आपः। परितः। यन्ति। तस्मा अग्नये। अन्नभूतं घृतम्। वहन्त्यः॥१४॥

Grif.:—While here he dwelleth in sublimest station, resplendent with the rays that never perish,
The waters, bearing oil to feed their offspring, flow, Youthful Ones, in wanderings about him.

---

अयाँसमग्ने सुक्षितिं जनायायांसमु मघवद्भ्यः सुवृक्तिम् ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥१५॥

अयांसम् । अग्ने । सुऽक्षितिम् । जनाय । अयांसम् । ऊं इति ।
मघवत्ऽभ्यः । सुऽवृक्तिम् । विश्वम् । तत् । भद्रम् । यत् ।
अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १५ ॥

सायणः—हे अग्ने सुक्षितिं शोभननिवासं त्वां अयांसम् उपागच्छम् । किमर्थम् । जनाय अस्मदीयपुत्रादिजनार्थम् । तथा मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यश्च सुवृक्तिं शोभनावर्जकं तद्विषयं स्तोत्रं अयांसम उपागच्छम् । 'यम उपरमे ।' अतः कारणात् यत् भद्रं सर्वे देवाः अवन्ति रक्षन्ति विश्वं सर्वं तत् भद्रं अस्माकं भवतु । सुवीराः सुपुत्रा वयं विदथे यज्ञे गृहे वा बृहत् प्रौढं स्तोत्रं वदेम उच्चारयाम ॥१५॥

वेङ्कटमाधवः—अग्ने । त्वामहं शोभननिवासम् । जयार्थम् । अयासम् । तथा । अयासमिह । हविष्मद्भ्यः । शोभनस्तुतिमिति ॥१५॥

Grif.:—Agni, I gave good shelter to the people, and to the princes goodly preparation.
Blessed is all that Gods regard with favour. Lord may we speak, with heroes, in assembly.

---

12—II—38

गृत्समद ऋषिः । त्रिष्टुप् छन्दः । सविता देवता ।

उदु ष्य देवः सविता सवाय शश्वत्तमं तदपा वह्निरस्थात् ।
नूनं देवेभ्यो वि हि धाति रत्नमथाभजद्वीतिहोत्रं स्वस्तौ ॥ १ ॥

उत् । ऊं इति । स्यः । देवः । सविता । सवाय । शश्वत्ऽतमम् ।
तत्ऽअपाः । वह्निः । अस्थात् । नूनम् । देवेभ्यः । वि । हि ।
धाति । रत्नम् । अथ । आ । अभजत् । वीतिऽहोत्रम् । स्वस्तौ ॥१॥

सायणः—स्यः स देवो द्योतमानः सविता सवाय लोकानां प्रसवायानुज्ञायै शश्वत्तमं प्रतिदिनमुदस्थात् उत्तिष्ठति । कीदृशः सविता । तदपाः तत्प्रसवकर्मा । 'अपः अप्नः' (नि० ii–1) इति कर्मनामसु पाठात् । वह्निर्वोढा जगताम् । किंच नूनं संप्रति देवेभ्यः स्तोतृभ्यो रत्न धनं वि हि धाति । प्रयच्छति । हीति पूरणे । अथ अपि च वीतिहोत्रं कान्तयज्ञं यजमानं स्वस्तावविनाशे क्षेमेऽभजत् । भागिनं करोतु । यद्यपि स्वस्तिशब्दो विभक्त्यन्तनिर्दिष्टशब्दपरस्तथाप्यपर्यवसानादर्थपरो भवति ॥१॥

वेङ्कटमाधवः—उत्तिष्ठति । अयम् । देव्यः । सविता । सर्वेषां प्रसवाय । नित्यम् । तत्कर्मा । वोढा । नूनम् । स देवेभ्यः । रमणीयं धनम् । विदधाति । तथा । प्रिययज्ञं च यजमानम् । अविनाशे । प्रापयति ।

Ren:—Here's god Savitara : to (give) an impulse (to the universe)—as is his office—
The guide has raised himself, (once again), innumerably once again.
Now he distributes to the gods the jewel,
And for those who offer the oblation he makes them participate in felicity.

---

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति ।
आपश्चिदस्य व्रत आ निमृग्रा अयं चिद्वातो रमते परिज्मन् ॥२॥

विश्वस्य । हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः ।
सिसर्ति । आपः । चित् । अस्य । व्रते । आ । निऽमृग्राः ।
अयम् । चित् । वातः । रमते । परिऽज्मन् ॥२॥

सायणः—देवो द्योतमानः सविता पृथुपाणिर्महत्करो विश्वस्य श्रुष्टये जगतः सुखाय ऊर्ध्वमुद्गतः सन् बाहवा बाहू प्रसिसर्ति प्रसारयति । आपश्चित् आपोऽप्यस्य व्रते प्रसवाख्ये कर्मणि सति । 'व्रतं कर्वरम्' (नि० ii–1) इति तन्नामसु पाठात् । आ स्यन्दन्त इति शेषः । ताश्च निमृग्रा नितरां शोधयित्र्यो गङ्गादिरूपेण

जगत्पावयन्तीत्यर्थः। अयं चिद्वातोऽयमपि वायुः परिज्मन् परितो गते व्याप्तेऽन्तरिक्षे रमते ॥२॥

*वेङ्कटमाधवः*—विश्वस्य। स्वकार्येषु क्षिप्रत्वाय। देवः। ऊर्ध्वम्। प्रसारयति। बाहू। पृथुपाणिः। आपः। चित्। अस्य। कर्मणि। आ। निर्मलानि मृज्यन्ते वृष्टिलक्षणाः। अयम्। वातः। च। परितो गन्तरि सवितरि। रमते ॥२॥

Ren. :—He the *god risen high* : *that all may obey him*,
He stretches far the two arms, (the god) with broad hands,
The waters themseleves are subject to his commands,
The *wind itself stops on his course*.

---

आशुभिश्चिद्यान्वि मुचाति नूनमरीरमदतमानं चिदेतोः।
अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥३॥

आशुऽभिः। चित्। यान्। वि। मुचाति। नूनम्। अरीरमत्।
अतमानम्। चित्। एतोः। अहिऽर्षूणाम्। चित्। नि। अयान्।
अविष्याम्। अनु। व्रतम्। सवितुः। मोकी। आ। अगात् ॥३॥

*सायणः*—यान् गच्छन् सविता आशुभिश्चित् शीघ्रगामिभिरपि रश्मिभिर्वि मुचाति। विमुच्यते। नूनमिति पूरणः। अतमानं चित् सततं गच्छन्तमपि जनम् एतोः गमनात् अरीरमत् उपरमयति। किंच अह्यर्षूणाम् अहिमाहन्तारं शत्रुमर्षन्त्यभिगच्छन्तीत्यह्यर्षवः। तेषामप्यविष्या गमनेच्छां न्ययान् नियच्छति। सवितुः प्रेरकस्य सूर्यस्य व्रतं कमानु पश्चान्मोकी रात्रिः। 'मोकी शोकी' (नि०–I–7) रात्रिनामसु पाठात्। आगात् आगच्छति। सवितुश्चेष्टोपरतौ रात्रिरागच्छतीति यावत् ॥३॥

*वेङ्कटमाधवः*—आशुभिरश्वैः। सम्प्रत्यस्तमनवेलायां यान्। विमुञ्चति। नूनम्। रमयति। गच्छन्तम्। चापि। पथि गमनात्। पुनः शब्दः सर्पाणां तेषाम्। न्ययान् निर्गमनानि करोति। प्राणिनां रक्षणीयां रात्रिं प्रतीति गम्यते। सवितुः। इदमस्तमयकर्म। अनु। रात्रिः। आगतेति ॥३॥

Ren. :—The one who is gone with his fast (horses)—he is going to unharness.
(Savitar) has made the traveller stop his wayward march,
He has restrained the voracity of the snake—hunters.
The night has come of Savitar's commands.

---

पुनः सम॑व्यद्वित॑तं वय॑न्ती मध्या कर्तो॒र्न्य॑धाच्छक्म॒ धीरः॑ ।
उत्संहाया॑स्थाद्वि॒ ऋतूँ॑रदर्धर॒रम॑तिः सवि॒ता दे॒व आगा॑त् ॥४॥

पुनरिति॑ । सम् । अ॒व्य॒त् । विऽत॑तम् । वय॑न्ती । मध्या । कर्तोः॑ । नि ।
अ॒धा॒त् । शक्म॑ । धीरः॑ । उत् । सं॒ऽहाय॑ । अ॒स्था॒त् । वि । ऋ॒तून् ।
अ॒द॒र्धः॒ । अ॒रम॑तिः । स॒वि॒ता । दे॒वः । आ । अ॒गा॒त् ॥४॥

सायणः—वयन्ती वस्त्रं वयन्ती नारीव रात्रिर्विततमालोकं पुनः समव्यत् संवेष्टयते । पुनःशब्दः पूर्वेद्युरप्येवमकार्षीदिति द्योतयति । धीरः प्रज्ञोऽपि सर्वो लोकः कर्तोः क्रियमाणं कर्म । 'कर्तोः कर्तवै.' (नि. ii–1) इति तन्नामसु पाठात् । शक्म कर्तुं शक्यमपि मध्या मध्य उपक्रान्ते कर्मापरिसमाप्येत्यर्थः । न्यधात् निहितवान्, सवितर्युपरत इति शेषः । सर्वो लोकः संहाय शय्यां विहायोदस्थात् । अवशिष्टं कर्म कर्तुं पुनरुत्तिष्ठति । संपूर्वो जहातिः शय्यापरित्यागे वर्तते । तथा च श्रूयते । 'कलिः शयानो......' (ऐ.ब्रा. vii–15) इति सविता सर्वस्य प्रसविता सूर्योऽरमतिरनुपरतिर्देवो द्योतमान आगात् आगच्छति । उदेतीति यावत् । ऋतून् कालविशेषांश्च व्यदर्धः । विदारयति ॥४॥

वेङ्कटमाधवः—पुनश्शब्दो मध्यमवचनः, पुनर्निर्गतः, दक्षिणेऽन्यकाले प्रागेव जरणात्संस्कृत इत्यर्थः । रश्म्यायां विततं वस्त्रम । वयन्ती तन्तुवायस्त्री । मध्ये तत् समव्यत् संवेष्टयति आदाय गृहे निधातुम् । तथा करणःय । मध्ये । कर्म । निधत्ते प्रातः करिष्यामीति । धीरः सोयं सविता । रात्रिं संहाय । प्रातरुत्तिष्ठति । ऋतूंश्च । विदारयति स्वागमनेन विवेचयति मासोऽयमर्धमासोऽयम् । अनुपरमणः । सविता । देवः । आगच्छतीति ॥४॥

Ren:—The weaver-woman has rolled up again what she had stretched.
In the middle of the act, the artisan has put down his work.
(Savitar) has raised himself after his folding up, he has supported,
While separating them, the durations.
The soul ready, the god Savitar is come.

---

नाना॑ौकांसि॒ दुर्यो॒ विश्व॒मायु॒र्वि ति॑ष्ठते प्रभ॒वः शोको॑ अ॒ग्नेः ।
ज्येष्ठं॑ मा॒ता सू॒नवे॑ भा॒गमाधा॒दन्व॑स्य॒ केत॑मिषि॒तं स॑वि॒त्रा ॥५॥

नाना । ओकांसि । दुर्यः । विश्वम् । आयुः । वि । तिष्ठते । प्रऽभवः ।
शोकः । अग्नेः । ज्येष्ठम् । माता । सूनवे । भागम् । आ । अधात् ।
अनु । अस्य । केतम् । इषितम् । सवित्रा ॥५॥

*सायणः*—प्रभवः प्रभूतोऽग्नेः शोकस्तेजो दुर्यो गृहे भवो नानौकांसि यजमानानां पृथग्भूतान्गृहान्वि तिष्ठते अधितिष्ठति । विश्वमायुः सर्वमन्नं चाधितिष्ठति । 'आयुः सूनृत' (नि० ii–7) इत्यन्ननामसु पाठात् । मातोषाः सवित्रान्विषितं प्रेषितमस्य केतं प्रज्ञापकमग्नेर्ज्येष्ठं प्रथममग्निहोत्राख्यं भागं सूनवेऽग्नय आधात् आदधाति ॥५॥

*वेङ्कटमाधवः*—नाना । वासान् । वासरेषु प्रविशन् । सर्वम् । अन्नं हविर्लक्षणं प्रति । वितिष्ठते । अग्नेः । प्रभावतः । शोको दीप्तिः सवितुः, दिनान्तेऽग्निमयं प्रविशतीत्यर्थः । अथ प्रशस्यतमम् । अग्निहोत्राख्यं भागम् । रात्रिः । पुत्रायाग्नये । तस्य । आगमनज्ञानानन्तरम् आदधाति । प्रेषितम् । सवित्रेति ॥५॥

Ren.:—Those who have a roof (attain) their abodes, their
plenitude of life.
The lustre of rising fire spreads itself.
The mother gives her son the best portion,
Following the wish that Savitar has created in her.

---

समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरताममाभूत् ।
शश्वाँ अपो विकृतं हित्व्यागादनु व्रतं सवितुर्दैव्यस्य ॥६॥

सम्ऽआववर्ति । विऽस्थितः । जिगीषुः । विश्वेषाम् । कामः । चरताम् ।
अमा । अभूत् । शश्वान् । अपः । विऽकृतम् । हित्वी । आ ।
अगात् । अनु । व्रतम् । सवितुः । दैव्यस्य ॥६॥

*सायणः*—जिगीषुर्विजयेच्छुर्योद्धा विष्ठितो युद्धार्थं प्रस्थितः समाववर्ति समावर्तयति । विश्वेषां सर्वेषां चरतां जङ्गमानाममा । 'अमा दम' (नि० iii–4) इति गृहनामसु पाठात् । गृहं प्रति कामोऽभूत् भवति । शश्वान् नित्यं कर्मरतोऽपः कर्म विकृतमर्धकृतं हित्वी हित्वागात् । गृहमागच्छति । एतत्सर्वं दैव्यस्य दिवि भवस्य सवितुः प्रेरकस्य सूर्यस्य व्रतमस्तमयाख्यं कर्मानु । जायत इत्यर्थः ॥६॥

*वेङ्कटमाधवः*—समावर्तते । युद्धार्थं प्रस्थितः । योद्धा । तथा सर्वेषामेव । जङ्गमानाम् । अस्तं गच्छति सवितरि गृहं प्रति । कामः । भवति । अमेति गृहनाम ।

कस्मिन्नभूत् काम इति ? तथा तनूकरणस्य कर्ता शश्वान् । तद्वा । शमिकृतम् । कर्म । हित्वा । आगच्छति । दैव्यस्य । सवितुः । अस्तमयम् । प्रति ॥६॥

Ren. :—Those who had gone out for (some) gain, return.
The desire of the travellers carries them homewards
Each leaving his work incomplete,
Has obeyed the orders of the divine Savitar.

---

त्वयां हितमप्यमप्सु भागं धन्वान्वा मृगयसो वि तस्थुः ।
वनानि विभ्यो नकिरस्य तानि व्रता देवस्य सवितुर्मिनन्ति ॥७॥

त्वया । हितम् । अप्यम् । अप्ऽसु । भागम् । धन्व । अनु । आ ।
मृगयसः । वि । तस्थुः । वनानि । विऽभ्यः । नकिः । अस्य । तानि ।
व्रता । देवस्य । सवितुः । मिनन्ति ॥७॥

सायणः—हे सवितस्त्वया अप्स्वन्तरिक्षे । "आपः पृथिवी" (नि०–I–3) इत्यन्तरिक्षनामसु पाठात् । जलाधारे वा । हित निहितमप्यमपां सम्बन्धिनं भागं धन्वानु निर्जलप्रदेशेष्वरण्येषु यथा मृगयसो मृगयमाणा मृगा आ समन्ताद्वि तस्थुः अधितिष्ठन्ति । किंच वनानि वृक्षा विभ्यः पक्षिभ्य. आवासादिरूपेण त्वया भागो दत्त. । अस्य देवस्य सवितुस्तानि तादृशानि व्रता व्रतानि कर्माणि नकिर्मिनन्ति । केऽपि न हिंसन्ति ॥७॥

वेङ्कटमाधवः—त्वया । हितम् । अप्यम् । भागम् । अन्तरिक्षे । निरुदका भूमिम् । अनु मृगयमाणा मनुष्याः । तिष्ठन्ति । तथाऽरण्यानि । पक्षिभ्य आवासाय भवन्ति, उदकवर्धितानि । न केचित् । अस्य । तादृशानि । देवस्य । कर्माणि । हिंसन्ति ॥७॥

Ren. :—Fixed by you is the part of the waters, (of those living) in the waters,
(Fixed) is the firm earth, over which scatter themselves the game—hunters
The trees are for the birds : No one violates.
These ordinances which are thine, O god Savitar.

---

याद्राध्यं१ वरुणो योनिमप्यमनिशितं निमिषि जर्भुराणः ।
विश्वो मार्ताण्डो व्रजमा पशुर्गात्स्थशो जन्मानि सविता व्याकः ॥८॥

यात्ऽराध्यम् । वरुणः । योनिम् । अप्यम् । अनिऽशितम् । निऽमिषि ।
जर्भुराणः । विश्वः । मार्ताण्डः । व्रजम् । आ । पशुः । गात् ।
स्थऽशः । जन्मानि । सविता । वि । आ । अकरित्यकः ॥८॥

*सायणः*—वरुणो याद्राध्यं यातां गच्छतां राध्यं राधनीयमप्यमाप्तुं योग्यमनिशितमतीक्ष्णम् । सुखकरमिति यावत् । योनि स्थानं निमिषि निमिषे सवितुरस्तमये सति विश्रामार्थं प्राणिभ्यः प्रयच्छति । वरुणस्य रात्रेर्निर्वाहकत्वात् । जर्भुराणो भृशं गच्छन् विश्वः सर्वो मार्ताण्डो मृताद्भिन्नादण्डादुत्पद्यमानः पक्ष्यागात् आगच्छति । विश्वः पशुरपि व्रजं गोष्ठमागात् । सविता प्रेरकः स्थशः स्थाने स्थाने जन्मानि जातानि भूतानि व्याकः पृथगकार्षीत् ॥८॥

*वेङ्कटमाधवः*—अन्तर्गच्छतां संराधनीयम् । अप्सु भवम् । वरुणः । स्थानम् अतीक्ष्णम् । रात्रौ मनुष्याणां निमेषणवेलायाम् । जर्भुराणो भवति गन्तार्तस्त्वर्थः । तथा सर्वः । मार्तण्डः पक्षी । पशुश्च । व्रजम् । गच्छति । सर्वाणि जातानि । सविता । स्थाने स्थाने । व्याकरोति स्वं स्वं निलयं प्रत्यागमयति ॥८॥

Ren. :—Varuna (attains) his abode in the waters, which he desires—
The one who moves without respite, while blinking the eyes.
Every bird returns (to his nest, all) cattle to their stalls.
*Savitar has disposed off the species according to their sort.*

---

न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः ।
नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः ॥ ९ ॥

न । यस्य । इन्द्रः । वरुणः । न । मित्रः । व्रतम् । अर्यमा । न ।
मिनन्ति । रुद्रः । न । अरातयः । तम् । इदम् । स्वस्ति ।
हुवे । देवम् । सवितारम् । नमःऽभिः ॥९॥

*सायणः*—यस्य सवितुर्देवस्य व्रतं प्रसवाख्यं कर्मेन्द्रो न मिनाति न हिनस्ति । वरुणश्च न मिनाति मित्रश्चार्यमा च न मिनाति रुद्रश्च न मिनाति ।

अरातयोऽसुराश्च न मिनन्ति। मिनातीति श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसंबध्यते। तं सवितारं सर्वस्य प्रेरकं देवम् द्योतमानमिदमिदानीं नमोभिरन्नरूपैर्हविर्भिः सह। 'नम आयुः' (नि० ii-8) इत्यन्ननामसु पाठात्। स्वस्ति क्षेमाय। हुवे स्तौमि ॥९॥

Ren :—He whose orders are not disobeyed by Indra,
By Varuṇa or Mitra or Aryaman,
Nor by the demons,—that god Savitar,
I call on him with my homage for felicity's sake.

---

भगं धियं वाजयन्तः पुरंधिं नराशंसो ग्नास्पतिर्नो अव्याः।
आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥१०॥

भगम्। धियम्। वाजयन्तः। पुरम्ऽधिम्। नराशंसः। ग्नाःपतिः। नः
अव्याः। आऽअये। वामस्य। सम्ऽगथे। रयीणाम्। प्रियाः।
देवस्य। सवितुः। स्याम ॥१०॥

*सायण*.—भगं भजनीयं धिय ध्यातव्यं पुरंधि पुरस्य धारयितारं बहुप्रज्ञं वा सवितारं 'पुरंधिर्बहुधिः' (नि० iv-3) इति यास्कः। वाजयन्तः वाजिनं बलिनं कुर्वन्तः। विभक्तिव्यत्ययः। नः स्तुवतोऽस्मान् नराशंसो नरैः शंसनीयो ग्नास्पतिर्देवपत्नीनां पतिश्छन्दसां पतिर्वा। तथा श्रूयते। 'छन्दांसि वै ग्ना......' (ऋ० v-46-8) इति च। सविताव्याः अव्यात्। किंच वामस्य धनस्य रयीणां पशूनां च। तथा च श्रूयते। पशवो वै रयिरिति। आये आगमने संगथे संगमने च निमित्ते। देवस्य द्योतमानस्य सवितुः प्रेरकस्य वयं प्रियाः स्याम भवेम ॥१०॥

*वेङ्कटमाधवः*—ध्यातारम्। बहुप्रज्ञम्। भगं देवम्। बलिनं कुर्वतः। अग्निः। त्वष्टा च। अस्मान्। रक्षतु। आभिमुख्येन। गन्तव्ये। धनानाम्। श्रेष्टस्य धनस्य। सम्भजने। स्याम वयम्। देवस्य। सवितुः। प्रिया इति ॥१०॥

Ren. :—Putting at stake Luck, Poetic thought, Inspiration,
—May in this Narāśaṁsa, master of Wives, aid us!—
When gods arrive, when riches come aplenty,
May we become dear to the god Savitar!

---

अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आगात्।
शं यत्स्तोतृभ्य आपये भवात्युरुशंसाय सवितर्जरित्रे ॥११॥

अस्मभ्यम् । तत् । दिवः । अत्ऽभ्यः । पृथिव्याः । त्वया । दत्तम् । काम्यम् ।
राधः । आ । गात् । शम् । यत् । स्तोतृऽभ्यः । आपये । भवाति ।
उरुऽशंसाय । सवितः । जरित्रे ॥११॥

*सायणः*—हे सवितः अस्मभ्यं त्वया दत्तं तत् प्रसिद्धं काम्यं कमनीयं राधो धनं दिवो द्युलोकात् अद्भ्योऽन्तरिक्षलोकात् पृथिव्याः भूमेश्च गात् आगच्छतु । किंच स्तोतृभ्यः स्तोतॄणामापये बन्धवे तद्वंशजाय यद्धनं शं सुखकरं भवाति भवेत् उरुशंसाय बहुस्तुतये जरित्रे स्तोत्रे मह्यम् । 'जरिता कारुः' (नि० iii-17) इति स्तोतृनामसु पाठात् । हे सवितः तत्प्रयच्छ ॥११॥

*वेङ्कटमाधवः*—अस्मभ्यम् । तत् । त्रिभ्यो लोकेभ्यः । त्वया । दत्तम् । कमनीयम् । धनम् । आगच्छतु । किं च तव स्तोतृभ्यः । यजमानाय च । यत् । शम् । भवति । तद्बहुस्तुतये मह्यम् । सवितः । जरित्रे प्रयच्छ ॥११॥

Ren.:—May from the sky, from the waters, from the earth,
Come to us this favour granted by thee, so desired,
Favour which brings luck to singers, to thy friend,
To the bard whose praise carries far O god Savitar!

---

## 13-III-33

चतुर्थीषष्ठ्यष्टमीदशमीनां नदीवाक्यत्वाद् नद्य एव ऋषयः, शिष्टानां विश्वामित्रवाक्यत्वात्स एव ऋषिः । अन्त्या अनुष्टुप्, शिष्टास्त्रिष्टुभः । इन्द्रो देवता ।

**प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।**
**गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥१॥**

प्र । पर्वतानाम् । उशती इति । उपऽस्थात् । अश्वेइवेत्यश्वेऽइव । विसिते इति विऽसिते हासमाने इति । गावाऽइव । शुभ्रे इति । मातरा ।
रिहाणे इति । विऽपाट् । शुतुद्री । पयसा । जवेते इति ॥१॥

*सायणः*—पर्वतानाम् गिरीणां शैलानामुपस्थादुत्सङ्गान्निर्गत्योशती समुद्रगमनं कामयमाने । गमने दृष्टान्तः । अश्वे इव वडवे यथा विषिते मन्दुरातो विमुक्ते हासमाने अन्योन्यं जवेन स्पर्धमाने । यद्वा हृष्यन्त्यावश्वे इव वडवे इव त्वरया गच्छन्त्यौ परस्परं हृष्यन्त्यौ । तथा गावेव शुभ्रे । यथा द्वे गावौ शोभमाने वर्तेते तद्वच्छुभ्रे शोभमाने । किंच मातरा । यथा मातरौ धेनू रिहाणे ।

अन्तर्णीतसन्नर्थौ लिहिः। वत्सं जिह्वया लेढुमिच्छन्त्यौ शीघ्रं गच्छतस्तद्वत्समुद्रं गन्तुं जवाद्गच्छन्त्यौ पयसा संयुक्ते विपाट्। कूलविपाटनात् विपाशनाद्वा विमोचनाद्वा विपाट्। शुतुद्री। शु क्षिप्रं तु तुन्ना तुन्नेव द्रवति गच्छतीति शुतुद्री। एतन्नामके नद्यौ प्रजवेते समुद्रं प्रति शीघ्रं गच्छतः······। उशती 'वश् कान्तौ'। अस्य शतुर्ङित्त्वाद् 'ग्रहिज्यावयी' त्यादिना सम्प्रसारणम्। विषिते। 'षिञ् बन्धने' इत्यस्य कर्मणि निष्ठा। संहितायां 'परिनिविभ्य' सेवसितसयसिवुसहेत्यादिना' (पा॰ viii-3-70) षत्वम्। गतिरनन्तर इति गतेः प्रकृतिस्वरः। ह्रासमाने। ह्रासतिः स्पर्धाकर्मा हसे हसने वा। शानच्। तस्यलसार्वधातुकस्वरे कृते धातुस्वरः। रिहाणे। 'लिह् आस्वादने'। स्वरितेत्त्वादुभयपदी। शानच्।
* अदादित्वाच्छपो लुक्। लकारस्य रेफश्छान्दसः। रेफमवलम्ब्य णत्वम्। चित्त्वादन्तोदात्तः। विपाट्। 'पट गतौ' 'पश बाधनस्पर्शनयोरिति' वा। ण्यन्तावेतौ विपूर्वौ। शकारस्य व्रश्चादिना षत्वम्। शुतुद्री छान्दसी रूपसिद्धिः। जवेते। 'जुङ् गतौ'। सौत्रादिकः। ङित्त्वादात्मनेपदम्। 'आतो ङित' इतीयादेशः। निघातः ॥१॥

यास्कः—पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा। ह्रासमाने। ह्रासतिः स्पर्धायां हर्षमाणे वा। गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते। (नि॰ ix-39) इति।

वेङ्कटमाधवः—यास्कः—'विश्वामित्रः······स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययौ। अनुययुरितरे। स विश्वामित्रो नदीस्तुष्टाव गाधा भवतेति। अपि द्विवत्, अपि बहुवत्' इति। तदेतद् द्विवत् "प्र पर्वतानाम्" इति। उपस्थानाद्गिरीणाम्। कामयमाने। अश्वे इव। विमुक्ते। ह्रासतिः स्पर्धाकर्मा—परस्परं स्पर्धमाने; हर्षकर्मा वा—हर्षमाणे। गावाविव। शोभमाने श्वेतवर्णे। मातृस्थानीये। इतरेतरं संलिहाने विपाट्छुतुद्र्यौ। पयसा। प्रजवेते।

Ren. :—(The Reciter):—

> From the bosom of the mountains rush forward,
> Like two mares, released, who rush into the arena,
> Vipaś and Śutudri with their waters, joyful ones;
> Like two mothers, two cows with clear tint, licking (their calves).

इन्द्रे॑षिते प्रस॒वं भिक्ष॑माणे॒ अच्छा॑ समु॒द्रं र॒थ्ये॑व याथः ।
स॒मा॒रा॒णे ऊ॒र्मिभिः॒ पिन्व॑माने अ॒न्या वा॑म॒न्याम॒प्ये॑ति शुभ्रे ॥२॥

इन्द्रे॑षिते॒ इतीन्द्र॑ऽइषिते । प्र॒ऽस॒वम् । भिक्ष॑माणे॒ इति॑ । अच्छ॑ । स॒मु॒द्रम् । र॒थ्या॑ऽइव । या॒थः । स॒मा॒रा॒णे इति॑ स॒म्ऽआ॒रा॒णे । ऊ॒र्मिऽभिः॑ । पिन्व॑माने॒ इति॑ । अ॒न्या । वा॒म् । अ॒न्याम् । अपि॑ । ए॒ति॒ । शु॒भ्रे॒ इति॑ ॥२॥

सायणः—हे नद्यौ इन्द्रेषिते इन्द्रेण प्रेषिते प्रसवं तस्येन्द्रस्याज्ञां भिक्षमाणे प्रार्थयमाने युवां समुद्रमच्छाभिमुख्येन याथः गच्छथः । तत्र दृष्टान्तः । रथ्येवेति । यथा रथिनौ लक्ष्यं देशमभिगच्छतस्तद्वत् । किं कुर्वत्यौ । समाराणे परस्परं संगच्छन्त्यावूर्मिभिस्तरङ्गैः पिन्वमाने परिसरप्रदेशं तर्पयन्त्यौ शुभ्रे शोभमाने । युवां समुद्रं गच्छथ इति पूर्वेणान्वयः । तथा वां युवयोर्मध्येऽन्यैकान्यामपरां नदीमप्येति । अपिगच्छति । परस्परमैक्यमापद्यत इत्यर्थः । इन्द्रेषिते । इष गतावित्यस्य कर्मणि निष्ठायां तीषसहेत्यादिना इडागमः । तृतीया कर्मणीति पूर्वपदस्वरः । प्रसवम् । षू प्रेरणे इत्यस्माद् । थाथादिस्वरः । भिक्षमाणे । भिक्ष याच्ञायाम् । आत्मनेपदी । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः । रथ्येव । रथस्येमौ तस्येदमित्यर्थे रथाद्यदिति यत्प्रत्ययः । तित्स्वरितः । इवेन विभक्त्यलोपः । याथः । यातेर्लटि थस् । समाराणे । ऋ गतावित्यस्य लिट् । संपूर्वस्यार्तेः समो गम्यृच्छीत्यादिनात्मनेपदत्वात्तस्य कानजादेशः । ऋच्छत्यृतामिति गुणः । पिन्वमाने । पिवि सेचने । भ्वादिः । लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः ॥२॥

वेङ्कटमाधवः—इन्द्रेण प्रेषिते । तस्यानुज्ञाम् । भिक्षमाणे । समुद्रम् । प्रति । रथगामिनौ रथ इव । युवां गच्छथः । संगच्छमाने परस्परम् । ऊर्मिभिः । उदकं पिन्वमाने । युवयोः । अन्या । अन्याम् । अपि । एति । हे शुभ्रे ॥२॥

Ren. :—Impelled by Indra, imploring (the signal of) the race,
You rush towards the ocean like two charioteers.
When you have joined each other, swelling yourselves with waves,
One of you two, O beautiful ones, enters the other.

---

अच्छा॒ सिन्धुं॑ मा॒तृत॑मामयासं॒ विपा॑शमु॒र्वीं सु॒भगा॑मगन्म ।
व॒त्समि॑व मा॒तरा॑ संरिहा॒णे स॑मा॒नं योनि॒मनु॑ सं॒चर॑न्ती ॥३॥

अच्छ । सिन्धुम् । मातृऽतमाम् । अयासम् । विऽपाशम् । उर्वीम् । सुऽभगाम् । अगन्म । वत्सम्ऽइव । मातरा । संरिहाणे इति सम्ऽरिहाणे । समानम् । योनिम् । अनु । संचरन्ती इति सम्ऽचरन्ती ॥३॥

सायण:—हे नद्यौ मातृतमामतिशयेन मातरं सिन्धुं स्रवन्तीं शुतुद्रीं त्वामच्छाभिमुख्येनायासम् विश्वामित्रोऽहं प्राप्तोऽभूवम् । उर्वी महतीं सुभगा सौभाग्यवतीं विपाशं त्वामगन्म वयं प्राप्ताः स्मः । किं कुर्वत्यौ । मातरा मातरौ द्वे धेनू वत्समिव संरिहाणे । अन्तर्णीतसन्नर्थौ लिहिः । जिह्वया लेढुमिच्छन्त्यौ यथा वत्समनुगच्छतस्तद्वत् समानमेकं योनिं स्थानं समुद्रमनु अभिलक्ष्य संचरन्ती सम्यक् चरन्त्यौ । युवामयासमिति पूर्वेणान्वयः । अयासम् या प्रापण इत्यस्य रूपम् । इडभावश्छान्दसः । अगन्म । गमेर्लङि बहुलं छन्दसीति शपो लुक् । म्वोश्चेति मकारस्य नकारः । निघातः । संचरन्ती । चरतिर्गत्यर्थः । तृतीयायुक्तत्वादात्मनेपदाभावः । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः ॥३॥

वेङ्कटमाधवः—अतिशयेन मातृस्थानीयाम् । सिन्धुम् । आभिमुख्येन । यामि । शुतुद्रीं विपाश च । विस्तीर्णाम । कल्याणीम् । अभिगतवन्तः । वत्समिव । मातरौ । समुद्र संलिहाने । समानम । स्थानम्-समुद्रम् । लक्ष्योकृत्य सञ्चरन्त्याविति ॥३॥

Ren —(Viśvāmitra)—

Here I reach the most motherly of the rivers :
We have reached the broad, the gracious Vipaś.
They lick eachother like two mother—(cows) their calves,
While they flow along the common bed.

---

एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति ॥४॥

एना । वयम् । पयसा । पिन्वमानाः । अनु । योनिम् । देवऽकृतम् । चरन्तीः । न । वर्तवे । प्रऽसवः । सर्गऽतक्तः । किम्ऽयुः । विप्रः । नद्यः । जोहवीति ॥४॥

सायण:—एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः । एनेन पयसा पिन्वमानाः संतर्पयन्त्यो देवकृतं देवेनेन्द्रेण कृतं सन्दिष्टं योनिं स्थानं समुद्रमनु लक्षीकृत्य चरन्तीर्गच्छन्त्यो वयमास्महे । द्वयोर्बहुवचनं पूजार्थम् । तासामस्माकं सर्गतक्तः सर्गे गमने प्रवृत्तः प्रसव उद्योगो न वर्तवे निवर्तनाय न भवति । किंयुः किमिच्छन्नसौ विप्रो ब्राह्मणो नद्यो नदीरस्मान् जोहवीति भृशमाह्वयति । एना ।

इदंशब्दस्य तृतीयायाम् एनादेशः। सुपां सुलुगिति तृतीयाया आजादेशः। ऊडिदमिति विभक्तेरुदात्तत्वम्। पिन्वमानाः। पिवि सेचने। देवकृतम्। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः। वर्त्तवे। वृतु वर्तने। तुमर्थे तवेन्प्रत्ययः नित्स्वरः सर्गतक्तः। क्ते चेति पूर्वपदप्रकृतिस्वरः। किंयुः किमिच्छन् क्यचि 'नान्ताव्ययप्रतिषेधः' (पा० iii–8–1) इति छान्दसत्वादत्र प्रतिषेधो न भवतीति क्यच्। क्याच्छन्दसीत्युप्रत्ययः। प्रत्ययस्वरः। नद्यः। छान्दसो यणादेशः। जोहवीति। ह्वयो यङ्लुक्यभ्यस्तस्य चेति संप्रसारणे कृते गुणो यङ्लुकोरित्यभ्यासस्य गुणः। यङो वेतीडागमः। गुणः। निघातः ॥४॥

वेङ्कटमाधवः—नद्यो वदन्ति-अनेन। उदकेन वयम्। त्वरन्त्यः। देवेन कृतम्। स्थानम्-समुद्रम्। अनुचरन्त्यो भवामः। न। निवर्तयितु शक्यः। अस्माकमिन्द्रकृतः प्रसवः। प्रसक-नामन: 'अत्यो नाज्मन्त्सर्गप्रतक्तः' इति मन्त्रः। एव सति किमिच्छन्। अयं ब्राह्मणः। नदीरस्मान्। आह्वयति ॥४॥

Ren. :—(The Rivers'—

Yes, we are fully swollen with waters,
Flowing along the common bed fashioned by gods.
Our torrent, very fast in speed, can not be stopped.
What does the poet wish, therefore, calling aloud the
Rivers ?

---

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥५॥

रमध्वम्। मे। वचसे। सोम्याय। ऋतऽवरीः। उप। मुहूर्तम्।
एवैः। प्र। सिन्धुम्। अच्छ। बृहती। मनीषा। अवस्युः।
अह्वे। कुशिकस्य। सूनुः ॥५॥

सायणः—विश्वामित्रो नदीः प्रति ब्रूते। ऋतावरीः ऋतमुदकम् तद्वत्यो हे नद्यो यूयं मे विश्वामित्रस्य मम सोम्याय। उत्तीर्याहं सोमं संपादयामीत्येवं सोमसंपादिने। वचसे तदर्थमेवैः। पञ्चम्यर्थे तृतीया। शीघ्रगमनेभ्यो मुहूर्तं मुहूर्तमात्रमुपरमध्वम्। उपपूर्वो रमिरुपसंहारे वर्तते क्षणमात्रं शीघ्रगमनादुपरता भवत। सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते। कुशिकस्य राजर्षेः सूनुर्विश्वामित्रोऽहं बृहती महत्या मनीषा मनीषया स्तुत्यावस्युरात्मनो रक्षणमिच्छन् सन् सिन्धुम् शुतुद्रीं त्वामच्छाभिमुख्येन प्राह्वे। प्रकर्षेणाह्वयामि। रमध्वम्। रमु उपरमे।

'उपपूर्वाद्रमतेर्विभाषाकमकात्' (पा० i-3-85) इत्यात्मनेपदम् । ऋतावरीः । ऋतशब्दान्मत्वर्थे छन्दसीवनिपाविति वनिप् । वनो र चेति ङीप् रेफश्चान्तादेशः । वा छन्दसीति सवर्णदीर्घः । आमन्त्रितस्य पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । एवैः । इण गतौ । इणशीङ्भ्यां वन् । आर्धधातुकलक्षणो गुणः । निस्वर. । बृहती मनीषा । उभयत्र तृतीयायाः पूर्वसवर्णदीर्घः । अवस्युः । अवो रक्षणमिच्छन् । सुप आत्मनः क्यच् । नः क्य इति नकारान्तस्य पदसंज्ञाया नियमितत्वादत्र सकारस्य रुत्वं भवति । क्याच्छन्दसीत्युप्रत्ययः । अह्वे । ह्वयतेर्लुङि सिच 'आत्मनेपदेष्वन्यतरस्याम्' (पा० iii-1-58) इत्याङादेशः । गुणः । निघातः ॥५॥

*यास्कः*—उपरमध्वं मे वचसे सोम्याय सोमसम्पादिने । ऋतावरी-र्ऋतवत्यः । ऋतमित्युदकनाम प्रत्यृतं भवति । मुहूर्तमेवैरयनैरवनैर्वा । प्राभिह्वयामि । सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः । 'कुशिको राजा बभूव इति' (नि० ii-25) ॥५॥

*वेङ्कटमाधवः*—यज्ञार्थमसौ गच्छति, तदर्थं च नदीरनुधावति, यास्कः—उपरमध्वम् । मे । वचसे । सोम्याय सोमसम्पादिने । ऋतावरीर्ऋतवत्यः, ऋतमित्युदकनाम प्रत्यृतं भवति । मुहूर्तम् । एवैरयनैरवनैर्वा । मुहूर्तः—मुहुर्ऋतुः, ऋतुरर्तेर्गतिकर्मणः, मुहुर्मूल्ह इव कालो यावदभीक्ष्णं चेति । प्राभिह्वयामि । सिन्धुम् । बृहत्या महत्या । मनीषया मनस इष्टया स्तुत्या प्रज्ञया वा । अवनाय । कुशिकस्य । सूनुः इति ॥५॥

Ren. :—(Viśvāmitra):—

Stop an instant in your course,
At (the sound of my) speech (sweet like) the soma, O you
rite-observers !
A great thought has approached the River :
It is I, the son of Kuśika, who has called for help.

---

इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑ह॒न्वृ॒त्रं प॑रि॒धिं न॒दीना॑म् ।
दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥६॥

इन्द्रः॑ । अ॒स्मान् । अ॒र॒द॒त् । वज्र॑ऽबाहुः । अप॑ । अ॒ह॒न् । वृ॒त्रम् । प॒रि॒ऽधिम् । न॒दीना॑म् । दे॒वः । अ॒न॒य॒त् । स॒वि॒ता । सु॒ऽपा॒णिः । तस्य॑ । व॒यम् । प्र॒ऽस॒वे । या॒मः॒ । उ॒र्वीः ॥६॥

*सायणः*—नद्यः प्रत्यूचुः । हे विश्वामित्र । वज्रबाहुः वज्रयुक्तो बाहुर्यस्यासौ वज्रबाहुः तादृशो बलवानिन्द्रो नदीरस्मानरदत् । रदतिः खनतिकर्मा । अखनत् । कथमखनत् । उच्यते । नदीनां शब्दकारिणीनामपां परिधिं परितो निहितम् । उदकमन्तः कृत्वा परितो वर्तमानमित्यर्थः तादृशं वृत्रम् । वृणोत्याकाशमिति वृत्रो मेघः । तं मेघमपाहन् जघान । तस्मिन् हत आपः पतिताः ताभिर्गच्छन्तीभिर्वयं खाताः । एवं मेघहननद्वारेणाखनत् । न केवलमखनत्, किं तर्हि सविता सर्वस्य जगतः प्रेरकः सुपाणिः शोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात्तादृशो देवो द्योतमान इन्द्रोऽस्माननयत् । मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूरयत् । तस्य तादृशसामर्थ्योपेतस्येन्द्रस्य प्रसवेऽभ्यनुज्ञायां वर्तमाना उर्वीरुदकैः प्रभूता वयं यामः गच्छामः । न तव वचनादुपरमामहे । '''अरदत् रदतेर्लङि रूपम् । वज्रबाहुः । बहुव्रीहौ पूर्वपदस्वरः । अहन् । हन्तेर्लङि रूपम् । निघातः । परिधिम् । डुधाञ् धारणपोषणयोरित्यस्मात्कर्मण्युपसर्गे घोः किरिति किप्रत्ययः । आतो लोपः । कृदुत्तरपदस्वरः । अनयत् । नयतेर्लङि रूपम् । सुपाणिः । पण व्यवहारे स्तुतौ च । 'अशिपणाय्यो रुडायलुकौ च' (उ० iv–135) इतीण् । आयलुक् । बहुव्रीहौ नञ्सुभ्यामिति स्वरः । प्रसवे । पू प्रेरणे । ऋदोरबिति भावेऽप्प्रत्ययः । थाथाघञ्क्तेत्युत्तरपदान्तोदात्तत्वम् । यामः । या प्रापण इत्यस्य लटि रूपम् । निघातः । उर्वीः उरुशब्दाद्वोतो गुणवचनादिति ङीप् । वा छन्दसि इति सवर्णदीर्घः । प्रत्ययस्वरः ॥६॥

*यास्कः*—इन्द्रो अस्मानरदद्वज्रबाहू रदतिः खनतिकर्मापाहन् वृत्रं परिधिं नदीनामिति व्याख्यातम् । देवोऽनयत्सविता सुपाणिः कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः । प्रगृह्य पाणौ देवान्पूजयन्ति । तस्य वयं प्रसवे याम उर्वीरुर्व्यः इति (नि० ii–26) ॥६॥

*वेङ्कटमाधवः*—'नद्यः प्रत्यूचुः'''इन्द्रः । अस्मान् । अरदत् । वज्रबाहुः, रदतिः खनतिकर्मा' । अपहतवान् । वृत्रासुरम् । परिधानम् । नदीनाम् । अयास्मान् देवः । अनयत् । सविता । कल्याणपाणिः । तस्य । वयम् । सवितुः प्रसवे । यामः । आच्छादयित्र्यो महत्यो वेति ॥६॥

Ren. : (The Rivers) :—

Indra, the wielder of the bolt, has dug the bed for us,
He has pushed back Vṛtra who had surrounded the rivers.
The god Savitar, of beautiful hands, has led us :
It is at his impulsion that we rush afar.

प्रवाच्यं शश्वधा वीर्यं१ तदिन्द्रस्य कर्म यदहिं विवृश्चत् ।
वि वज्रेण परिषदो जघानायन्नापोऽयनमिच्छमानाः ॥७॥

प्रऽवाच्यम् । शश्वधा । वीर्यम् । तत् । इन्द्रस्य । कर्म । यत् । अहिम् ।
विऽवृश्चत् । वि । वज्रेण । परिऽसदः । जघान । आयन् । आपः ।
अयनम् । इच्छमानाः ॥७॥

सायणः—योऽयमिन्द्रोऽहिं मेघं विवृश्चत् उदकप्रेरणाय जघानेति यत्कर्मच्छेदनरूपं तदिदं तस्येन्द्राय वीर्यं सामर्थ्यं शश्वधा सर्वदा प्रवाच्यम् । प्रकर्षेण वचनीयम् । तथा स इन्द्रः परिषदः परितः सीदत आसीनान् प्रतिबन्धकारिणोऽसुरान् वज्रेण विजघान । अथायन स्थानमिच्छमाना इच्छन्त्य आप आयन् यान्ति । प्रवाच्यम् वच् परिभाषणे इत्यस्मादृहलोर्ण्यदिति ण्यत् । णित्त्वादुपधावृद्धिः । 'वचोऽशब्दसंज्ञायाम्' (पा०vii-3-67) इति कुत्वाभावः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा वाचयतेरचो यत् । यतोऽनाव इति स्वरः । शश्वधा । शश्वच्छब्दात्सर्वार्थे धाप्रत्ययस्तकारलोपश्च द्रष्टव्यः । विवृश्चत् । ओव्रश्चू छेदने । तुदादिः । लङि ग्रहिज्यावयीत्यादिना संप्रसारणम् । सह सुपेत्यत्र सहेति योगविभागात्समासः । समासस्वरः । परिषदः । क्विप् । संहितायां सदिरप्रतेरिति षत्वम् । जघान । हन्तेर्लिटि णलि रूपम् । निघातः । आयन्: अय गतावित्यस्य लङि रूपम् । पादादित्वादनिघातः । इच्छमानाः । इषु इच्छायामित्यस्माद्व्यत्येन शानच् । तस्य लसार्वधातुकस्वरे कृते प्रत्ययस्वरः ॥७॥

वेङ्कटमाधवः—ऋषिवचनम्, छान्दसो धाप्रत्ययः, प्रकर्षेण वाच्यम् । सर्वधा । वीर्यम् । तत् । किं तत् । इत्याह-इन्द्रस्य । कर्म । यत । अहिम् । विवृश्चत् । विजघान च । वज्रेण । परितः सीदतोऽनुचरानहेः । अथागच्छन् । आपः । स्थानम्-समुद्रम् । इच्छमानाः ॥७॥

Ren :—(Viśvamitra) :—

> Yes, this feat should ever be proclaimed—
> Indra's work–when he dismembered the Dragon,
> That with his bolt he destroyed the barriers,
> That the waters rushed forward, seeking an outlet.

---

एतद्वचो जरितर्मापि मृष्ठा आ यत्ते घोषानुत्तरा युगानि ।
उक्थेषु कारो प्रति नो जुषस्व मा नो नि कः पुरुषत्रा नमस्ते ॥८॥

एतत् । वचः । जरितः । मा । अपि । मृष्ठाः । आ । यत् । ते । घोषान् ।
उत्ऽतरा । युगानि । उक्थेषु । कारो इति । प्रति । नः । जुषस्व । मा ।
नः । नि । करिति कः । पुरुषऽत्रा । नमः । ते ॥८॥

*सायणः*—नद्यः प्रसङ्गादिन्द्रस्तोत्रं कृत्वा विश्वामित्रं प्रत्यूचुः । जरितः स्तोतर्हे विश्वामित्र ते त्वदीयं यत्संवादात्मकं वचस्त्वं मनीषा इत्यादि घोषानुद्घोपयन्वर्तसे तद्वचो मापि मृष्ठाः मा विस्मार्षीः । किं कारणम्? उत्तरा युगान्युत्तरेषु याज्ञिकेषु युगेष्वहःसूक्थेषु । कारो शस्त्राणां कर्तस्त्वं नोऽस्मान् प्रति जुषस्व । संवादात्मकेन तेन वाक्येन प्रतिसेवस्व । इदानीं नोऽस्मान् पुरुषत्रा पुरुषेषु मा नि कः । उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितरां पुंवत् प्रागल्भ्यं मा कार्षीः । ते तुभ्यं नमः । मृष्ठाः मृजूष् शुद्धावित्यस्य लङि व्यत्ययेन आत्मनेपदम् । अदादित्वाच्छपो लुक् । व्रश्चादिना षत्वम् । निघातः । घोषान् । घुषिर् संशब्दन इत्यस्य शतरि सर्वविधीनां छन्दसि विकल्पितत्वादतो गुण इति पररूपत्वाभावः । सवर्णदीर्घः । शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः । युगानि । युजिर् योगे । उञ्छादिषु घञन्तत्वेन निपातनाद्गुणत्वम् । विशिष्ट-विषयं च निपातनमिष्यते । कालविशेषे रथाद्युपकरणे चेति तत्र पाठादेवान्तो-दात्तत्वम् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । कारो । करोतेः कृवापाजि-मीत्यादिना उणप्रत्ययः । आमन्त्रितत्वान्निघातः । कः । करोतेर्लुङि चेमन्त्रे घसेत्यादिना लुक् । हल्ङ्यादिना सिपोलोपः । न माङ्योग इत्यडाभावः । पुरुषत्रा । देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलमिति सप्तम्यर्थे त्राप्रत्ययः । प्रत्ययस्वरः ॥८॥

*वेङ्कटमाधवः*—संवादात्मकमेतत् । वचः । हे स्तोतः । मा । अपिमृष्ठाः, अपिमार्जनं निराकरणम् । आघोषयन्ति । यत् त्वदीयमिदं वचो मनुष्याः उत्तराण्यपि । युगानि = आगच्छति काल इत्यर्थः । तथापि स्मरणादस्मानपि । उक्थेषु । कारो ! प्रतिजुषस्व = प्रतिसेवस्व भाजयेत्यर्थः । मा । नः । निकार्षीः स्तुत्या कुरु पुरुषेषु नमः । त इति ॥८॥

Ren. :—(The Rivers) :—

Forget not these words, O singer,
That the future generations may hear it from you!
Praise us in your recitations, O poet!
Humiliate us not before men! Homage to you!

———

ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन ।
नि षू नमध्वं भवता सुपारा अधोअक्षाः सिन्धवः स्रोत्याभिः ॥९॥

ओ इति । सु । स्वसारः । कारवे । शृणोत । ययौ । वः । दूरात् ।
अनसा । रथेन । नि । सु । नमध्वम् । भवत । सुऽपाराः ।
अधःऽअक्षाः । सिन्धवः । स्रोत्याभिः ॥९॥

*सायणः*—विश्वामित्रो नदीः प्रत्युवाच । स्वसारो भगिन्यः सिन्धवो हे नद्यः कारवे स्तोत्रं कुर्वाणस्य मम वचनं सु सुष्ठु ओ शृणोत । शृणुतैव अनसा शकटेन रथेन च सह दूराद्विप्रकृष्टाद्देशाद्वो युष्मान्ययौ । प्राप्तोऽस्मि । यूयं सु सुष्ठु नि नमध्वम् । आत्मना स्वयं प्रह्वा भवत । यथा सुपाराः । रथादीनां तीरात्सुखेनावरोहणारोहणे यथा स्यातां तथा शोभनरोधसश्च भवत । किंच यूयं स्रोत्याभिः स्रवणशीलाभिरद्भिरधोअक्षा रथाक्षस्याक्षस्याधस्ताद्भवत । यदापोऽक्षस्याधस्ताद्भवन्ति तदा रथादीनि नेतुं शक्यन्ते । तस्मात्तत्परिमाणोदका भवतेत्यर्थाभिप्रायः । ओ इति प्रगृह्य संज्ञा । शृणोत । श्रु श्रवणे इत्यस्य लोटि तप्रत्ययस्य तप्तनप्तनथनाश्चेति तबादेशः । पित्त्वाद्गुणः । निघातः । ययौ । या प्रापणे इत्यस्य भूतमात्रे लिट्युत्तमे णल्यात् औ णल इत्यौकारः । एकादेशस्वरः । वः युष्मच्छब्दस्य द्वितीयाया बहुवचनस्य वस्नसाविति वसादेशः । षू । निपातस्येति संहितायां दीर्घः । नमध्वम् । णमु प्रह्वत्वे शब्दे चेत्यस्य कर्मकर्तरि न दुहस्नुनमां यक्चिणाविति प्रतिषेधाद्यगभावः । अधोअक्षाः । अधरशब्दस्य पूर्वाधरावराणामसि पुरधवश्चैषामित्यसिप्रत्ययोऽधादेशश्च 'अक्षशब्दोऽशूभ्यामावित्यस्मादशेर्देवने' (उ० iii–65) इति सप्रत्ययान्तः । कृदुत्तरपदप्रकृतिस्वरः । सिन्धवः । आमन्त्रितत्वान्निघातः । स्रोत्याभिः । स्रोतःशब्दात्स्रोतसो 'विभाषाड्यड्ड्यौ' (पा० iv–4–113) इति ड्यप्रत्ययः । डित्त्वाट्टिलोपः । प्रत्ययस्वरः ॥९॥

*वेङ्कटमाधवः*—अपेक्षितमधुना विश्वामित्रो वदति,—हे भगिन्यः । अस्मदीयं वचनम् । सुष्ठु । आ शृणुत । यातवानहम् । युष्मान् । दूरात् । अनोभिश्च । रथैश्च । आगतं मां दृष्ट्वा सुष्ठु । निनमध्वम्=स्वल्पा भवत । भवत । मम सुखेन पारयितव्याः । तदर्थं गमनानुगुणं हे सिन्धवः । स्रोतोभिः । अक्षस्याधोभूता भवतेति ॥९॥

Ren. :—(Visvāmitra) :—

O my sisters, lend, therefore, your ear to the poet !
He has come from afar with the cart and the chariot of war.
Lower yourself, be easy to ford, O rivers !
(Flow) with your current under the level of the axle !

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥१०॥

आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात् । अनसा ।
रथेन । नि । ते । नंसै । पीप्यानाऽइव । योषा । मर्यायऽइव ।
कन्या । शश्वचै । ते इति ते ॥१०॥

*सायणः*—नद्यः पूर्वं विश्वामित्रवाक्यं प्रत्याख्यायानया ऋचा तस्य वाक्यमाशुश्रुवुः । कारो स्तोत्रं कुर्वाण हे विश्वामित्र ते तव वचांसि इमानि वाक्यान्याशृणवाम शृणुमः । तव समीहितं प्रयोजनं कुर्म इत्यर्थः । अनसा शकटेन रथेन च सह ययाथ । यतो दूरादागतोऽसि । वयं च ते त्वदर्थं नि नसै । नीचैर्नमाम । प्रत्येकविवक्षयात्रैकवचनम् रथेन गन्तुं गाधोदका भवामेत्यर्थः । तत्र दृष्टान्तः । पीप्यानेव योषा । पीप्याना पुत्रं स्तनं पाययन्ती योषा माता यथा प्रह्वीभवति । दृष्टान्तान्तरम् । यथा कन्या युवतिर्मर्यायेव मनुष्याय पित्रे भ्रात्रे वा शश्वचै परिष्वजनाय नम्रा भवति तद्वत्ते त्वदर्थं प्रह्वीभवामः । ते इति पुनरुक्तिरादरार्था । कारो । 'संबुद्धौ शाकल्यस्येतौ' (पा० I–1–36) इति प्रगृह्यसंज्ञा । शृणवाम । श्रु श्रवण इत्यस्य लोटि'आडुत्तमस्य पिच्चे'त्याडागमः । पित्त्वाद्गुणः । निघातः । ययाथ । या प्रापण इत्यस्य भूतमात्रे लिटि थल्येकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः । लिट्स्वरः । अनसा । सहार्थे तृतीया । नंसै । णमु प्रह्वत्व इत्यस्य लोट्युत्तमे लेटि सिब्बहुलमिति सिप् । वैतोऽन्यत्रेत्यैकारादेशः निघातः । पीप्यानेव । पीङ् पाने इत्यस्यान्तर्भावितण्यर्थस्य लिटि कानचि रूपम् । चित्स्वरः । योषा । यु मिश्रणे । "वृतृवदिहनीत्यादिना" (उ० iii–62) सप्रत्ययः । यौतीति योषा वृषादित्वादाद्युदात्तः । शश्वचै । ष्वञ्ज परिष्वङ्ग इत्यस्मात्संपदादिलक्षणो भावे क्विप् । पृषोदरादित्वादिष्टरूपसिद्धिरन्तोदात्तत्त्वं ॥१०॥

*यास्कः*—आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा (नि० ii–27) ॥१०॥

*वेङ्कटमाधवः*—यास्क आह—'आशृणवाम । ते । कारो । वचनानि । याहि । दूरात् । अनसा च । रथेन च । निनमाम । ते । पाययमानेव । योषा पुत्रम् । मर्यायेव । कन्या । परिष्वजनाय इति । कन्या युवतिर्मैथुनाय निनमति, पुत्राय माता स्तनं प्रदातुमिति ॥१०॥

Ren. :—(The Rivers)—

We would fain lend ear to you,
You have come from afar with the car and the chariot of war.
I am, therefore, going to lower myself as one swollen with milk (does for her child),
To reveal my body like the girl to the young lover.

---

यदङ्ग त्वा भरताः संतरेयुर्गव्यन्ग्राम इषित इन्द्रजूतः ।
अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानाम् ॥११॥

यत् । अङ्ग । त्वा । भरताः । सम्ऽतरेयुः । गव्यन् । ग्रामः । इषितः ।
इन्द्रऽजूतः । अर्षात् । अह । प्रऽसवः । सर्गऽतक्तः । आ । वः ।
वृणे । सुऽमतिम् । यज्ञियानाम् ॥११॥

सायणः—विश्वामित्रो नदीः प्रत्युवाच । अङ्गेत्यामन्त्रणे । हे नद्यो यद्यस्माद्युष्माभिरितो मे नोत्तरणमभ्यनुज्ञातं तस्माद्भरता भरतकुलजा नदीयाः सर्वे त्वा परस्परमेकतामापन्नां नदीं त्वां संतरेयुः । सम्यगुत्तीर्णा भवेयुः । तदेव विशिनष्टि । गव्यन् गा उदकानि तरीतुमिच्छन्निच्छंस्त्वयाभ्यनुज्ञात इन्द्रजूतो युष्माकं प्रवर्तकेनेन्द्रेण च प्रेरितो ग्रामो भरतानां संघोऽर्षात् संतरेत । यतः सर्गतक्तो गमनाय प्रवृत्तः प्रसवस्तेषामनुयोगोऽह पूर्वं युष्माभिरनुज्ञातः । अहं तु यज्ञियानां यज्ञार्हाणां वो युष्माकं सुमतिं शोभनां स्तुतिमा वृणे । सर्वतः संभजे । भरताः । भरतशब्दादुत्सादित्वादञ् । तस्य यञञोश्चेति लुक् । अतश्च प्रत्ययस्वरः । संतरेयुः । तरतेर्लिङि जुसि रूपम् । मेर्लसार्वधातुकस्वरे धातुस्वरः । तिङि चोदात्तवतीति गतेर्निघातः । गव्यन् । गा आत्मन इच्छन् । सुपः क्यच् । एकादेशान्तस्वरः । ग्रामः । 'ग्रसेरा च' (उ० I-141) इति मन्प्रत्ययः । आकारादेशश्च । नित्स्वरः । इन्द्रजूतः । जू इति सौत्रो धातुर्गत्यर्थः । श्र्युकः कितीति निष्ठायामिट्प्रतिषेधः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः । अर्षात् । ऋ गतावित्यस्य लेटि तिपि सिब्बहुलमिति सिप् । लेटोऽडाटावाडागमः । एकाच इतीट्प्रतिषेधः । गुणः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । वृणे । वृङ् संभक्तावित्यस्य लटि रूपम् । यज्ञियानाम् । यज्ञर्त्विग्भ्यां घखञाविति घप्रत्ययः । प्रत्ययस्वरः ॥११॥

वेङ्कटमाधवः—यदा क्षिप्रम् । भरतकुलजाता विश्वामित्रस्तत्सहायाश्च । हे नदि! त्वा । सन्तरेयुः । इत्येतदेवाह—गा इच्छन् । भरतानां संघातः । इन्द्रप्रेषितः इन्द्रेण

कामदेनाऽऽकृष्टः । अन्तरमेव गच्छतु । यथापूर्वम् । प्रसक्तगमनः । तवोदकप्रसवः । अथ बहुवदाह—आवृणे । वः । सुमतिमहम् । यज्ञार्हाणामिति ॥११॥

Ren. :—(Viśvāmitra):—

When the Bharatas, in sooth, would have crossed thee,
—This army going for booty, pushed, moved by Indra,—
Then thy current will flow fast (again).
I seek this favour of thee, O Adorable ones.

---

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम् ।
प्र पिन्वध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम् ॥१२॥

अतारिषुः । भरताः । गव्यवः । सम् । अभक्त । विप्रः । सुऽमतिम् ।
नदीनाम् । प्र । पिन्वध्वम । इषयन्तीः । सुऽराधाः । आ ।
वक्षणाः । पृणध्वम् । यात । शीभम् ॥१२॥

*सायणः*—गव्यवो गा आत्मन इच्छन्तो भरता भरतकुलजाः सर्वेऽतारिषुः तां नदीं समतरन् । विप्रो मेधावी विश्वामित्रो नदीनां सुमतिं शोभनां स्तुतिं समभक्त समभजत । यूयं तु यथापूर्वमिषयन्तीः कुल्यादिद्वारान्नं कुर्वाणा अत एव सुराधाः शोभनधनोपेता यूयं वक्षणाः कृत्रिमसरितः कुल्याः प्र पिन्वध्वम् प्रकर्षेण तर्पयत । आ पृणध्वम् । ताः सर्वतः पूरयत च । शीभं शीघ्रम् गच्छत च । अतारिषुः । तॄ प्लवनसंतरणयोरित्यस्य लुङि सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः । अडागमस्वरः । गव्यवः । सुपः क्यच् । क्याच्छन्दसि इत्युप्रत्ययः । तस्य स्वरः । अभक्त । भज सेवायामित्यस्य लुङि सिचो झलो झलीति लोपः । पादादित्वादनिघातः । पिन्वध्वम् । पिवि सेचन इत्यस्य लोटि रूपम् । निघातः । इषयन्तीः । इषं कुर्वत्यः । तत्करोति णिच् । णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावाट्टेरिति टिलोपः । वा छन्दसीति सवर्णदीर्घः । प्रत्ययस्वरः । पृणध्वम् । पृण प्रीणने । लोटि रूपम् । व्यत्ययेनात्मनेपदम् । वाक्यभेदादनिघातः । यात । या प्रापण इत्यस्य लोटि रूपम् । अत्रापि न निघातः । शीभम् । शीभृ कत्थने श्लाघ्यतेऽनेन तद्वानिति करणे घञ् । ञित्स्वरः ॥१२॥

*वेङ्कटमाधवः*—समतारिषुः । भरतवंशजाः सर्वे । यज्ञेन गा इच्छन्तः । अथ विश्वामित्रश्च नदीनाम् । सुमतिम् । अभक्त । अथ यूयं मनुष्याणामन्नमुत्पादयितुमिच्छन्त्यः । शोभनधनाः । आपः प्रपिन्वध्वम् = प्रक्षरत । कूलानि चापूरयत । यथापूर्वं शीघ्रम् । यात, इत्युत्तीर्णस्य वचनमिति ॥१२॥

Ren.:—(The Reciter):—

The Bharatas, going for booty, crossed (the river);
The poet had a part in the Rivers' favour.
Swell thyselves, rich in help, generous ones!
Swell up thy breasts, go fast!

---

उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।
मादुष्कृतौ व्येनसाघ्न्यौ शूनमारताम् ॥१३॥

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि ।
मुञ्चत । मा । अदुःऽकृतौ । विऽएनसा । अघ्न्यौ ।
शूनम् । आ । अरताम् ॥१३॥

*सायणः*—पूर्वमुत्तितीर्षुर्विश्वामित्रो नदी रुत्त्वाधुनोत्तितीर्षुः पुनराह । हे नद्यो वो युष्माकमूर्मिस्तरङ्गः शम्या युग्यकण्ठपार्श्वादिसंलग्ना रज्जव उदूर्ध्वं यथा भवन्ति तथा हन्तु गच्छतु । स तरङ्गो रज्जूनभवो गच्छत्वित्यभिप्रायः । तथा हे आपो यूयं योक्त्राणि ता रज्जूर्मुञ्चत । यथा न स्पृशन्ति तथा यान्त्वित्यभिप्रायः । व्येनसा विगतपापे अत एवादुष्कृतौ कल्याणकर्मकारिण्यौ अघ्न्यावहन्त्ये न केनापि तिरस्करणीये विपाट्छुतुद्र्यौ शूनं समृद्धिम् । आरतामागच्छताम् । एवं विश्वामित्रो नदीःस्तुत्वा ताभिरनुज्ञातोऽतरदिति । ऊर्मिः । ऋ गतौ । अर्तेरुच्चेति मिप्रत्ययः । ऊरित्ययमादेशो धातोः । ऋच्छतीत्यूर्मिः । प्रत्ययस्वरः । शम्याः । शमु उपशमे । पोरदुपधादिति यत्प्रत्ययः । यतोऽनाव इत्याद्युदात्तत्वम् । हन्तु । हन हिंसागत्योरित्यस्य लोटि रूपम् । निघातः । योक्त्राणि । युजिर् योगे । करणे दाम्नीशसयुयुजेत्यादिना ष्ट्रन्प्रत्ययः । नित्स्वरः । मुञ्चत । मुच्लृ मोक्षणे । निघातः । अदुष्कृतौ । इसुसोः सामर्थ्ये इति विसर्जनीयस्य षत्वम् । व्येनसा । बहुव्रीहौ पूर्वपदस्वरः । सुपो डादेशः । अघ्न्यौ । हन हिंसागत्योरित्यस्य नञ्पूर्वस्याघ्न्यादयश्चेति निपातनाद्यक् । किरनादुपधालोपः । हो हन्तेरिति घत्वम् । सर्वविधीनां छन्दसि विकल्पितत्वादौङः शीभावाभावः । एकादेशस्वरः । शूनम् । श्वयतेर्नपुंसके भावे क्त इति क्तः । वचादित्वात्संप्रसारणम् । हल इति दीर्घत्वम् । ओदितश्चेति निष्ठानत्वम् । निष्ठा च द्व्यजनादित्याद्युदात्तः । हल इति दीर्घत्वम् । ऋ गतावित्यस्य लुङि ऋतेः सर्तिशास्त्यर्तिभ्यश्चेत्यङादेशः । ऋदृशोऽङि गुणः । न माङ्योग इत्यडभावः । निघातः ॥१३॥

वेङ्कटमाधवः—हे आपः। युष्माकम्। ऊर्मिः। शव टेषु युक्तानां गवां श्या:(?) शम्यास्ताः उद् धन्तु=शम्यानां मूलमाहन्तु, न तत ऊर्ध्वं गच्छतु। यथा यूयं गवां योक्त्राणि च। विसृजत। अदुष्टकारिण्यौ। विगतपापे विपाट्छुतुद्र्यौ। अहन्तव्ये। इद्धिम। मा। अगच्छतामिति ॥१३॥

*Ren* :—That thy waters leave the (axle-) pin !
Waters, leave free the ropes !
May no harm come,
To the two oxen, innocent, without malice !

---

## 14-III. 59

विश्वामित्र ऋषिः। आदितः पञ्च त्रिष्टुभः शिष्टाः गायत्र्यः। मित्रो देवता।

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥१॥

मित्रः। जनान्। यातयति। ब्रुवाणः। मित्रः। दाधार। पृथिवीम्।
उत। द्याम्। मित्रः। कृष्टीः। अनिऽमिषा। अभि। चष्टे।
मित्राय। हव्यम्। घृतऽवत्। जुहोत ॥१॥

सायणः—ब्रुवाणः स्तूयमानः शब्दं कुर्वाणो वा मित्रः। प्रकर्षेण स वै मीयते ज्ञायते तथा सर्वान् वृष्टिप्रदानेन त्रायत इति वा मित्रः सूर्यः। ॰नान् कर्षकादिजनान् यातयति। कृष्यादिकर्मसु प्रयत्नं कारयति। तथा मित्रः एव पृथिवीमुत अपिच द्याम् एतावुभौ लोकौ वृष्टिद्वारा अन्नं भागांश्च जनयन् दाधार धारयति। तथा सति मित्रः अनिमिषा अनिमिषेणानुग्रहदृष्ट्या कृष्टीः कर्मवतो मनुष्यान् अभिचष्टे सर्वतः पश्यति। एतत्सर्वं ज्ञात्वा हे ऋत्विजः घृतवत् उपस्तरणाभिघारणयुक्तं हव्यं हवनयोग्यं पुरोडाशादिकं तस्मै मित्राय देवाय जुहोत जुहुत प्रयच्छतेत्यर्थः। यातयति। "यती प्रयत्ने" इत्यस्य ण्यन्तस्य लटि रूपम्। दाधार। 'तुजादीनाम्' इत्यभ्यासस्य दीर्घः। जुहोत। जुहोतेर्लोटि प्रत्ययस्य एकादेशः। गुणः निघातः ॥१॥

यास्कः—मित्रो जनान्यातयतिब्रुवाणः शब्दं कुर्वन्। मित्र एव धारयति पृथिवीं च दिवं च। मित्रः कृष्टीरनिमिषन्नाभि विपश्यति इति। कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति। विकृष्टदेहा वा। मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम्। जुहोतिर्दानकर्मा (निरु. १०. २२.) इति। ॥१॥

वेङ्कटमाधव.—प्रातःकार्यार्थिनो जनान् । निर्गमयति । मित्रः । स्तूयमानः शब्दं कुर्वन् । स एव । द्यावापृथिवी । बिभर्ति । मित्र एव मनुष्यान् । अनिमेषेण । पश्यति । तस्मै मित्राय । हविः । घृतवत् । जुहोति ॥१॥

Pet.—It is the voice of Mitra that leads us men, Mitra sustains earth and heaven: Mitra, with eyes that close not, watches even our tribes, to Mitra pour the fat oblation.

---

प्र स मि॑त्र॒ मर्तो॑ अस्तु॒ प्रय॑स्वा॒न् यस्त॑ आदित्य॒ शिक्ष॑ति व्र॒तेन॑ ।
न ह॑न्यते॒ न जी॑यते॒ त्वोतो॒ नैन॒मंहो॑ अश्नो॒त्यन्ति॑तो॒ न दू॒रात् ॥२॥

प्र । सः । मि॒त्र॒ । मर्तः॑ । अ॒स्तु॒ । प्रय॑स्वान् । यः । ते॒ । आ॒दि॒त्य॒ । शिक्ष॑ति । व्र॒तेन॑ । न । ह॒न्य॒ते॒ । न जी॒य॒ते॒ । त्वाऽऊ॑तः । न । ए॒न॒म् । अंहः॑ । अ॒श्नो॒ति॒ । अन्ति॑तः । न । दू॒रात् ॥२॥

सायणः—हे आदित्य व्रतेन यज्ञेन युक्तः यः मनुष्यः ते तुभ्यं शिक्षति हविर्लक्षणमन्नं ददाति हे मित्र सः मर्तः मनुष्यः प्रयस्वान् अन्नवान् प्र अस्तु प्रभवतु । त्वोतः त्वया रक्षितः सः मनुष्यः केनापि न हन्यते न बाध्यते । न जीयते नाभिभूयते च । एवं तुभ्यं हविर्दत्तवन्तं पुरुषम् अंहः पापम् अन्तितः समीपात् न अश्नोति न प्राप्नोति । दूरात् अपि न प्राप्नोति ॥ शिक्षतिर्दानकर्मा । व्यत्ययेन परस्मैपदम् । यद्वृत्तयोगादनिघातः । जीयते । जयतेः कर्मणि यकि 'अकृत्सार्वधातुकयोः' इति दीर्घः । त्वोतः । 'तृतीया कर्मणि' इति पूर्वपदस्वरः । अश्नोति "अशू व्याप्तौ" स्वादिः । व्यत्ययेन परस्मैपदम् । ॥२॥

वेङ्कटमाधवः—हे मित्र । सः । मर्त्यः । प्रकर्षेण अन्नवान् । अस्तु यः तुभ्यम् । अदितेः पुत्र । हविः प्रयच्छति यज्ञे । सत्यादिना व्रतेन युक्तः । न । शत्रुभिर्हन्यते । न च । जीयते । त्वया रक्षितः । न च । एनम् । रक्षः व्याप्नोति । अन्तिकतः । दूराद् वा ॥२॥

Pet —That man is blessed, O Mitra, who duly serves thee; none can slay him, none overcome him whom thou dost guard; evil shall not reach him from far or near.

---

अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥३॥

अनमीवासः । इळया । मदन्तः । मितऽज्ञवः । वरिमन् । आ ।
पृथिव्याः । आदित्यस्य । व्रतम् । उपऽक्षियन्तः । वयम् ।
मित्रस्य । सुऽमतौ । स्याम ॥३॥

*सायणः*—हे मित्र अनमीवासः रोगवर्जिताः इळया अन्नेन मदन्तः माद्यन्तः पृथिव्याः वरिमन् विस्तीर्णे प्रदेशे मितज्ञवः मितजानुकाः आ यथाकामं सर्वत्र गच्छन्तः आदित्यस्य संबन्धि व्रत कर्म उपक्षियन्तः तस्य कर्मणः समीपे निवसन्तः । तदीयं कर्म कुर्वाणा इत्यर्थः । तादृशाः वयं मित्रस्य आदित्यस्य सुमतौ शोभनायां अनुग्रहबुद्धयां स्याम वर्तेमहि । मदन्तः । 'मदी हर्षे' इत्यस्य शतरि व्यत्ययेन शप् । मितज्ञवः । जानुशब्दस्य ज्ञुश्छान्दसः । वरिमन् । उरुशब्दात् पृथ्वादित्वादिमनिच् । 'प्रियस्थिर०' इत्यादिना वरादेशः । 'सुपां सुलुक्०' इति सप्तम्या लुक् । व्यत्ययेनाद्युदात्तः ॥३॥

*वेङ्कटमाधवः*—अरोगाः अन्नेन । मदन्तः । ज्ञायमानजानुकाः प्रकाशसद्भावाद् गच्छन्तः । पृथिव्याः । विस्तीर्णे देशे । वयम् । अदितेः पुत्रस्य । व्रतम् । उपेत्य निवसन्तः । मित्रस्य । कल्याण्यां मतौ स्याम ॥३॥

Pet. :—May we, free from sickness, and made glad with food, as we wander over earth's surface, abide even in the realm of this God, and live under the good will of Mitra.

---

अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥४॥

अयम् । मित्रः । नमस्यः । सुऽशेवः । राजा । सुऽक्षत्रः । अजनिष्ट ।
वेधाः । तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे ।
सौमनसे । स्याम ॥४॥

*सायणः*—अयं पूर्वमन्त्रे प्रतिपादितः मित्रः सूर्यः नमस्यः सर्वैर्नमस्करणीयः सुशेवः शोभनसुखः । सुखेन सेव्य इत्यर्थः । राजा सर्वस्य जगतः प्रकाशप्रदानेन सुक्षत्रः । क्षत्रशब्देन बलमुच्यते । शोभनबलोपेतः वेधाः सर्वस्य जगतो स्वामी सुबलः । विधाता । एवंगुणोपेतः सूर्यः अजनिष्ट प्रादुरभूत् । तस्य एवंविधगुणोपेतस्य यज्ञियस्य यज्ञार्हस्य सूर्यस्य सुमतौ शोभनायां बुद्धौ भद्रे कल्याणकारिणि सौमनसे

सौमनस्ये अपि यजमानाः वयं स्याम भवेम। नमस्यः। नमसि साधुः। 'तत्र साधुः' इति यत्। तित्स्वरितः। अजनिष्ट। 'जनी प्रादुर्भावे' इत्यस्य लुङि सिचि रूपम्। सौमनसे। सुमनस इदमित्यर्थे 'तस्येदम्' इत्यण्। प्रत्ययस्वरः ॥४॥

वेङ्कटमाधवः—अयम्। मित्रः। नमस्कार्यः। सुसुखः। अस्माकं सर्वेषां राजा। सुबलः। प्रादुरभूत्। विधाता सर्वस्य। तस्य। वयम्। यज्ञार्हस्य। स्याम। तथा भजनीये। सौमनसे च। मतिमनसोरल्पो भेदः ॥४॥

Pet. :—For this Mitra has been born, to be had in honour, our kind king, our mighty ruler: he it is we must worship, may we live in his good will, in his kindly favour.

---

म॒हाँ आ॑दि॒त्यो नम॑सोप॒सद्यो॑ यात॒यज्ज॑नो गृण॒ते सु॒शेवः॑ ।
तस्मा॑ ए॒तत्पन्य॑तमाय॒ जुष्ट॑म॒ग्नौ मि॒त्राय॑ ह॒विरा जु॑होत ॥५॥

म॒हान्। आ॒दि॒त्यः। नम॑सा। उ॒प॒ऽसद्यः॑। या॒त॒यत्ऽज॑नः। गृ॒ण॒ते। सु॒ऽशेवः॑। तस्मै॑। ए॒तत्। पन्य॑ऽतमाय। जुष्ट॑म्। अ॒ग्नौ। मि॒त्राय॑। ह॒विः। आ। जु॒हो॒त॒ ॥५॥

सायणः—योऽयमादित्यः महान् अतएव नमसा नमस्कारेण उपसद्य सर्वैरुपसदनीयः यातयज्जनः प्रातःप्रातः स्वस्वकर्मणि प्रवर्तनीया जना येनेति तथोक्तः। गृणते स्तोत्रं कुर्वते जनाय सुशेवः च भवति तस्मै पन्यतमाय स्तुत्यतमाय मित्राय आदित्याय जुष्टं प्रीतिविषयम् एतत् हविः अग्नौ आ जुहोत जुहुत। यातयज्जनः। 'यती प्रयत्ने' इत्यस्य ण्यन्तस्य शतरि रूपम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरे प्राप्ते मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्। गृणते। गॄ शब्दे। शतुरनुमः इति विभक्तेरुदात्तत्वम्। पन्यतमाय। पनतेरघ्न्यादित्वात् यत्। यतोऽनावः इत्याद्युदात्तत्वम्। जुष्टम्। निरयम 'मन्त्रे' इत्याद्युदात्तत्वम् ॥५॥

वेङ्कटमाधवः—महान्। आदित्यः। नमस्कारेण। उपसदनीयः। यातयज्जनः= निष्क्रामयति प्राशकरणान्मनुष्यान्। स्तुतवते च। सुसुखः। तस्मै। एतत्। स्तुत्यतमाय। पर्याप्नम्। अग्नौ। मित्राय। हविः। आजुहोतेति ॥५॥

Pet. :—Approach with reverence the great Aditya, the leader of men, who is kind to the singer; to him, Mitra, the Wonderful, pour into the fire the loved oblation.

---

मि॒त्रस्य॑ चर्षणी॒धृतोऽवो॑ दे॒वस्य॑ सान॒सि ।
द्यु॒म्नं चि॒त्रश्र॑वस्तमम् ॥६॥

मि॒त्रस्य॑ । च॒र्ष॒णि॒ऽधृतः॑ । अवः॑ । दे॒वस्य॑ । सा॒न॒सि ।
द्यु॒म्नम् । चि॒त्रश्र॑वःऽतमम् ॥६॥

*सायणः*—चर्षणीधृतः मनुष्याणां वृष्टिप्रदानेन धारकस्य मित्रस्य देवस्य संबन्धि अवः अन्नं सानसि सर्वैः संभजनीयं द्युम्नं तदीयं धनं च चित्रश्रवस्तमम् अतिशयेन चायनीयकीर्तियुक्तम् ॥ सानसि । सनोतेः "सानसि पर्णसि" इत्यादिना असिच्प्रत्ययान्तत्वेन निपातनादुपधावृद्धिः । चित्त्वादन्तोदात्तः । 'स्वमोः' इति स्वमोर्लुक् ॥६॥

वेङ्कटमाधवः—मित्रस्य । मनुष्याणां धारयितुः । देवस्य । रक्षणम् । भजनीयम् । "द्युम्नं द्योततेः, यशः" इति यास्कः तत् । चित्रकीर्तिः, अतिशेते ॥६॥

Pet.:—Mitra sustains the tribes of men; the help this God gives us shall win us fame that all shall hear of.

---

अ॒भि यो म॑हि॒ना दिवं॑ मि॒त्रो ब॒भूव॑ स॒प्रथाः॑ ।
अ॒भि श्रवो॑भिः पृथि॒वीम् ॥७॥

अ॒भि । यः । म॒हि॒ना । दिव॑म् । मि॒त्रः । ब॒भूव॑ । स॒ऽप्रथाः॑ ।
अ॒भि । श्रवः॑ऽभिः । पृ॒थि॒वीम् ॥७॥

*सायणः*—यः मित्रः महिना स्वकीयेन महिम्ना दिवम् अन्तरिक्षम् अभि बभूव अभिभवति स मित्रः सप्रथाः । प्रथः प्रसिद्धिः कीर्तिः तत्सहितः श्रवोभिः वृष्टिद्वारोत्पादितैरन्नैः पृथिवीम् अपि अभिभवति । बह्वन्नयुक्तां करोतीत्यर्थः । सप्रथाः । 'प्रथ प्रख्याने' । असुन् । 'वोपसर्जनस्य' इति सहस्य सभावः ॥७॥

वेङ्कटमाधवः—अभिबभूव । यः । महत्त्वेन । दिवम् । मित्रः । सर्वतः पृथुतमः । अपि च कीर्तिभिः । पृथिवीम् । अभ्यभवदिति ॥७॥

Pet. :—The Universal God, who encompasses heaven with his greatness, and earth with his glory.

---

मि॒त्राय॒ पञ्च॑ येमिरे॒ जना॑ अ॒भिष्टि॑शवसे ।
स दे॒वान्विश्वा॑न्बिभर्ति ॥८॥

मित्राय । पञ्च । येमिरे । जनाः । अभिष्टिऽशवसे । सः ।
देवान् । विश्वान् । बिभर्ति ॥८॥

सायणः—पञ्च जनाः निषादपञ्चमाश्चत्वारो वर्णाः अभिष्टिशवसे शत्रूणामभिगन्तृबलयुक्ताय मित्राय येमिरे हवींष्युपयच्छन्ति । सः तादृशो मित्रः विश्वान् सर्वान् देवान् बिभर्ति स्वस्वरूपतया धारयति । अभिष्टिशवसे । इषेः 'मन्त्रे वृष' इत्यादिना क्तिन् । 'दासौ च निति०' इत्यसेः अन्तोदात्तत्वम् । शकन्ध्वादित्वात्पररूपम् । बहुव्रीहौ पूर्वपदस्वरः ॥८॥

वेङ्कटमाधवः—मित्राय । पञ्च । जनाः । आत्मानं नियच्छन्ति । शत्रूणामभ्येषणशीलबलाय । सः । देवान् । सर्वान् । धारयति ॥८॥

Pet.:—To Mitra our five tribes go for help; and he sustains all the gods.

---

मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे ।
इष इष्टव्रता अकः ॥९॥

मित्रः । देवेषु । आयुषु । जनाय । वृक्तऽबर्हिषे ।
इषः । इष्टऽव्रताः । अकरित्यकः ॥९॥

सायणः—मित्रः भगवानादित्यः देवेषु द्योतमानादिगुणयुक्तेषु आयुषु मनुष्येषु मध्ये यो जनो वृक्तबर्हिः, वृक्तं लूनं बर्हिर्येन सः । बर्हिर्लवनासादनपूर्वं हविषो दाता ऋत्विगित्यर्थः तस्मै वृक्तबर्हिषे जनाय इष्टव्रताः । इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिध्यन्ति ताः इषः तादृशान्यन्नानि अकः । करोति । तस्मै ददातीत्यर्थः । वृक्तबर्हिषे । 'ओव्रश्चू छेदने' । कर्मणि निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः । बहुव्रीहौ पूर्वपदस्वरः । अकः । करोतेर्लुङि च्लेः "मन्त्रे घस" इत्यादिना लुक् । सिपो हल्ङ्यादि लोपः । निघातः ॥९॥

वेङ्कटमाधवः—देवमनुष्यादिप्रीणनार्थम् । वृक्तबर्हिर्भवति तस्मै । मित्रः । जनाय । अभिलषितकर्मसाधनानि । अन्नानि । करोति ॥९॥

Pet.:—A friend indeed to gods and to men, to those that worship him, Mitra fulfils their hearts' desires.

15—IV—50

वामदेव ऋषिः। त्रिष्टुप् छन्दः। दशमी जगती। दशम्येकादश्याविन्द्र-बृहस्पतिदेवताके। शिष्टा नव बार्हस्पत्याः।

यस्तुस्तम्भ सहसा वि ज्मो अन्तान् बृहस्पतिस्त्रिषधस्थो रवेण।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥१॥

यः। तुस्तम्भ। सहसा। वि। ज्मः। अन्तान्। बृहस्पतिः। त्रिऽसधस्थः। रवेण। तम्। प्रत्नासः। ऋषयः। दीध्यानाः। पुरः। विप्राः। दधिरे। मन्द्रऽजिह्वम् ॥१॥

*सायणः*—यः बृहस्पतिः बृहतो देवस्य यज्ञस्य वा पालयिता देवः सहसा बलेन ज्मः पृथिव्याः अन्तान्। दश दिश इत्यर्थः। तान् वि तस्तम्भ विविधं स्तम्भितवान् नियमितवान्। त्रिषधस्थः त्रिषु स्थानेषु वर्तमानः रवेण एवं तिष्ठतेत्यनेन शब्देन तं देवं प्रत्नासः पुराणाः ऋषयः अतीन्द्रियद्रष्टारः दीध्यानाः दीप्यमानाः विप्राः मेधाविनो यजमानादयः पुरः दधिरे पुरस्तात् स्थापितवन्तः स्तुत्यादिना। मन्द्रजिह्वं मादनजिह्वं मोदनजिह्वम् ॥१॥

*वेङ्कटमाधवः*—यम्। पृथिव्याः। पर्यन्तान्। बलेन। विविधं स्तभ्नाति। बृहस्पतिः। त्रिस्थानः। गर्जितरवेण सहितः। तम्। पुराणाः। दीप्यमानाः। ऋषयः। मेधाविनः। पुरः। दधिरे। मोदनवाचम् ॥१॥

Grif. :—Him who with might hath propped earth's ends, who sitteth in threefold seat, Brihaspati, with thunder,
Him of the pleasant tongue have ancient sages, deep-thinking, holy singers, set before them.

---

धुनेतयः सुप्रकेतं मदन्तो बृहस्पते अभि ये नस्ततस्रे।
पृषन्तं सृप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिम् ॥२॥

धुनऽइतयः। सुऽप्रकेतम्। मदन्तः। बृहस्पते। अभि। ये। नः। ततस्रे। पृषन्तम्। सृप्रम्। अदब्धम्। ऊर्वम्। बृहस्पते। रक्षतात्। अस्य। योनिम् ॥२॥

*सायणः*—हे बृहस्पते धुनेतयः। धुना शत्रूणां कम्पयत्रीतिर्गतिर्येषां ते। तादृशाः सुप्रकेतं शोभनप्रज्ञं त्वां मदन्तः मादयन्तः नः अस्मत्संबन्धिनः ये

ऋत्विजः अभि तवत्ते आत्मानमुपविशयन्ति स्तुवन्ति वा अस्य एषां योनिं कारणं यज्ञं यजमानं वा मां रक्षतात् रक्ष। योनिर्विशेष्यते। पृषन्तं फलानि सिञ्चन्तं सृप्रं सर्पणस्वभावम् अदब्धम् अहिंसितम् ऊर्वम् उरुम् ॥२॥

वेङ्कटमाधवः—धूननगमनाः। शोभनप्रज्ञानम्। माम्। मदन्तः। ये। अभिगच्छन्तिः मेधाः। अथैकवदाह—सिञ्चन्तम्। सर्पणशीलम्। अहिंसितम्। महान्तम्। बृहस्पते। त्वं रक्षतात्। अस्य मेधस्य। उदकनिःसरणमार्गम् ॥२॥

Grif. :—Wild in their course, in well-marked wise rejoicing were they, Brihaspati, who pressed around us.
Preserve, Brihaspati, the stall uninjured, this company's raining, ever-moving birth-place.

---

बृहस्पते या परमा परावदत आ त ऋतस्पृशो नि षेदुः।
तुभ्यं खाता अवता अद्रिदुग्धा मध्वः श्चोतन्त्यभितो विरप्शम् ॥३॥

बृहस्पते। या। परमा। पराऽवत्। अतः। आ। ते। ऋतऽस्पृशः।
नि। सेदुः। तुभ्यम्। खाताः। अवताः। अद्रिऽदुग्धाः।
मध्वः। श्चोतन्ति। अभितः। विऽरप्शम् ॥३॥

*सायणः*—हे बृहस्पते या प्रसिद्धा परमा उत्कृष्टा परावत् अत्यन्तं दूरभूता वसतिः स्वर्गाख्यास्ति। यद्वा लिङ्गव्यत्ययः। परमं स्थानमस्ति। अतः अस्माद्देशात् आ। आ इत्यर्वागर्थे। अधस्तात्। ते सर्वे संबन्धिनः ऋतस्पृशः यज्ञं स्पृशन्तोऽश्वाः निषेदुः निषण्णा भवन्ति। तुभ्यं खाताः अवताः। लुप्तोपमैषा। यथा खाताः कूपाः अभितः श्चोतन्ति तद्वत् अद्रिदुग्धा ग्रावभिरभिषुताः सोमाः विरप्शं विशेषेण शब्देन स्तोत्रं यथा भवति तथा मध्वः मधुररसं श्चोतन्ति स्रवन्ति ॥३॥

*वेङ्कटमाधवः*—बृहस्पते। यः। परमः। देशः। अतः। आनिषीदन्तु। त्वदीयाः। यज्ञस्पृशोऽश्वाः। तुभ्यम्। खाताः। कूपाः। अभिषवग्रावभिरुत्पादकास्ते कूपाः। सोऽस्मान्। प्रेरयन्ति। स्तुतिमन्त त्वां प्रति ॥३॥

Grif:—Brihaspati, from thy remotest distance have they sat down who love the law eternal,
For thee were dug wells springing from the mountain, which murmuring round about pour streams of sweetness.

---

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥४॥

बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे ।
विऽओमन् । सप्तऽआस्यः । तुविऽजातः । रवेण । वि ।
सप्तऽरश्मिः । अधमत् । तमांसि ॥४॥

*सायणः*—अयं बृहस्पतिः मन्त्राभिमानी देवः महः महतः ज्योतिषः दीप्तस्य आदित्यस्य परमे निरतिशये व्योमन् व्योमनि प्रथमं जायमानः प्रादुर्भवन् सप्तास्यः सप्तच्छन्दोमयमुखः तुविजातः बहुप्रकारं संभूतः रवेण शब्देन सप्तरश्मिः स्वर्णस्वभावतेजोयुक्तः तमांसि वि अधमत् ॥४॥

*यास्कः*—धमतिर्गतिकर्मा (नि० ६–२)

*वेङ्कटमाधवः*—*अह्नः प्रारम्भे । प्रादुर्भवन् । महतः । ज्योतिषः स्थाने । परमे* व्योम्नि दिवि । सप्तमुखः । बहुजननः । शब्देन महता । विधमति । तमांसि । सप्तरश्मिः तादृशी चास्य तनुरस्तीत्यवगन्तव्यम् ॥४॥

Griff:—Brihaspati, when first he had his being from mighty splendour in supremest heaven,
Strong, with his sevenfold mouth, with noise of thunder, with his seven rays, blew and dispersed the darkness.

---

स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥५॥

सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज ।
फलिऽगम् । रवेण । बृहस्पतिः । उस्रियाः । हव्यऽसूदः ।
कनिक्रदत् । वावशतीः । उत् । आजत् ॥५॥

*सायणः*—सः बृहस्पतिः सुष्टुभा शोभनस्तुतिमता ऋक्वता दीप्तिमता गणेन अङ्गिरसां रवेण शब्देन च सह फलिगम् । 'त्रिफला विशरणे' । फलिर्भेदः । तेन गच्छतीति फलिगम् । वलं वलनामानमसुरं रुरोज बभञ्ज । द्वितीयः सशब्दः पूरणः । स एव देवः उस्रियाः भोगानामुत्स्राविणीः हव्यसूदः क्षीरादिहविष्प्रेरिकाः वावशतीः वावश्यमानाः गाः कनिक्रदत् शब्दं कुर्वन् उदाजत् उद्गमयति स्म ॥५॥

वेङ्कटमाधवः—सः । शोभनस्तुतिकेन । ऋग्भिर्युक्तेन । गणेन । बलमसुरम् । हिंसितवान् । मेघाकारम् । शब्देन । बृहस्पतिः । हविषः प्रेरयित्रीम् । शब्दं कुर्वन् । कामयमानाः । पणिभ्यः उदाजत् ॥५॥

Griff:—With the loud-shouting band who sang his praises, with thunder, he destroyed obstructive Vala.
Brihaspati thundering drove forth the cattle, the lowing cows who make oblations ready.

---

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥६॥

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा ।
हविःऽभिः । बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् ।
स्याम । पतयः । रयीणाम् ॥६॥

सायणः—पित्रे पालकाय विश्वेदेवाय सर्वदेवतारूपाय । देवानां मन्त्रप्रतिपाद्यत्वादस्य च मन्त्राभिमानित्वात् विश्वदेवत्वम् । यद्वा । अत्र देवशब्दः स्तुत्यर्थः । सर्वैः स्तुत्याय वृष्णे वर्षकाय बृहस्पतये देवाय एव एवमुक्तप्रकारेण यज्ञैः तत्साधनैः हविर्भिः आज्यचर्वादिलक्षणैः नमसा स्तुत्या विधेम परिचरेम । हे बृहस्पते सुप्रजाः शोभनपुत्राः वीरवन्तः वीर्योपेताः वयं रयीणां धनानां पतयः स्याम ॥६॥

वेङ्कटमाधवः—एवम् । पालयित्रे । सर्वेषां देवाय । वृष्णे । यज्ञैः । नमस्कारेण । हविर्भिश्च । परिचरणं कुर्मः । शिष्टं स्पष्टम् ॥६॥

Griff. :—Serve we with sacrifices, gifts, and homage even thus the Steer of all the gods, the Father.
Brihaspati, may we be lards of riches, with noble progeny and store of heroes,

---

स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।
बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥७॥

सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि ।
वीर्येण । बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति ।
वन्दते । पूर्वऽभाजम् ॥७॥

सायण :—इदमाद्यृक्त्रयं पुरोहितप्रशंसा इति ब्राह्मणम् । (ऐ. ब्रा. ८,२६)। अथवा सूक्तस्य ऋग्द्वयवर्जितस्य बार्हस्पत्यत्वात् बृहस्पतेरेव स्तुतिः । स इत् स एव राजा मूर्धाभिषिक्तः अन्यः वा राजमानः प्रतिजन्यानि जन्यं युद्धं प्रति बलानीत्यर्थः । प्रत्यर्थजनपदानि वा तानि विश्वा सर्वाणि शुष्मेण बलेन वीर्येण शरीरसामर्थ्येन वा अभि अभिगम्याक्रम्य तस्थौ तिष्ठति । स इत्युक्तं क इत्याह । यः बृहस्पतिं बृहतां महतां पालयितारं देवमुक्तलक्षणं पुरोहितं वा सुभृतं सुष्ठु हविःस्तोत्रादिनान्नाच्छादनादिना वा बिभर्ति भरति वल्गूयति स्तौति । वन्दते नमस्करोति च पूर्वभाजम् इतरेभ्यः प्रथमं संभक्तारं कृत्वा । एवं यः करोति स एव तस्थाविति ॥७॥

वेङ्कटमाधवः—सः । एव । राजा । प्रतिजनपदप्रादुर्भूतानि बलानि । शोषकेण । वीर्येण । अभितिष्ठति । यो राजा । बृहस्पतिम् । ब्राह्मणस्य पुरोधानद्वारेण सुभृतम् । बिभर्ति । स्तौति । नमस्करोति च । पूर्वमेव भजमान मुख्यम् ॥७॥

Grif. :—Surely that king by power and might heroic hath made him lord of all his foes' possessions,
Who cherishes Brihaspati well-tended, adorns and worships him as foremost sharer.

---

स इत्क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।
तस्मै विशः स्वयमेवा नमन्ते यस्मिन्ब्रह्मा राजनि पूर्व एति ॥८॥

सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा । पिन्वते ।
विश्वऽदानीम् । तस्मै । विशः । स्वयम् । एव । नमन्ते । यस्मिन् ।
ब्रह्मा । राजनि । पूर्वः । एति ॥८॥

सायणः—स इत् स एव क्षेति निवसति । सुधितः सुष्ठु तृप्तः सन् स्वे स्वकीये एव ओकसि सदने । स एव समृद्धो निर्बाधः सन् सुखेनास्ते । तस्मा इळा भूमिः विश्वदानीं सर्वकालं पिन्वते वर्धते फलैः । तस्मै विशः प्रजाः स्वयमेव नमन्ते प्रणता भवन्ति । दण्डनमन्तरेण स्वयमेव दत्तकराः भवन्ति । यस्मिन् राजनि ब्रह्मा पूर्वः प्रथमं पूज्यः सन् एति गच्छति । वर्तत इत्यर्थः ॥८॥

वेङ्कटमाधवः—सः । एव । निवसति । सुप्रीतः स्वस्मिन् । स्थाने । तस्मा एव । पृथिवी । सर्वदा । कामान् । पिबते । तस्मा एव । मनुष्याः जानपदाः । स्वयम् । एव । नमनं कुर्वन्ति । यस्मिन् । राजनि । बृहस्पतिभूतः । पुरोधाः ब्राह्मणः । कर्मणाग्रे । गच्छति ॥८॥

Griff. :—In his own house he dwells in peace and comfort : to him for ever holy food flows richly.
To him the people with free will pay humage—the King with whom the Brahman hath precedence.

---

अप्र॑तीतो जयति॒ सं धना॑नि॒ प्रति॑जन्या॒न्युत या सज॑न्या ।
अ॒व॒स्यवे॒ यो वरि॑वः कृ॒णोति॑ ब्र॒ह्मणे॒ राजा॒ तम॑वन्ति दे॒वाः ॥९॥
अप्र॑तिऽइतः । जयति॒ । सम् । धना॑नि । प्रति॑ऽजन्यानि । उ॒त ।
या । सऽज॑न्या । अ॒व॒स्यवे॑ । यः । वरि॑वः । कृ॒णोति॑ ।
ब्र॒ह्मणे॑ । राजा॑ । तम् । अ॒व॒न्ति॒ । दे॒वाः ॥९॥

सायणः—स एव अप्रतीतः अन्यैरप्रतिगतः सन् यानि धनानि प्रतिजन्यानि प्रतिस्पर्धिजनसंबन्धीनि उत अपि च सजन्या जनसंबन्धीनि धनानि सं जयति । यः राजा अवस्यवे अवसीयसे धनरहिताय रक्षणमिच्छते ब्रह्मणे ब्राह्मणाय वा प्रीणनमिच्छते बृहस्पतये वा वरिवः धनं कृणोति करोति ददाति । स उक्तप्रकारेण महान् भवति । तम् एव देवाः अवन्ति रक्षन्ति ॥९॥

वेङ्कटमाधवः—शत्रुभिरप्रतिगतः । यजति । उभयानि धनानि । प्रतिजनभवानि । यानि । च । सजन्यानि । रक्षणमिच्छते । यः । राजा । पूजाम् । करोति । पुरोधसे । तम् । रक्षन्ति । देवाः ॥९॥

Griff. .—He, unopposed is master of the riches of his own subjeccts and of hostile people.
The gods uphold that King with their protection who helps the Brahman when he seeks his favour.

---

इन्द्र॑श्च॒ सोमं॑ पिबतं बृहस्पते॒ऽस्मिन्य॒ज्ञे म॑न्दसा॒ना वृ॑षण्वसू ।
आ वां॑ विश॒न्त्विन्द॑वः स्वा॒भुवो॒ऽस्मे र॒यिं सर्व॑वीरं॒ नि य॑च्छतम् ॥१०॥
इन्द्रः॑ । च॒ । सोम॑म् । पि॒ब॒त॒म् । बृ॒ह॒स्प॒ते॒ । अ॒स्मिन् । य॒ज्ञे । म॒न्द॒सा॒ना ।
वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । आ । वा॒म् । वि॒श॒न्तु॒ । इन्द॑वः । सु॒ऽआ॒भुवः॑ ।
अ॒स्मे इति॑ । र॒यिम् । सर्व॑ऽवीरम् । नि । य॒च्छ॒त॒म् ॥१०॥

*सायणः*—हे बृहस्पते त्वं इन्द्रश्च सोमं पिबतम्। कीदृशौ युवाम्। अस्मिन् यज्ञे मन्दसाना हृष्यन्तौ वृषण्वसू वर्षितृधनौ यजमानेभ्यो दीयमानधनावित्यर्थः। वा युवां स्वाभुवः सुष्ठु सर्वतो भवन्तः। कृत्स्नशरीरव्यापनसमर्थाः इत्यर्थः। तादृशाः इन्दवः सोमाः विशन्तु युवयोः शरीरं प्रविशन्तु। अस्मे अस्मभ्यं रयिं धनं सर्ववीरं सर्वपुत्राद्युपेतं नि यच्छत दत्तम् ॥१०॥

*वेङ्कटमाधवः*—बृहस्पते। त्वम्। इन्द्रः। च। सोमम्। पिबतम्। अस्मिन्। यज्ञे। वृष्यमाणधनौ। मोदमानौ। शोभनभवनाः। सोमाः। आविशन्तु। वाम्। अस्मासु। धनम्। सर्वैर्वीरैर्युक्तम्। नियच्छतम् ॥१०॥

Griff:—Indra, Brihaspati. rainers of treasure, rejoicing at this sacrifice drink the soma.

Let the abundant drops sink deep within you: vouchsafe n us riches with full store of heroes.

---

बृहस्पत इन्द्र वर्धतं नः सचा सा वां सुमतिर्भूत्वस्मे।
अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥११॥ २७।३।

बृहस्पते। इन्द्र। वर्धतम्। नः। सचा। सा। वाम्। सुऽमतिः। भूतु।
अस्मे इति। अविष्टम्। धियः। जिगृतम्। पुरम्ऽधीः।
जजस्तम्। अर्यः। वनुषाम्। अरातीः ॥११॥

*सायणः*—हे बृहस्पते हे इन्द्र युवां नः अस्मान् वर्धतं वर्धयतं प्रवृद्धान् कुरुतम्। सा सुमतिः युवयोरनुग्रहबुद्धिः अस्मे अस्मासु सचा सह भूतु भवतु। धियः कर्माणि अविष्ट रक्षतं पारं नयतम्। पुरंधीः। पुरं शरीरम् धीयते स्थाप्यते याभिर्मतिभिस्ताः स्तुतीः जिगृतं प्रबुध्यतम्। वनुषा संभक्तॄणामस्माकम् अर्यः गन्त्रीः अरातीः। शत्रूनित्यर्थः। जजस्तं युध्यतं क्षपयतमित्यर्थः॥ छन्दस्यरातिशब्दः स्त्रीलिंगः। एवं स्तुति निगमय्याभीष्टं प्रार्थितवान् ॥११॥

*वेंकटमाधवः*—इन्द्राबृहस्पती। वर्धयतम्। अस्मान्। सा। युवयोः। सुमतिः। अस्मासु। संयुक्ता। भवतु। रक्षतम्। कर्माणि। प्रकाशयतम्। प्रज्ञाः। उपक्षपयतम्। याचितॄणां धनानि। अप्रयच्छन्तीः। शत्रुभूताः।

Grif. :—Brihaspati and Indra, make us prosper: may this be your benevolence to us-ward.

Assist our holy thoughts, wake up our spirit: weaken the hatred of our foe and rivals.

---

## 15—IV—51

वामदेव ऋषिः। त्रिष्टुप् छन्दः। उषा देवता।

इदमु त्यत्पुरुतमं पुरस्ताज् ज्योतिस्तमसो वयुनावदस्थात्।
नूनं दिवो दुहितरो विभातीर् गातुं कृणवन्नुषसो जनाय ॥१॥

इदम्। ऊं इति। त्यत्। पुरुऽतमम्। पुरस्तात्। ज्योतिः। तमसः।
वयुनऽवत्। अस्थात्। नूनम्। दिवः। दुहितरः। विऽभातीः।
गातुम्। कृणवन्। उषसः। जनाय ॥१॥

सायणः—इदमु पुरतो दृश्यमानमिदं त्यत् तदस्माभिः स्तुत्यं सर्वप्रसिद्धम् पुरुतमम् अत्यन्तप्रभूतं ज्योतिः तेजः वयुनावत्। वेतेः कान्तिकर्मण इदम्। प्रकृष्टकान्तिमत्। अथवा वयुनमिति प्रज्ञानाम। प्रज्ञोपेतम्। सर्वस्य प्रज्ञापकमित्यर्थः। कीदृक् तेजः। पुरस्तात् पूर्वस्यां दिशि तमसः अन्धकारात् अस्थात् उदतिष्ठत्। एवं सति नूनं सत्यं दिवः आदित्यस्य दुहितरः दुहितृस्थानीयाः विभातीः विभानं कुर्वतीः उषसो जनाय यजमानानां गातुं गमनं गमनादिव्यापारसामर्थ्यं कृणवन अकुर्वन् ॥१॥

वेङ्कटमाधवः—वामदेवः। तत्। एतत्। बहुतमम्। प्राच्याम्। ज्योतिः। तमसः सकाशात्। प्रज्ञानवत्। आविर्भवति। नूनम्। दिवः। दुहितरः। व्युच्छन्त्यः। आगमनम्। कुर्वन्ति। उषसः। जनार्थम् ॥१॥

Griff.—Forth from the darkness in the region eastward this most abundant splendid light hath mounted.
Now verily the far-refulgent Mornings, Daughters of Heaven, bring welfare to the people.

---

अस्थुरु चित्रा उषसः पुरस्तान् मिता इव स्वरवोऽध्वरेषु।
व्यू व्रजस्य तमसो द्वारोच्छन्तीरव्रञ्छुचयः पावकाः ॥२॥

अस्थुः। ऊं इति। चित्राः। उषसः। पुरस्तात्। मिताःऽइव। स्वरवः।
अध्वरेषु। वि। ऊं इति। व्रजस्य। तमसः। द्वारा। उच्छन्तीः।
अव्रन्। शुचयः। पावकाः ॥२॥

सायणः—चित्राः चायनीयाः उषसः पुरस्तात् पूर्वस्यां दिशि अस्थुः तिष्ठन्ति। व्याप्ता इत्यर्थः। तत्र दृष्टान्तः। अध्वरेषु मिताः खाताः स्वरवः यूपाः

इव ते यथा वेद्याः पुरतो भासन्ते तद्वत् । यद्यपि स्वरुशब्दो यूपच्छेदपतित-प्रथमशकलवाची, 'यः प्रथमः शकलः परापतेत्स स्वरुः कार्यः' इत्युक्तत्वात्, तथाप्यत्र मितशब्दश्रवणात् 'चपालवन्तः स्वरवः' (ऋ सं० 3-8-10) इत्यादौ तथा दर्शनाच्चात्र यूपवचनः । ताः व्रजस्य वारकस्य तमसो द्वारा द्वाराणि वि उच्छन्तीः शुचयः दीप्ताः पावकाः शोधिका अव्रन् व्यावृण्वन् ॥२॥

*वेङ्कटमाधवः*—तिष्ठन्ति । चित्रवर्णाः । उषसः । प्राच्याम् । मिता इव । स्वरवो यूपाः । यज्ञेषु । विवृण्वन्ति । वारकस्य । तमसः । द्वाराणि । व्युच्छन्त्यः । दीप्ताः । शोधयित्र्यः ॥२॥

Griff. :—The richly coloured Dawns have mounted eastward, like pillars planted at our sacrifices,

And flushing far, splendid and purifying, unbarred the portals of the fold of darkness.

---

उच्छन्तीरद्य चितयन्त भोजान् राधोदेयायोषसो मघोनीः ।
अचित्रे अन्तः पणयः ससन्त्वबुध्यमानास्तमसो विमध्ये ॥३॥
उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधःऽदेयाय । उषसः ।
मघोनीः । अचित्रे । अन्तरिति । पणयः । ससन्तु । अबुध्य-
मानाः । तमसः । विऽमध्ये ॥३॥

*सायणः*—अद्य अस्मिन् दिने उच्छन्तीः तमः विवासयन्त्यः मघोनीः धनवत्यः उषसः भोजान् भोजयितॄन् यजमानान् तेषां राधोदेयाय सोमादिधन-दानाय चितयन्त प्रज्ञापयन्ति । अचित्रे अचायनीये तमसो विमध्ये । अत्यन्त-गाढान्धकारे इत्यर्थः । तत्र पणयः वणिजः इवादातारः अबुध्यमानाः ससन्तु स्वपन्तु ॥३॥

*वेङ्कटमाधवः*—व्युच्छन्त्य उषसः । अद्य । बोधयन्तु । भोजयितॄनुदारान् । धनदानाय । उषसः । धनवत्यः । चित्ररहिते । अप्रज्ञायमानसर्वपदार्थे । अन्तः । लुब्धाः । स्वबुध्यमानाः । तमसः । विमध्ये । अत्यन्तमन्तः ॥३॥

Grif. :—Dispelling gloom this day the wealthy Mornings urge liberal givers to present their treasures.

In the unlightned depth of darkness round them let niggard traffickers sleep unawakened.

---

कुवित्स देवीः सुनयो नवो वा यामो बभूयादुषसो वो अद्य ।
येना नवग्वे अङ्गिरे दशग्वे सुप्तास्ये रेवती रेवदूष ॥४॥

कुवित् । सः । देवीः । सुनयः । नवः । वा । यामः । बभूयात् । उषसः ।
वः । अद्य । येन । नवऽग्वे । अङ्गिरे । दशऽग्वे । सुप्तऽआस्ये ।
रेवतीः । रेवत् । ऊष ॥४॥

*सायणः*—हे देवीः द्योतमानाः उषसो वः युष्मान् सनयः पुराणः नवो वा यामः गमनसाधनः स रथः अद्य अस्मिन् यागदिने कुवित् बहुवारं बभूयात् भवेत् गच्छेदित्यर्थः । येन रथेन हे रेवतीः धनवत्यो यूयं नवग्वे दशग्वे सप्तास्ये सप्तच्छन्दोयुक्तमुखे अङ्गिरे अङ्गिरोगणे । तौ द्वौ तत्र येऽप्यंगिरसः तेषां गणे । तथान्यत्र 'नवग्वो नु दशग्वो अङ्गिरस्तमः' (ऋ. सं. 10–62–5) इति । रेवत् धनवत् यथा भवति तथा ऊष विभातं कृतवत्यः । वसेर्व्युच्छनकर्मणो लिण्मध्यमबहुवचनस्येदं रूपम् ॥४॥

*वेङ्कटमाधवः*—बहुः । सः । देव्यः । पुरातनः । नूतनः । वा । यामः । भवतु । उपमः । युष्माकम् । अद्य । येन गमनेन । नवग्वैः । दशग्वैश्च । अङ्गिरोभिर्युक्ते । सप्तास्ये । बृहस्पतिना च युक्ते युद्धे । हे रेवत्यः । धनयुक्तम् । ऊष निवसितवत्यः ॥४॥

Grif. :—O Goddesses, is this your car, I ask you, ancient this day, or is it new, ye Mornings,
Wherewith, rich dawns, ye seek with wealth Navagva, Daśagva Angira, the seven-toned singer ?

---

यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।
प्रबोधयन्तीरुषसः ससन्तं द्विपाच्चतुष्पाच्चरथाय जीवम् ॥५॥

यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि ।
सद्यः । प्रऽबोधयन्तीः । उषसः । ससन्तम् । द्विऽपात् ।
चतुःऽपात् । चरथाय । जीवम् ॥५॥

सायणः—हे देवीः द्योतमानाः उषसः यूयं हि खलु ऋतयुग्भिः यज्ञगामिभिः अश्वैः भुवनानि सद्यः परिप्रयाथ परितः प्रकृष्टं गच्छथ । किं कुर्वत्यः । ससन्तं स्वपन्तं द्विपाच्चतुष्पात् मनुष्यगवादिलक्षणं जीवं चरथाय चरणाय गमनादिव्यवहाराय प्रबोधयन्तीः प्रबोधयन्त्यः सत्यः परिप्रयाथ ॥५॥

वेङ्कटमाधवः—यूयम् । हि । देव्यः । यथार्थयुक्तैः । अश्वैः । परिगच्छथ । सद्य एव । सर्वाणि भुवनानि । प्रबोधयन्त्यः । उषसः । स्वपन्तम् । द्विपात् । चतुष्पाच्च सर्वं च । जीवम् । चरणाय ॥५॥

Grif. :—With horses harnessed by eternal order, Goddesses, swiftly round the worlds ye travel,
Arousing from their rest, O Dawns, the sleeping and all that lives, man, bird and beast, to motion.

---

क्वे स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणाम् ।
शुभं यच्छुभ्रा उषसश्चरन्ति न वि ज्ञायन्ते सदृशीरजुर्याः ॥६॥
क्व । स्वित् । आसाम् । कतमा । पुराणी । यया । विऽधाना । विऽदधुः ।
ऋभूणाम् । शुभम् । यत् । शुभ्राः । उषसः । चरन्ति । न । वि ।
ज्ञायन्ते । सऽदृशीः । अजुर्याः ॥६॥

*सायण*:—आसां उषसां मध्ये क्व स्वित् अभूच्च कतमा पुराणी पुरातनी । यया ऋभूणां सम्बन्धिनी विधाना चमसादिनिर्माणानि विदधुः अकुर्वन् ऋभवः । यत् याश्च उषसः शुभ्राः दीप्ताः शुभं चरन्ति शोभां दीप्तिं कुर्वन्ति ता अजुर्याः अशीर्णाः नित्यनूतनाः न वि ज्ञायन्ते । यतः सदृशी सदृश्यः सर्वेष्वपि दिवसेष्वेकरूपा अतोऽद्यतन्य एता एताः पुराण्य इति न ज्ञायन्ते । उषासादृश्यं "सदृशीरद्यसदृशीरिदु श्वः" (ऋ. सं 1-123-8) इत्यत्र प्रतिपादितम् ॥६॥

वेङ्कटमाधवः—क्व स्विद् इदानीम् । आसां सा भवति । कतमा च सा । पुरातनी ययोषसा देवाः । दीप्तीनाम् । विधातव्यानि तेजांसि । विदधुः । शुभम् । यदा । शोभमानाः । उषसः । चरन्ति तदानीम् । समानाकाराः । पृथग् न । विज्ञायन्ते । जरारहिताः । "सदृशीरद्य सदृशीरिदु श्वः" इत्युक्तम् ।

Grif. :—Which among these is eldest, and where is she through whom they fixed the Ribhus' regulations ?
What time the splendid Dawns go forth for spelndour, they are not known apart, alike, unwasting.

---

ता घा ता भद्रा उषसः पुरासुर् अभिष्टिद्युम्ना ऋतजातसत्याः ।
यास्वीजानः शशमान उक्थैः स्तुवञ्छंसन्द्रविणं सद्य आप ॥७॥

ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः ।
ऋतजातऽसत्याः । यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् ।
शंसन् । द्रविणम् । सद्यः । आप ॥७॥

*सायणः*—ता घ । घेति प्रसिद्धौ । ताः खलूपकारिण्यः ताः भद्राः कल्याण्यः स्तुत्या वा उषसः पुरा पूर्वम् आसुः अभवन् । अभिष्टिद्युम्नाः अभिगमनमात्रेण द्युम्नं धनं यासां ताः । ऋतजातसत्याः । ऋतार्थं यज्ञार्थं जाताश्च ताः सत्याः सत्यफलाश्च तादृश्यः । यासु उषःसु ईजानः यागं कुर्वाणः उक्थैः शस्त्रैः शशमानः शंसमानः स्तुवन् सामभिः स्तोत्रं निष्पादयन् शंसन् शस्त्राणि कुर्वन् द्रविणम् धनं सद्यः आप प्राप्नोति । ता भद्रा इति संबन्धः ॥७॥

वेङ्कटमाधवः—ताः । खलु । भजनीयाः । उषसः । पुरा । बभूवुः । अभ्येषणीयान्नाः । यज्ञार्थं जातसत्यभूतसर्वपदार्थाः । यास्विति स्पष्टम् । पुनस्ता इति पूरणम् ॥७॥

Grif. :—Blest were these Dawns of old, shining with succour,
true with the truth that springs from holy order;
With whom the toiling worshipper, by praises, hymning
and lauding soon attained to riches.

---

ता आ चरन्ति समना पुरस्तात् समानतः समना पप्रथानाः ।
ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरन्ते ॥८॥

ताः । आ । चरन्ति । समना । पुरस्तात् । समानतः । समना ।
पप्रथानाः । ऋतस्य । देवीः । सदसः । बुधानाः । गवाम् ।
न । सर्गाः । उषसः । जरन्ते ॥८॥

*सायणः*—ता उषसः आ सर्वतः चरन्ति । समनाः सर्वतः समानाः पुरस्तात् पूर्वस्यां दिशि समानतः समानाद्देशात् अन्तरिक्षात् समना सर्वतः पप्रथानाः प्रथमानाः ऋतस्य यज्ञस्य सदसः सदः । तत्रत्यम् ऋत्विग्यविरादिकम् इत्यर्थः । बुधानाः बोधयन्त्यः । अन्तर्भावितण्यर्थोऽयम् । एवं महानुभावाः उषसो जरन्ते स्तूयन्ते । गवा सर्गाः न उदकानां सृष्टय इव । 'गवां सर्गा न रश्मयः' (ऋ. सं. 4–52–5) इति हि श्रुतम् । ता यथा सर्वत्र प्रसंगादुपकारकत्वाच्च स्तूयन्ते तद्वत् ॥८॥

वेङ्कटमाधवः—ताः । आगच्छन्ति । समानमेव । प्राच्याम् । समाने - काले ।

समानम् । प्रथमानाः । सत्यम् । स्थानम् । जानत्यः । गवाम् । इव । सर्गाः । उषसः स्तूयन्ते यथा विसृष्टा गाव आगच्छन्त्येवमागच्छन्ति ॥८॥

Grif, :—Hither from eastward all at once they travel, from one place spreading in the self-same manner.
Awaking, from the seat of holy Order the godlike Dawns come nigh like troops of cattle.

---

ता इन्न्वे३व स॒म॒ना स॑मा॒नीर् अमी॑तवर्णा उ॒षस॑श्चरन्ति ।
गूह॑न्ती॒रभ्व॒मसि॑तं॒ रुश॑द्भिः शु॒क्रास्त॒नूभि॒ः शुच॑यो रुचा॒नाः ॥९॥
ताः । इत् । नु । एव । स॒म॒ना । स॒मा॒नीः । अमी॑तऽवर्णाः । उ॒षस॑ः ।
च॒र॒न्ति॒ । गूह॑न्तीः । अभ्व॑म् । असि॑तम् । रुश॑त्ऽभिः । शु॒क्राः ।
त॒नूभि॑ः । शुच॑यः । रु॒चा॒नाः ॥९॥

*सायणः*—ताः एव उषसः । इदिति पूरणः । नु अद्य समना समाना एकवेत्यर्थः । समानीः एकरूपाः अमीतवर्णाः अहिंसितवर्णाः अपरिमितवर्णा वा उषसश्चरन्ति सर्वतः । किं कुर्वत्यः । अभ्वम् । महन्नामैतत् । अतिमहत् । असितं कृष्णं रूपं गूहन्तीः गोपयन्त्यः रुशद्भिः रोचमानैः तनूभिः स्वशरीरैः शुक्राः दीप्ताः शुचयः शुद्धा रुचानाः रोचमाना रोचयन्त्यो वा ॥९॥

*वेङ्कटमाधवः*—ताः । क्षिप्रम् । एव । समाने काले । समान्यः । अम्लानवर्णाः उषसः । चरन्ति । विनाशयन्त्यः । महत् । तमः । शुक्लैस्तेजोभिः । शुक्लवर्णाः । तनूभिः । दीप्यमानाः । रोचमानाः ॥९॥

Grif, :—Thus they go forth with undiminished colours, these Mornings similar, in self-same fashion.
Concealing the gigantic might of darkness with radiant bodies, bright and pure and shining.

---

र॒यिं दि॑वो दुहितरो विभा॒तीः प्र॒जाव॑न्तं यच्छता॒स्मासु॑ देवीः ।
स्यो॒नादा वः॑ प्रति॒बुध्य॑मानाः सु॒वीर्य॑स्य॒ पत॑यः स्याम ॥१०॥
र॒यिम् । दि॒वः । दु॒हि॒त॒रः । वि॒ऽभा॒तीः । प्र॒जाऽव॑न्तम् । य॒च्छ॒त॒ ।
अ॒स्मासु॑ । दे॒वीः । स्यो॒नात् । आ । व॒ः । प्र॒ति॒ऽबुध्य॑-
मानाः । सु॒ऽवीर्य॑स्य । पत॑यः । स्या॒म॒ ॥१०॥

सायणः—हे दिवो दुहितरः द्योतमानस्यादित्यस्य दुहितृस्थानीयाः विभातीः विभात्यो विशेषेण भानं कुर्वत्यः अस्मासु प्रजावन्तं रयिं पुत्राद्युपेतं धनं यच्छत दत्त । हे देवीः देव्यः स्योनात् सुखात् निमित्तभूतात् वः युष्मान् प्रतिबुध्यमानाः प्रतिबोधयन्तो वयं सुवीर्यस्य पतयः स्याम । पुत्रादिसहितस्य धनस्य पालका भवेम ॥१०॥

वेङ्कटमाधवः—रयिं । दिवः । दुहितरः । व्युच्छन्त्यः । प्रजावन्तम् । यच्छत । अस्मासु । देव्यः । सुखात् स्यात् ? यूयम् प्रतिबुध्यमाना भवथ, सुखहेतोर्वा युष्मान्, प्रतिबोधयन्तः । शोभनस्य वीर्यस्य धनस्य । पतयः । स्याम ॥१०॥

Grif. :—O Goddesses, O Heaven's refulgent Daughters, bestow upon us wealth with store of children.
As from our pleasant place of rest we rouse us; may we be masters of heroic vigour.

---

तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।
वयं स्याम यशसो जनेषु तद्द्यौश्च धत्ताम् पृथिवी च देवी ॥११॥

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः ।
यज्ञऽकेतुः । वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः । च ।
धत्ताम् । पृथिवी । च । देवी ॥११॥

सायणः—हे दिवो दुहितरः हे उषसः विभातीः वः युष्मान् तत् उत्तरार्धप्रथमपादेन वक्ष्यमाणं फलं यज्ञकेतुः यज्ञ एव केतुः प्रज्ञापको यस्य तादृशोऽहम् उप ब्रुवे उपेत्य ब्रवीमि । अथ बहुवदुच्यते । वयं स्तुवन्तः जनेषु अस्मत्समानेषु मध्ये यशसः कीर्तेः अन्नस्य वा स्वामिनः स्याम । तत् यशः द्यौः पृथिवी च देवी धत्ता धारयताम् ॥११॥

वेङ्कटमाधवः—तत् ' वः । हे दिवः दुहितरः । व्युच्छन्तीः । उपब्रुवे । उषसः । यज्ञो यस्य प्रज्ञापकः । मम किमित्याह वयम् । स्याम । यशस्विनः । जनेषु । तदस्मभ्यम् । द्यावापृथिवी । च । प्रयच्छताम् ॥११॥

Grif. :—Well-skilled in lore of sacrifice, ye Daughters of Heaven, refulgent Dawns, I thus address you
May we be glorious among the people. May Heaven vouchsafe us this, and Earth the Goddess.

---

## 17. V—83

भौमोऽत्रि ऋषिः । 'यत्पर्जन्य' इत्येषा नवम्यनुष्टुप्, 'विवृक्षान्' इत्याद्यास्तिस्रो जगत्यः, शिष्टाः षट् त्रिष्टुभः । पर्जन्यो देवता ।

अच्छा॑ वद त॒वसं॑ गी॒र्भिरा॒भिः स्तु॒हि प॒र्जन्यं॒ नम॒सा वि॑वास ।
कनि॑क्रदद्वृष॒भो जी॒रदा॑नु॒ रेतो॑ दधा॒त्योष॑धीषु॒ गर्भ॑म् ॥१॥

अच्छ॑ । व॒द॒ । त॒वस॑म् । गीः॒ऽभिः । आ॒भिः । स्तु॒हि । प॒र्जन्य॑म् ।
नम॑सा । आ । वि॒वा॒स॒ । कनि॑क्रदत् । वृ॒ष॒भः । जी॒रऽदा॑नुः ।
रेतः॑ । द॒धा॒ति॒ । ओष॑धीषु । गर्भ॑म् ॥१॥

*सायणः*—हे स्तोतस्तवसं बलवन्तं पर्जन्यम् अच्छाभिप्राप्य वद प्रार्थय । पर्जन्यशब्दो यास्केन बहुधा निरुक्तः । पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानामिति । आभिर्गीर्भिः स्तुतिवाग्भिः स्तुहि नमसा अन्नेन हविर्लक्षणेन आविवास सर्वतः परिचर । यः पर्जन्यो वृषभः अपां वर्षिता जीरदानुः क्षिप्रदानः कनिक्रदत् गर्जनशब्दं कुर्वन्नोषधीषु गर्भं गर्भस्थानीयं रेतः उदकं दधाति स्थापयति तं स्तुहि ॥१॥

*वेङ्कटमाधवः*—अभिवद । वृद्धम् । गीर्भिः । आभिः । स्तुहि । पर्जन्यम् । नमसा च । परिचर । शब्दं कुर्वन् । वर्षिता । क्षिप्रदानः । उदकम् । दधाति । ओषधीषु । गर्भं च गर्भहेतुं वोदकम् ॥१॥

Pet. :—Call on the strong Parjanya in this hymn, praise him, worship him, and bow down before him; for now, loud-roaring, the Bull, in quick showers of rain, puts his seed within the plants, and they bring forth.

---

वि वृ॒क्षान्ह॑न्त्यु॒त ह॑न्ति र॒क्षसो॒ विश्वं॑ बिभाय॒ भुव॑नं म॒हाव॑धात् ।
उ॒तानां॑गा ईषते॒ वृष्ण्या॑वतो॒ यत्प॒र्जन्यः॑ स्त॒नय॒न्हन्ति॑ दु॒ष्कृतः॑ ॥२॥

वि । वृ॒क्षान् । ह॒न्ति॒ । उ॒त । ह॒न्ति॒ । र॒क्षसः॑ । विश्व॑म् । बि॒भा॒य॒ ।
भुव॑नम् । म॒हाऽव॑धात् । उ॒त । अना॑गाः । ई॒ष॒ते॒ । वृष्ण्य॑ऽवतः ।
यत् । प॒र्जन्यः॑ । स्त॒नय॑न् । हन्ति॑ । दुः॒ऽकृतः॑ ॥२॥

*सायणः*—अयं मंत्रो निरुक्ते स्पष्टं व्याख्यातः । तदेवात्र लिख्यते । विहन्ति वृक्षान्विहन्ति च रक्षांसि सर्वाणि चास्माद् भूतानि बिभ्यति महावधात्

महान् ह्यस्य वधः । अप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः पापकृत इति ॥२॥

वेङ्कटमाधवः—विहन्ति । वृक्षान् । विहन्ति । च । रक्षांसि । सर्वाणि चास्मात् । भूतानि । बिभ्यति । महावधात् । महान् ह्यस्य वधः । अपि । अनपराधः । भीतः । पलायते । वर्षकर्मवतः । यत् । पर्जन्यः । स्तनयन् । हन्ति । दुष्कृतः पापकृतः इति यास्कः ॥२॥

Pet. :—On every side he smites down the trees, smites down the spirits of darkness, the whole creation trembles before him of the mighty spear : even the guiltless flee before his onset, when Parjanya thundering smites down the evil-doers.

---

र॒थीव॒ कश॒याश्वाँ॑ अभिक्षि॒पन्ना॒विर्दू॒तान्कृ॑णुते व॒र्ष्याँ३॒॑अह॑ ।
दू॒रात्सिं॒हस्य॑ स्त॒नथा॒ उदी॑रते॒ यत्प॒र्जन्यः॑ कृ॒णुते॑ व॒र्ष्यं१॒॑ नभः॑ ॥३॥

र॒थीऽइ॑व । कश॑या । अश्वा॑न् । अ॒भि॒ऽक्षि॒पन् । आ॒विः । दू॒तान् । कृ॒णु॒ते॒ ।
व॒र्ष्या॑न् । अह॑ । दू॒रात् । सिं॒हस्य॑ । स्त॒नथाः॑ । उत् । ई॒र॒ते॒ ।
यत् । प॒र्जन्यः॑ । कृ॒णु॒ते । व॒र्ष्य॑म् । नभः॑ ॥३॥

सायणः—रथीव रथस्वामीव स यथा कशया अश्वानभिक्षिपन् दूतान् भटानाविष्करोति तद्वदसौ पर्जन्योपि कशयाश्वानभिक्षिपन्नभिप्रेरयन् वर्ष्यान् वर्षकान् दूतान् दूतवद् वृष्टिप्रेरकान्मेघान् मरुतो वा आविः कृणुते प्रकटयति । अहेति पूरणः । एवं सति सिंहस्य । सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः । अवर्षणेनाभिभवितुः । शब्दयितुर्वा मेघस्य स्तनथा गर्जनशब्दाः दूरात् उत् ईरते उद्गच्छन्ति । कदा । यत् यदा पर्जन्यो नभोऽन्तरिक्षं वर्ष्यं वर्षोपेतं कृणुते करोति तदा ॥३॥

वेङ्कटमाधवः—सारथिरिव । कशया । अश्वान् । अभिक्षिपन् । आविष्कृणुते । वर्षणनिमित्तान् । मरुत्प्रभृतीन् । अहेत्याश्चर्ये । दूरादेव । सिंहसदृशस्य मेघस्य । शब्दाः । उद्गच्छन्ति । यदा । पर्जन्यः । करोति । वर्षणहेतुम् । आकाशम् ॥३॥

Pet. :—Like a charioteer striking his horses with the whip, he puts forth his messengers of rain : from afar the thunderings of the lion arise, when Parjanya fills the sky with rain.

---

प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।
इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥४॥

प्र । वाताः । वान्ति । पतयन्ति । विऽद्युतः । उत् । ओषधीः । जिहते ।
पिन्वते । स्व१ रिति स्वः । इरा । विश्वस्मै । भुवनाय । जायते ।
यत् । पर्जन्यः । पृथिवीम् । रेतसा । अवति ॥४॥

*सायणः*—प्र वान्ति वाता वृष्टयर्थं पतयन्ति गच्छन्ति समन्तात्संचरन्ति विद्युतः ओषधीः ओषधयः उत् जिहते उद्गच्छन्ति प्रवर्धन्ते स्वरन्तरिक्षं पिन्वते क्षरति। इरा भूमिर्विश्वस्मै सर्वस्मै भुवनाय सर्वजगद्धिताय जायते समर्था भवति । कदैवमिति। यत् यदा पर्जन्यो देवः पृथिवीं रेतसा उदकेन अवति रक्षति अभिगच्छति वा तदैवं भवति ॥४॥

*वेङ्कटमाधवः*—प्रवान्ति । वाताः । विद्युतश्च । पतन्ति । ओषध्यश्च । उद्गच्छन्ति । सर्वं च । स्वरसं रक्षन्ति , अन्नं च । विश्वस्मै । भुवनाय । जायते । यदा पर्जन्यः । पृथिवीम् । उदकेन रक्षति ॥४॥

Pet. :—The winds blow, fhe lightnings fly, the plants spring up. the sky pours: food for the whole world is made, when Parjanya comes to Earth's help with his seed.

---

यस्य व्रते पृथिवी नंनमीति यस्य व्रते शफवज्जर्भुरीति ।
यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥५॥

यस्य । व्रते । पृथिवी । नंनमीति । यस्य । व्रते । शफऽवत् ।
जर्भुरीति । यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः ।
नः । पर्जन्यः । महि । शर्म । यच्छ ॥५॥

*सायणः*—यस्य पर्जन्यस्य व्रते कर्मणि पृथिवी नंनमीति अत्यर्थं नमति सर्वेषामधो भवति । यस्य व्रते शफवत् पादोपेतं (शफवत् शफवल्या ?) गवादिकं जर्भुरीति भ्रियते पूर्यते गच्छतीति वा । यस्य व्रते कर्मणि ओषधीरोषध्यो विश्वरूपा नानारूपा भवन्ति हे पर्जन्य स महांस्त्वं नोऽस्मभ्यं महि शर्म महत्सुखं यच्छ प्रयच्छ ॥५॥

*वेङ्कटमाधवः*—यस्य । कर्मणि । पृथिवी । अत्यन्तमार्द्रीभूता नमति । यस्य

कर्मणि । शफवत् पश्वादि । पुष्टं भवति । यस्य । व्रते । ओषध्यः । विश्वरूपा जायन्ते । स त्वम् । नः । पर्जन्यः । महत् । सुखं । प्रयच्छ ॥५॥

Pet :—Thou at whose word Earth bends low, thou at whose word cattle and the many-coloured plants scatter, O Parjanya, do thou grant us thy great protection.

—

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥६॥

दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्र । पिन्वत । वृष्णः ।
अश्वस्य । धाराः । अर्वाङ् । एतेन । स्तनयित्नुना । आ ।
इहि । अपः । निऽसिञ्चन् । असुरः । पिता । नः ॥६॥

सायणः—हे मरुतः यूयं दिवोऽन्तरिक्षसकाशात् नोऽस्मदर्थं वृष्टिं ररीध्वं दत्त । वृष्णः वर्षकस्य अश्वस्य व्यापकस्य मेघस्य संबन्धिन्यो धाराः उदकधाराः प्र पिन्वत प्रक्षरत । हे पर्जन्य त्वमेतेन स्तनयित्नुना गर्जता मेघेन सह अर्वाङ् अस्मदभि मुखतया इहि आगच्छ । किं कुर्वन् । अपः अम्भांसि निषिञ्चन् स देवः असुरः उदकानां निरसितापि सन् नोऽस्माकं पिता पालकश्च ॥६॥

वेङ्कटमाधवः—दिवः । नः । वृष्टिम् । मरुतः । प्रयच्छत । प्रप्यायत । वर्षितुः । अश्वस्य पर्जन्यस्य । धाराः । अर्वाङ् । एतेन । स्तनयित्नुना । अपः । निषिञ्चन् । प्राज्ञः । पालयिता । अस्माकम् ॥६॥

Pet. :—And you, ye Maruts, give us rain from heaven, make the streams of the strong horse run down : forth, Parjanya, with thy thunder; pour down on us the rain, O Heavenly Father.

—

अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन ।
दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥७॥

अभि । क्रन्द । स्तनय । गर्भम् । आ । धाः । उदन्ऽवता । परि । दीय ।
रथेन । दृतिम् । सु । कर्ष । विऽसितम् । न्यञ्चम् । समाः ।
भवन्तु । उत्ऽवतः । निऽपादाः ॥७॥

सायणः—अभि भूम्यभिमुखं क्रन्द शब्दय। तदेव पुनरुच्यते दाढ्र्याय। स्तनय गर्ज। गर्भं गर्भस्थानीयमुदकमोषधीषु आ धाः आधेहि। तदर्थमुदन्वता उदकवता रथेन परिदीय परितो गच्छ। दृतिं दृतिवदुदकधारकं मेघं विषितं विशेषेण सितं बद्धं न्यञ्चं न्यक् अधोमुखं सु सुष्ठु कर्ष आकर्ष वृष्ट्यर्थम्। यद्वा। विषितं विमुक्तबन्धनमेवं कर्ष। एवं कृते उद्वतः ऊर्ध्ववन्त उन्नतप्रदेशाः निपादाः न्यग्भूतपादाः निकृष्टपादा वा निम्नोन्नतप्रदेशाः समाः एकस्था भवन्तु। उदकपूर्णा भवन्त्वित्यर्थः ॥७॥

वेङ्कटमाधवः—अभिक्रन्द। स्तनितशब्दं च कुरु। ओषधीनां गर्भम्। आधेहि। परितो गच्छ उदकवता। रथेन। दृतिसदृशं मेघम्। कुष्ठु। कर्ष। विषितास्यम्। नीचीनमुखम्। समाः। भवन्तु। उदकेनोच्छ्रिताः। निम्नाश्च देशाः ॥७॥

Pet. :—Roar and thunder, sow the seed, fly around with watery car: drag after thee the water-skin, loosened and head down-wards, let the high and the low places be made one.

---

महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात्।
घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः ॥ ८ ॥

महान्तम्। कोशम्। उत्। अच। नि। सिञ्च। स्यन्दन्ताम्। कुल्याः।
विऽसिताः। पुरस्तात्। घृतेन। द्यावापृथिवी इति। वि। उन्धि।
सुऽप्रपानम्। भवतु। अघ्न्याभ्यः ॥८॥

सायणः—हे पर्जन्य त्वं महान्तं प्रवृद्धं कोशं कोशस्थानीयं मेघमुत् अच उद्गच्छ उद्गमय वा। तथा कृत्वा निषिञ्च नीचैः सारय। कुल्या नद्यो विषिता विप्मुताः सत्यः स्यन्दन्ताम् प्रवहन्तु पुरस्तात् पूर्वाभिमुखम्। प्रायेण नद्यः प्राच्यः स्यन्दन्ते। घृतेन उदकेन द्यावापृथिवी दिवं च पृथिवीं च वि उन्धि क्लेदयन्त्य-धिकम् अघ्न्याभ्यः गोभ्यः सुप्रपाणं सुष्ठु प्रकर्षेण पातव्यमुदकं भवतु ॥८॥

वेङ्कटमाधवः—महान्तम्। मेघम्। उत्क्षिप्य उत्क्षिप्तमुदकं च पृथिव्यां निषिञ्च। स्यन्दन्ताम्। कुल्याः। विमुक्ताः। पुरस्तात्। उदकेन। द्यावापृथिवी। विविधं क्लेदय। सुप्रपाणम्। भवतु। गोभ्यः ॥८॥

Pet. :—Draw up the great bucket and pour it out, let loose its streams that they may rush onwards: water heaven and earth with fatness, let there be good drinking for the cattle.

---

यत्पर्जन्य कनिक्रदत्स्तनयन्हंसि दुष्कृतः ।
प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥९॥

यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः । प्रति ।
इदम् । विश्वम् । मोदते । यत् । किम् । च । पृथिव्याम् । अधि ॥९॥

*सायण:*—हे पर्जन्य यत् यदा त्वं कनिक्रदत् अत्यर्थं शब्दयन् स्तनयन् दुष्कृतः पापकृतो मेघान् हंसि विदारयसि तदानीमिदं विश्वं जगत् प्रति मोदते। विश्वं विशेष्यते। यत्किंच पृथिव्यामधि भूम्यामधिष्ठितं यच्चराचरात्मकं तदिदं विश्वं मोदते हृष्यति। वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम् ॥९॥

*वेङ्कटमाधवः*—यदा। पर्जन्यः। शब्दं कुर्वन्। स्तनयंश्च। हंसि। रक्षांसि। प्रमोदते तदा। एनम्। विश्वम्। यत्। किम्। चित्। पृथिव्याम्। अधिवसति ॥९॥

Pet. :—When, Parjanya, roaring and thundering, thou dost smite down the evil-doers, this whole world rejoices before thee, and everything that is upon the earth.

---

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम् ॥१०॥

अवर्षीः । वर्षम् । उत् । ऊं इति । सु । गृभाय । अकः । धन्वानि । अतिऽएतवै ।
ऊं इति । अजीजनः । ओषधीः । भोजनाय । कम् । उत ।
प्रऽजाभ्यः । अविदः । मनीषाम् ॥१०॥

*सायण*:—इयमतिवृष्टिविमोचनी। हे पर्जन्य त्वमवर्षीः वृष्टवानसि वर्षमुत् उ षू गृभाय उत्कृष्टं सु सुष्ठु गृभाय गृहाण परिहरेत्यर्थः। धन्वानि निरुदकप्रदेशान् अकः जलवतः कृतवानसि। किमर्थम् अत्येतवा उ अतिक्रम्य गन्तुम्। ओषधीरजीजनः उदपादयः किमर्थम्। भोजनाय धनाय भोगाय वा। कमित्यर्थे शिशिरं जीवनाय कमितिवत्पादपूरणः। उत अपि च प्रजाभ्यः सकाशात् मनीषां स्तुतिमविदः प्राप्तवानसि ॥१०॥

*वेङ्कटमाधवः*—अवर्षीः। वर्षम्। सुष्ठु। च। उद्गृहीतवानसि। तथा निरुदकानपि देशान्। करोति। गन्तुम्। तथौषधीश्च। भोजनाय। अजीजनः। उत। प्रजाभ्यः। प्रज्ञाम्। अलम्भयः ॥१०॥

Pet. :—Thou hast rained down the rain; now hold it in: thou hast made the deserts passable for us, thou hast quickened the plants for food to us and hast fulfilled the desire of thy children.

---

## 18–VI–54

भारद्वाज ऋषिः। गायत्री छन्दः। पूषा देवता।

सं पूषन्विदुषा नय यो अञ्जसानुशासति। य एवेदमिति ब्रवत् ॥१॥

सम्। पूषन्। विदुषा। नय। यः। अञ्जसा। अनुऽशासति।
यः। एव। इदम्। इति। ब्रवत् ॥१॥

*सायणः*—हे पूषन् पोषकदेव विदुषा जानता तेन जनेन सं नय अस्मान्संगमय। यो विद्वान् अञ्जसा ऋजुमार्गेण अनुशासति अनुशास्ति। नष्टद्रव्यप्राप्त्युपायमुपदिशति। यश्चैवं एवमिदं नष्टं भवदीयं धनमिति ब्रवत् ब्रवीति नष्टं धनं दर्शयति इत्यर्थः। तेन विदुषेत्यन्वयः ॥१॥

*वेङ्कटमाधवः*—हे पूषन्। सन्नयास्मान्। विदुषा। यो विद्वान् अस्माकं नष्टं धनम्। अञ्जसा। अनुशास्ति। यः। एवम्। इदम्। इति। नष्टं ब्रवीति ॥१॥

Pet.:—Lead us, Pūsan, to a wise man who shall straightaway direct us; who shall say, Here it is.

---

समु पूष्णा गमेमहि यो गृहाँ अभिशासति। इम एवेति च ब्रवत् ॥२॥

सम्। ऊं इति। पूष्णा। गमेमहि। यः। गृहान्। अभिऽशासति।
इमे। एव। इति च। ब्रवत् ॥२॥

*सायणः*—पूष्णा अनुगृहीता वयं सं गमेमहि तेन जनेन संगच्छेमहि यो जनो गृहान् येषु गृहेष्वस्मदीया नष्टा पशवस्तिष्ठन्ति तान् गृहान् अपि शासति अभिशास्ति आभिमुख्येन बोधयति। यश्चेमे त्वदीया नष्टाः पशवएव एवं तिष्ठन्तीति च ब्रवत् ब्रूयात् ॥२॥

*वेङ्कटमाधवः*—पूष्णा प्रणिता। तेन संगच्छेमहि। यो नष्टानां गवाम्। गृहाणि चोरस्वभूतानि। अभिशास्ति। मे गावः। एवं च हृतम्। इति। च। ब्रवीति ॥२॥

Pet. :—May we meet Pusan who shall show us houses : and say, There they are.

---

पूष्णश्चक्रं न रिष्यति न कोशोऽव पद्यते । नो अस्य व्यथते पविः ॥३॥

पूष्णः । चक्रम् । न । रिष्यति । न । कोशः । अव । पद्यते ।
नो इति । अस्य । व्यथते । पविः ॥३॥

सायणः—पूष्णः पोषकस्य देवस्य चक्रमायुधं न रिष्यति न विनश्यति । अस्य चक्रस्य कोशश्च न अव पद्यते न हीयते । अस्य पविः धारा च नो नैव व्यथते कुण्ठीभवति । तेन चक्रेण चोरान्हत्वास्मदीयं धनं प्रकाशयेति भावः ॥३॥

वेङ्कटमाधवः—पूष्णः । आयुधम् । न रिष्यति, न न्यूनं भवति । न चास्य । कोशः । पतति । नापि । धारा । अस्य । व्यथते ॥३॥

Pet..—Pusan's wheel is not broken, its box does not fall : its tire is not shattered.

---

लभते

यो अस्मै हविषाविधन्न तं पूषापि मृष्यते । प्रथमो विन्दते वसु ॥४॥

यः । अस्मै । हविषा । अविधत् । न । तम् । पूषा । अपि ।
मृष्यते । प्रथमः । विन्दते । वसु ॥४॥

सायणः—यो यजमानः अस्मै पूष्णे हविषा चरुपुरोडाशादिना अविधत् परिचरति तं यजमानं पूषा न अपि मृष्यते । अपि शब्द ईषदर्थे । न हिनस्ति । स च प्रथमो मुख्यः सन् वसु धनं विन्दते लभते ॥४॥

वेङ्कटमाधवः—यः । पूष्णे । हविषा उपचर्यां करोति । न । तम् । पूषा । अपि । मृष्यति स्वेन दत्तधनमाढ्यं दृष्ट्वा स्वयमेवाभ्यसूयति । स सर्वस्मात्प्रागेव । लभते । धनम् ॥४॥

Pet. :—And if one serves this God with an offering, Pūsan will not be angry with him : he shall get wealth first.

---

पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजं सनोतु नः ॥५॥

पूषा । गाः । अनु । एतु । नः । पूषा । रक्षतु । अर्वतः । पूषा ।
वाजम् । सनोतु । नः ॥५॥

*सायरा*:—पूषा पोषको देवः नोऽस्मदीया गाः अन्वेतु रक्षणार्थमनुगच्छतु। स च पूषा अर्वतः अश्वान्रक्षतु चोरेभ्यः। तथा वाजमन्नं च नोऽस्मभ्यं पूषा सनोतु प्रयच्छतु॥५॥

*वेङ्कटमाधवः*—(निगदसिद्धा)—

Pet :—May Pūsan go after our cattle, may Pūṣan protect our horses, may Pūsan give us food.

---

पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः। अस्माकं स्तुवतामुत॥६॥

पूषन्। अनु। प्र। गाः। इहि। यजमानस्य। सुन्वतः।
अस्माकम्। स्तुवताम्। उत॥६॥

*सायरा*:—हे पूषन् सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य गाः पशून् अनु प्र इहि रक्षणार्थमनुगच्छ। उत अपि च स्तुवतां त्वद्विषयं स्तोत्रं कुर्वतामस्माकं गाश्चानुगच्छ॥६॥

*वेङ्कटमाधवः*—पूषन्। अनुप्रयच्छ। पशून्। सुन्वतः। यजमानस्य रक्षार्थम्। अपि च। अस्माकम्। सुन्वताम्॥६॥

Pet. :—O Pusan, go after the cattle of thy worshipper, who pours out the Soma for thee ; and of us who praise thee.

---

माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे। अथारिष्टाभिरा गहि॥७॥

माकिः। नेशत्। माकीम्। रिषत्। माकीम्। सम्। शारि।
केवटे। अथ। अरिष्टाभिः। आ। गहि॥७॥

*सायरा*:—हे पूषन् अस्मदीयं गोधनं माकिः नेशत् मा नश्यतु। माकिर्माकीमित्येतौ प्रतिषेधमात्रे वर्तेते। माकीं रिषत् मा व्याघ्रादिभिर्हिंस्यताम् माकीं मा च केवटे कूपे सं शारि संशीर्णं भूत् कूपपातेनापि हिंसितं मा भवतु। अथ एवं सति अरिष्टाभिरहिंसिताभिर्गोभिः सह आ गहि सायंकाले आगच्छ॥७॥

*वेङ्कटमाधवः*—मा काचित्। नश्यतु गौः। मा च काञ्चन वृकः। हिनस्तु। मा च काञ्चित् चोरः। केवट इति रूपनाम तत्र। संशीर्णं करोतु। तथा कृत्वा। अरिष्टाभिस्ताभिः। सायम्। आगच्छ॥७॥

Pet.:—Let nothing be lost, or injured, or fall into a pit come to us with our cattle all safe

शृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम् । ईशानं राय ईमहे ॥८॥

शृण्वन्तम् । पूषणम् । वयम् । इर्यम् । अनष्टऽवेदसम् । ईशानम् । रायः । ईमहे ॥८॥

सायणः—अस्मत्स्तोत्राणि शृण्वन्तम् इर्यं दारिद्र्यस्य प्रेरकमनष्टवेदसमविनष्टधनमीशानं सर्वस्येश्वरमेवंविधं पूषणं देवं रायः धनानि ईमहे याचामहे ॥८॥

वेङ्कटमाधवः—शृण्वन्तम् । पूषणम् । वयम् । प्रेरकम् । अनष्टधनम् । ईशानम् । धनम् । याचामहे ॥८॥

Pet.—Pusan hears us therefore, do we call upon him, the watchful God who loses nothing that is his, the Lord of wealth.

पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इह स्मसि ॥९॥

पूषन् । तव । व्रते । वयम् । न । रिष्येम । कदा । चन । स्तोतारः । ते । इह । स्मसि ॥९॥

सायणः—हे पूषन् पोषक तव त्वदीये व्रते कर्मणि वर्तमाना वयं कदाचन कदाचिदपि न रिष्येम हिंसिता न भवेम । तादृशाश्च वयमिह अस्मिन्कर्मणि ते तव स्तोतारः स्मसि स्मः भवामः ॥९॥

वेङ्कटमाधवः—पूषन् । तव । कर्मणि । वयम् । न । न्यूनीभूता भवेम धनविनाशात् । स्तोतारः । तव वयम् । इह निवासे सुखम् । भवामः ॥९॥

Pet.—May we, Pusan, living is the land suffer no evil: see we are here thy worshippers

परि पूषा परस्ताद्धस्तं दधातु दक्षिणम् । पुनर्नो नष्टमाजतु ॥१०॥

परि । पूषा । परस्तात् । हस्तम् । दधातु । दक्षिणम् । पुनः । नः । नष्टम् । आ । अजतु ॥१०॥

सायणः—पूषा पोषको देवः परस्तात् परस्मिन्देशे सुसंचारादन्यस्मिन् चोरव्याघ्रादिभिरुपिते देशे गच्छतो गोधनस्य निवारणाय स्वकीयं हस्तं परि दधातु परिधानं निवारकं करोतु। नोऽस्मदीयं नष्टं च गोधनं पुनराजतु आगच्छतु ॥१०॥

वेङ्कटमाधवः—गवां गच्छन्तीनामग्रतः। पूषा। दक्षिणम्। हस्तम्। परि-दधातु यथा न ताश्चोरा हरेयुः। नष्टमपि। अस्मान्। पुनरपि प्रेरयतु ॥१०॥

Pet :—May Pūsan stretch out his right hand far and wide : and drive back to us our lost.

---

## 19—VII—49

वसिष्ठ ऋषिः। त्रिष्टुप् छन्दः। आपो देवता।

समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः।
इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥१॥

समुद्रऽज्येष्ठाः। सलिलस्य। मध्यात्। पुनानाः। यन्ति। अनिऽविशमानाः। इन्द्रः। याः। वज्री। वृषभः। ररादं। ताः। आपः। देवीः। इह। माम्। अवन्तु ॥१॥

सायणः—समुद्रज्येष्ठाः समुद्रोऽर्णवो ज्येष्ठः प्रशस्यतमो यासामपां ताः। सलिलस्य। अन्तरिक्षनामैतत्। अन्तरिक्षस्य मध्यात् माध्यमिकात् स्थानात् यन्ति गच्छन्ति। कीदृश्यः। पुनाना विश्वं शोधयन्त्यः अनिविशमानाः सर्वदा गच्छन्त्यः। वज्री वज्रभृत् वृषभो कामानां वर्षितेन्द्रो याः निरुद्धा अपः रराद लिखति देवीर्देव्यस्ता आप इहास्मिन्प्रदेशे स्थितं मामवन्तु रक्षन्तु अभिगच्छन्तु वा ॥१॥

वेङ्कटमाधवः—समुद्रप्रथमाः। अन्तरिक्षस्य। मध्यात्। शोषयन्त्यः। गच्छन्ति। अनिविशमानाः। इन्द्रः। या आपः। वज्री। वर्षिता। व्यलिखद् वज्रेण भित्त्वा निरगमयत्। ताः। आपः। देवीः। इह। माम्। रक्षन्तु ॥१॥

Pet. :—With the ocean at their head they come from the midst of the heavenly sea, pure, never resting : Indra with his thunderbolt has ploughed up a path for them—may these divine waters protect me.

---

या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः ।
समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु ॥२॥

याः । आपः । दिव्याः । उत । वा । स्रवन्ति । खनित्रिमाः । उत । वा ।
याः । स्वयम्ऽजाः । समुद्रऽअर्थाः । याः । शुचयः । पावकाः ।
ताः । आपः । देवीः । इह । माम् । अवन्तु ॥२॥

सायणः—याः आपः दिव्या अन्तरिक्षभवाः सन्ति । उत वा अपि च या आपः नद्यादिगताः सत्यः स्रवन्ति गच्छन्ति याश्च खनित्रिमाः खननेन निर्वृत्ताः । उत वा अपि च याः स्वयंजाः स्वयमेव प्रादुर्भवन्त्यः समुद्र एवार्थो गन्तव्यो यासां ताः समुद्रार्थाः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यश्च भवन्ति ता आपो मामवन्त्विति ॥२॥

वेङ्कटमाधवः—याः । आपः । अन्तरिक्ष्याः । याश्च नद्यः । स्रवन्ति । खनित्रिमाः कूप्याः । उत । वा । यास्तु । अप्रयत्नजाता निम्नेषु देशेषु । समुद्रो गन्तव्यो यासां समुद्रार्था नादेयो । वजलन्त्य. । शोधयित्र्यः ॥२॥

Pet. —The waters of the sky, the waters of the rivers, the waters of the wells; the bright and cleansing waters, whose goal is the sea—may these divine waters protect me.

---

यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु ॥३॥

यासाम् । राजा । वरुणः । याति । मध्ये । सत्यानृते इति । अवऽपश्यन् ।
जनानाम् । मधुऽश्चुतः । शुचयः । याः । पावकाः । ताः । आपः ।
देवीः । इह । माम् । अवन्तु ॥३॥

सायणः—वरुणो यासामपां राजा स्वामी मध्ये मध्यमलोके याति गच्छति । किं कुर्वन् । जनानां प्रजानां सत्यानृते सत्यं च अनृतं च अवपश्यन् जानन् इत्यर्थः । या आपः मधुश्चुतः रसं क्षरन्त्यः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यः ता आपो देव्यो मा रक्षन्त्विति ॥३॥

Pet —In the midst of them goes Varuna the King marking truth and falsehood of men, they so pure and bright, dropping honey—may these divine waters protect me.

---

यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति ।
वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ॥४॥
यासु । राजा । वरुणः । यासु । सोमः । विश्वे । देवाः । यासु । ऊर्जम् ।
मदन्ति । वैश्वानरः । यासु । अग्निः । प्रऽविष्टः ताः । आपः ।
देवीः । इह । माम् । अवन्तु ॥४॥

*सायणः*—अपां राजा वरुणो यास्वप्सु वर्तते । सः कः । सोमः यास्वप्सु वर्तते । यास्वप्सु स्थिताः विश्वे सर्वे देवा ऊर्जमन्नं मदन्ति । वैश्वानरः अग्निर्यासु प्रविष्टः ता आपो देव्य इह स्थितं मामवन्तु ॥४॥

*वेङ्कटमाधवः*—यासु । राजा । वरुणः । यासु च । सोमः । विश्व एव च । देवाः स्थिताः । यासु । ऊर्जम् । प्रतिमाद्यन्ति । वैश्वानरः । यासु । अग्निः । प्रविष्टः ॥४॥

Pet.:—There is Varuna the King, there is Soma, there all the gods find strength : Agni, the friend of man, goes down into them—may these divine waters protect me.

---

## 20—VII—71

वसिष्ठ ऋषिः । त्रिष्टुप् छन्दः । अश्विनौ देवते ।

अप स्वसुरुषसो नग्जिहीते रिणक्ति कृष्णीररुषाय पन्थाम् ।
अश्वामघा गोमघा वां हुवेम दिवा नक्तं शरुमस्मद्युयोतम् ॥१॥
अप । स्वसुः । उषसः । नक् । जिहीते । रिणक्ति । कृष्णीः । अरुषाय ।
पन्थाम् । अश्वऽमघा । गोऽमघा । वाम् । हुवेम । दिवा । नक्तम् ।
शरुम् । अस्मत् । युयोतम् ॥१॥

*सायणः*—स्वसुः स्वसृस्थानीयाया उषसः सकाशान्नग्नक्तं रात्रिरप जिहीते अपगच्छति । तस्या अवकाशं दत्त्वा स्वयमपगतेत्यर्थः । 'स्वसा स्वस्रे ज्यायस्यै योनिमारैक्' (ऋ. 1–124–8) इत्युक्तम् । कृष्णीः कृष्णवर्णा रात्रिररुषायारोचमानायाह्ने सूर्याय वा पन्थां पन्थानं मार्गं रिणक्ति रेचयति । यस्मादेवं तस्माद्युवयोरागमनसमयत्वात् हे अश्वामघाश्वधनौ हे गोमघा गोधनौ । उभयोः प्रदातारावित्यर्थः । ईदृशौ वां युवां हुवेम स्तुमः । आह्वयामः । दिवा नक्तं सर्वदा शरुं हिंसकमस्मदस्मत्तो युयोतम् पृथक्कुरुतम् ॥१॥

वेङ्कटमाधवः—स्वसुः। उषस आगमनाय। ननु नगिति रात्रिमाह सा। अवगच्छति। "रुशद्वत्सा रुशती श्वेत्यागात्।" इत्युक्तम्। रेचयति। पन्थानाम्। रात्रिः। आरोचमानायादित्याय। अस्मिन् काले वयमश्वधनौ! गोधनौ! वाम्। हुवेम। दिवा। नक्तं च। अस्मत्तः। हिंसकम्। पृथक् कुरुतम् ॥१॥

Grif.:—The night retireth from the Dawn her sister; The Dark one yieldeth to the Red her pathway.
Let us invoke you rich in steeds and cattle: by day and night keep far from us the arrow.

---

उपायातं दाशुषे मर्त्याय रथेन वाममश्विना वहन्ता।
युयुतमस्मदनिरामभीवां दिवानक्तं माध्वी त्रासीथां नः ॥२॥

उपऽआयातम्। दाशुषे। मर्त्याय। रथेन। वामम्। अश्विना।
वहन्ता। युयुतम्। अस्मत्। अनिराम्। अमीवाम्। दिवा।
नक्तम्। माध्वी इति। त्रासीथाम्। नः ॥२॥

सायणः—हे अश्विनौ युवामुपायातम् उपागच्छतमस्मदाह्वानं प्रति। किमर्थम्। दाशुषे हविषां दात्रे यजमानाय। तदर्थं रथेन वामं वननीयं धनं वहन्ता वहन्तौ। अस्मदस्मत्तो युयुतं पृथक् कुरुतम्। किम्। अनिराम्। इरान्नम्। *तदभाववद्दारिद्र्यमित्यर्थः। अमीवाम् रोगं च। हे माध्वी मधुमन्तौ युवां नोऽस्मान् दिवा नक्तं सर्वदा त्रासीथा रक्षतम् ॥२॥

वेङ्कटमाधवः—उपगच्छतम्। दाशुषे। यजमानाय। रथेन। धनम्। अश्विनौ! वहन्तौ। पृथक् कुरुतम्। अस्मत्तः। अनिरामनतिप्राणनकर्मोश्वासकारिण्यशक्तिरनिरा। अमीवा च रोगविशेष औदरः। दिवा। नक्तं च। हे वसुमन्तौ! अस्मान्। रक्षतम् ॥२॥

Grif.:—Bearing rich treasure in your car, O Aśvins come to the mortal who presents oblation.
Keep at a distance penury and sickness; Lovers of Sweetness, day and night preserve us.

---

*आदर्शे तदन्नदारिद्र्यमित्यर्थ इति पाठः।

आ वां रथमवमस्यां व्युष्टौ सुम्नायवो वृषणो वर्तयन्तु ।
स्यूमगभस्तिमृतयुग्भिरश्वैराश्विना वसुमन्तं वहेथाम् ॥३॥

आ । वाम् । रथम् । अवमस्याम् । विऽउष्टौ । सुम्नऽयवः । वृषणः । वर्तयन्तु । स्यूमगभस्तिम् । ऋतयुक्ऽभिः । अश्वैः । आ । अश्विना । वसुमन्तम् । वहेथाम् ॥३॥

*सायणः*—अवमस्यामासन्नायां व्युष्टौ व्युच्छन्त उषसि वा युवयो रथं सुम्नायवः सुखेन योजयन्तोऽश्वा वृषणो वर्षका युवामावर्तयन्तु । स्यूमगभस्तिं सुखरश्मिं स्यूतरश्मिं वसुमन्तं प्रदेयधनयुक्तं रथं हे अश्विनाश्विना।वृतयुग्भिरुदकयुक्तैरश्वैरुदकप्रदैरश्वैरावहेथाम् ॥३॥

*वेङ्कटमाधवः*—आवर्तयन्तु । वाम् । रथम् । अवमस्याम् । उषसि अवमाद्यतनी । सुखमिच्छन्तः पुमास ऋत्विजः । अनुस्यूतरश्मिम् । यजुर्योगिभिः । अश्वैः । आवहेथाम् । अश्विनौ । वसुमन्तं रथम् ॥३॥

Grif. :—May your strong horses, seeking bliss, bring hither your chariot at the earliest flush of morning.
With coursers yoked by Law drive hither, Aśvins, your car whose reins are light, laden with treasure.

---

यो वां रथो नृपती अस्ति वोळ्हा त्रिवन्धुरो वसुमाँ उस्रयामा ।
आ न एना नासत्योप यातमभि यद्वां विश्वप्स्न्यो जिगाति ॥४॥

यः । वाम् । रथः । नृपती इति नृऽपती । अस्ति । वोळ्हा । त्रिऽवन्धुरः । वसुऽमान् । उस्रऽयामा । आ । नः । एना । नासत्या । उप । यातम् । अभि । यत् । वाम् । विश्वऽप्स्न्यः । जिगाति ॥४॥

*सायणः*—हे नृपती नृणां यजमानानां पालकावश्विनौ वा युवयोर्यो रथो वोळ्हा युवयोर्वाहकोऽस्ति सर्वदा सन्निहितो वर्तते। कीदृशोऽसौ। त्रिबन्धुरः सारथ्यधिष्ठानस्थानत्रयोपेतो वसुमान् धनवानुस्रयामोस्रं दिवसं प्रति गन्ता । एना एतेन रथेन हे नासत्याश्विनौ नोऽस्मानुपायातम् । यद्रथो यश्च रथो वां विश्वप्स्न्यो व्याप्तरूपोऽभि जिगाति अभिगच्छति। अथवा। यद्यस्माद्विश्वप्स्न्यो वसिष्ठो वां जिगाति स्तौति अत उपायातम् ॥४॥

*वेङ्कटमाधवः*—यः । वाम् । रथः । नृपती । भवन्ति । वोळ्हा । बन्धुरं । फलकासंघाटस्त्रिबन्धुरः । वसुमान् । उत्सरणशीलगमनः । तेनानेन । अस्मान् ।

इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥६॥

इयम् । मनीषा । इयम् । अश्विना । गीः । इमाम् । सुऽवृक्तिम् ।
वृषणा । जुषेथाम् । इमा । ब्रह्माणि । युवऽयूनि । अग्मन् ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

*सायणः*—*हे अश्विनाविय मनीषा स्तुतिर्युवयोः । कृतेति शेषः । तदेवादरार्थं पुनरुच्यते । इयं गीः स्तुतिः कृता । हे वृषणा कामानां वर्षकाविमामस्मत्कृतां सुवृक्तिं शोभनां स्तुति जुषेथाम् सेवेथाम् । इमेमानि ब्रह्माणि कर्माणि स्तुतिरूपाणि युवयूनि युवां कामयमानानि सन्त्यग्मन् गच्छन्तु युवाम् । यूयं पातेति सिद्धम् ॥६॥

*वेङ्कटमाधवः*—(इयं मनीषा)

Grif. :—This is the thought, this is the song, O Aśvins : accept this hymn of ours, ye Steers, with favour.
My these our prayers addressed to you come nigh you.
Preserve us evermore, ye Gods with blessings.

---

## 21—VII—86

वसिष्ठ ऋषिः । त्रिष्टुब् छन्दः । वरुणो देवता ।

धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥१॥

धीरा । तु । अस्य । महिना । जनूंषि । वि । यः । तस्तम्भ । रोदसी इति । चित् । उर्वी इति । प्र । नाकम् । ऋष्वम् । नुनुदे ।
बृहन्तम् । द्विता । नक्षत्रम् । पप्रथत् । च । भूम ॥१॥

*सायणः*—अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना नु क्षिप्रं धीरा धीराणि धैर्यवन्ति भवन्ति । यो वरुण उर्वी विस्तीर्णे रोदसी चिद् द्यावापृथिव्यावपि वि तस्तम्भ विविधं स्वकीये स्थाने स्थिते अकरोत् । यश्च बृहन्तं

*इयमृक् आदर्शे 7-70-7 इत्यत्र व्याख्यातत्वात् केवलं इयं मनीषेति षष्ठी गता इत्येतावान्निर्देशः ।

महान्तं नाकम् आदित्यं नक्षत्रं चर्ष्वं दर्शनीयं द्विता द्वैधं प्र नुनुदे प्रेरयति स्म। अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति द्विप्रकारः। भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान् तस्यास्य वरुणस्येत्यन्वयः ॥१॥

वेङ्कटमाधवः—धीरा। स्थिराण्यविचलानि। वरुणस्य। महत्त्वेन। सर्वाणि जातानि भूतानि। यः। विस्तीर्णे द्यावापृथिव्यौ। व्यस्तद्विधमान्। प्रणुनुदे च। तृतीयं लोकमादित्य वा। दर्शनीयम्। महान्तं सोमं वरुणो दिवा। नक्षत्रम्। पृथिव्याम्। च भूतजातं। द्वैधम्। पप्रथ उभयत्र प्रथितं करोति ॥१॥

Mm. :—Wise, surely, through his might is his creation,
Who stemmed asunder spacious earth and heaven;
He pushed the sky the bright and glorious,
And stretched the starry sky and earth asunder.

Pet. :—Our tribes by the strength of Him, who fixed apart the two great firmaments, who rolled out the wide and lofty sky with all its stars, and stretched out the earth.

Ren. :—The generations are wise, thanks to the power of this (god),
Who supported, while separating them, the Sky and the Earth, though vast.
He has pushed away on high the lofty firmament,
He (creating) the star-studded two-faced vault, has also spread out the earth.

---

उत स्वया तन्वा३ सं वदे तत्कदा न्व१न्तर्वरुणे भुवानि।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् ॥२॥

उत। स्वया। तन्वा। सम। वदे। तत्। कदा। नु। अन्तः। वरुणे। भुवानि। किम्। मे। हव्यम्। अहृणानः। जुषेत। कदा। मृळीकम्। सुऽमनाः। अभि। ख्यम् ॥२॥

सायणः—वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति। उतेति विचिकित्सायाम्। उत किं स्वया तन्वा स्वीयेनात्मीयेन शरीरेण संवदे सह्वदनं करोमि। आहोस्वित् तत्तेन वरुणेन सह संवदे। कदा नु खलु वरुणे देवेऽन्तर्भुवानि अन्तर्भूतो भवानि। वरुणस्य चित्ते संलग्नो भवानीत्यर्थः। अपि च मे मदीयं हव्य स्तोत्रं हविर्वाहृणानोऽक्रुध्यत् वरुणः किं केन हेतुना जुषेत सेवेत।

सुमनाः शोभनमनस्कः सन्नहं कदा कस्मिन्काले मृळीकं सुखयितारं वरुणमपि रव्यम् अभिपश्येयम् ॥२॥

*वेङ्कटमाधवः*—अपि च । आत्मीयेन पुत्रेण । सहाहम् । एतत् । वदामि । कदाहम् । वरुणस्य । अन्तः । भवानीति । किञ्च । मे । हव्यं वरुणः । अक्रुद्धः । जुषेतच्च । कदा चाहम् । सुखयितारम् । अहं च सुमनाः । अभिपश्यामि ॥२॥

Mm. :—With my own heart I commune, how I ever
Can now approach Varuṇa's sacred presence;
Will he accept my gift without displeasure ?
When may I fearless, look and find him gracious ?

Pet. :—I say to may own heart, when shall I come into Varuṇa's presence ? Will he not be angry with me ? Will he receive my prayer ? when shall I see his mercy and rejoice ?

Ren. :—And then I hold counsel with myself :
When shall I be intimate with Varuṇa ?
Will he accept my oblation without irritation ?
When shall I contemplate his grace with a contented heart ?

---

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥३॥

पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपो इति । एमि । चिकितुषः ।
विऽपृच्छम् । समानम् । इत् । मे । कवयः । चित् । आहुः ।
अयम् । ह । तुभ्यम् । वरुणः । हृणीते ॥३॥

*सायणः*—हे वरुण तदेनः पापं पृच्छे त्वां पृच्छामि । दिदृक्षु । छान्दसः सुलोपः । द्रष्टुमिच्छन्नहम् । येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि । पृष्टः संस्तत्पापं कथय । अहं विपृच्छं विविधं प्रष्टुं चिकितुषो विदुषो जनानुपो एमि उपागाम् । ते कवयश्चित् क्रान्तदर्शिनो जनाश्च मे मह्यं समानमित् समानमेवैक-रूपमेवाहुः अकथयन् । यदाहुस्तदाह, हे स्तोतः तुभ्यमयं हायमेव वरुणो हृणीते क्रुध्यतीति । अतः क्रोधं परित्यज्यास्मात्पाशेभ्यो मोचय ॥३॥

*वेङ्कटमाधवः*—पृच्छामि । वरुण । तत् । पापमहम् । दिदृक्षुः सर्वं भूतं यो मां मद्दिदृक्षयागच्छति तं पृच्छामि तथाहमेवान्यान् । चिकितुषो जनान् । उपगच्छामि ।

विविधं च पृच्छामि । तत्र च सर्व एव । कवयः । समानम् । एवम् । मम । आहुः । अयम् । ह । तुभ्यम् । वरुणः । क्रुध्यतीति ॥३॥

Mm. :—Fain to discover this my sin, I question,
I go to these who know and ask for counsel,
The same reply I get from all the sages,
'T is Varuṇa indeed whom thou hast angered.

Pet. :—I ask myself what my sin was. I try to find it out; I go to those that know, to ask of them: one answer only the wise men give me, and say, it is Varuṇa that is angry with thee.

Ren. :—I interrogate myself, O Varuṇa, about my sin, desirous to see.
I approach those who understand, to ask them.
Now all the Sages say the same thing:
"This Varuṇa is irritated against thee"

---

किमाग॑ आस वरुण ज्येष्ठं॒ यत्स्तो॒तारं॒ जिघां॑ससि॒ सखा॑यम् ।
प्र तन्मे॑ वोचो दूळभ स्वधा॒वोऽव॑ त्वाने॒ना नम॑सा तु॒र इ॑याम ॥४॥

किम् । आगः॑ । आ॒स॒ । व॒रु॒ण॒ । ज्येष्ठ॑म् । यत् । स्तो॒तार॑म् । जिघां॑ससि ।
सखा॑यम् । प्र । तत् । मे॒ । वो॒चः॒ । दु॒ः॒ऽद॒भ॒ । स्व॒धा॒ऽवः॒ । अव॑ ।
त्वा॒ । अ॒ने॒नाः । नम॑सा । तु॒रः । इ॒या॒म॒ ॥४॥

सायणः—हे वरुण ज्येष्ठमधिकं किमाग आस कोऽपराधो मया कृतो बभूव । यद्येनागसा सखायं मित्रभूतं सन्तं स्तोतारं जिघांससि हन्तुमिच्छसि । हे दूळभ दुर्दभ अन्यैर्बाधितुमशक्य स्वधावोऽन्नवन् बलवन् हे वरुण तदागो मे मह्यं प्र वोचः प्रब्रूहि । एवं सति तस्य प्रायश्चित्तं कृत्वानेना अपापः सन्नहं तुरस्त्वरमाणः शीघ्रो नमसा नमस्कारेण हविषा वा त्वामवेयामुपगच्छेयम् ॥४॥

वेङ्कटमाधवः—किम् । मम श्रेष्ठतमम् । पापम् । आस । वरुण । यत् । मम । स्तोतारम् । जिघांससि मारयितुमिच्छसि । सखायम् । प्रब्रूहि । तत् पापम् । मम । हे दुर्दम्भ । बलवन् । उक्ते तस्मिन् पापे प्रायश्चित्तं कृत्वा अनेनाः सन् । त्वाम् । अभिमुखं गच्छामि । हविषा सह । त्वरमाणः ॥४॥

Mm. :—What was my chief defect that thou wilt slay me,
Thy oldest friend who always sang thy praises?
Tell me unconquered Lord, and I shall quickly
Fall down before thee, sinless, with my homage.

Pet. :—What is the great evil I have done, O Varuṇa that thou goest about to slay thy worshipper and friend ? Declare it to me, mighty and glorious one; then shall I, sinless, come quickly to thee with adoration.

Ren. :—What then has been, O Varuṇa, that extreme crime,
That thou desirest to lose thy friend, the maker of praises ?
Reveal that to me, (god) impossible to deceive, strong in thy laws,
I would fain, free from sin, quickly pray for mercy !

---

अर्व द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।
अर्व राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥५॥

अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या । वयम् । चकृम । तनूभिः । अव । राजन् । पशुऽतृपम् । न । तायुम् । सृज । वत्सम् । न । दाम्नः । वसिष्ठम् ॥५॥

सायणः—हे वरुण पित्र्या पितृतः प्राप्तानि नोऽस्मदीयानि द्रुग्धानि द्रोहान् बन्धनहेतुभूतानवसृज विमुञ्च अस्मत्तो विश्लेषय। वयं च या यानि द्रोहजातानि तनूभिः शरीरैश्चकृम कृतवन्तः स्म तानि चाव सृज हे राजन् राजमान वरुण पशुतृपं न तायुं स्तैन्यप्रायश्चित्तं कृत्वावसाने घासादिभिः पशूनां तर्पयितारं स्तेनमिव दाम्नो रज्जोर्वत्सं न वत्समिव च वसिष्ठं मां बन्धकात्पापादव सृज विमुञ्च ॥५॥

वेङ्कटमाधवः—पितुरागतान्। अस्माकम्। द्रोहात्। गर्भस्थेष्वस्मासु यदेनः पिता चकार ततोऽस्मासु संक्रान्तानि पापानि। अवसृज। तथा वयम्। एव। यानि। कृतवन्तः। शरीरैः। यथा स्तेनः। प्रायश्चितं कुर्वाणः। तृणपशुकोऽवसृज्यते यवसे प्रदर्शिते यदि पशवो भक्षयन्ति ततोऽवसृज्यते। तथा अवसृज। वत्सम्। इव च। दाम्नः। वसिष्ठम् ॥५॥

Mm. :—Loose us from sins committed by our fathers,
From others too which we ourselves committed,
As from a calf, take from us all our fetters,
Loose us as thieves are loosed that lifted cattle.

Pet. :—Loose from me the sins of fathers and those which I myself have done : loose me, O king, as a thief who has wrought atonement; loose me as a calf from the snare of sin.

Ren. :—Release us from the offences of our fathers,
As also from those we have, ourselves, committed !
O King, release Vasistha, who (is treated) as
A cattle-lifting thief, as a calf with the rope !

---

न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥६॥

न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः ।
विऽभीदकः । अचित्तिः । अस्ति । ज्यायान् । कनीयसः ।
उपऽआरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता ॥६॥

सायणः—हे वरुण स स्वो दक्षः पुरुषस्य *स्वरूपवद्बलं पापप्रवृत्तौ कारणं न भवति । तर्हि ध्रुतिः स्थिरोत्पत्तिसमय एव निर्मिता दैवगतिः कारणम् । ध्रुगति-स्थैर्ययोरिति धातुः । सा च ध्रुतिर्वक्ष्यमाणरूपा । सुरा प्रमादकारिणी मन्युः क्रोधश्च गुर्वादिविषयः सन्ननर्थहेतुः । विभीदको द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुषं प्रेरयन्ननर्थहेतुर्भवति । अचित्तिरज्ञानमविवेककारणम् । अत ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसोऽल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तावुगार उपागते समीपे नियन्तृत्वेन स्थितो ज्यायानधिक ईश्वरोऽस्ति । स एव तं पापे प्रवर्तयति । तथा चाम्नातम् । 'एष ह्येवासाधु कर्म कारयति तं यमधो निनीषति' (कौ० उ० 3-8) इति । एवं च सति स्वप्नश्च न स्वप्नोऽप्यनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इदिति पूरकः । स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्त इति । अतो ममापराधो दैवागत इति हे वरुण त्वया क्षन्तव्य इति भावः ॥६॥

वेङ्कटमाधवः—न । तत् । स्वम् । बलम् । वरुण ! अपि तर्हि ध्रुतिः । सा भवति ध्रुतिरिति ध्रुवां नियतिमाह न पुरुषः स्वैरं तदनुतिष्ठति दैवाभिपन्नोऽनुतिष्ठतीत्यर्थः । सुरा । मन्युश्च ब्राह्मणादीना हननिमित्तभूतः । विभेदकश्च देवनहेतुः । अचित्तिश्च

---

*स्वभूतं तद्बलम् इत्यादर्शः ।

मान्यामान्यहेतुः । अस्ति । ज्यायान् देवं नाम । कमनीयः । समीपे तथा । स्वप्नः अपि पुरुषस्य । अनिरर्थकस्य । मिश्रयिता भवति ॥६॥

Mm. :—'T was not our own free will, 't was strong temptation,
Or thoughtlessness, strong drink, or dice or passion,
The old was near to lead astray the younger,
Nay, sleep itself suggest unrighteous action.

Pet. :—It was not my own strength, O Varuṇa; it was fate, wine, anger, dice, want of thought :..........; even sleep makes me to sin.

Ren. :—O Varuna, the fault has not been of my intent :
It was liquour, anger, dice (and) inadvertence.
The eldest answers for the youngest.
Even sleep does not abolish the wrong

---

अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥७॥

अरम् । दासः । न । मीळ्हुषे । कराणि । अहम् । देवाय । भूर्णये । अनागाः । अचेतयत् । अचितः । देवः । अर्यः । गृत्सम् । राये । कविऽतरः । जुनाति ॥७॥

वेङ्कटमाधवः—मीळ्हुषे सेक्त्रे कामानां वर्षित्रे भूर्णये जगतो भर्त्रे देवाय दानादिगुणयुक्ताय वरुणायानागास्तत्प्रसादादपापः सन्नहमरमलं पर्याप्तं कराणि परिचरणं करवाणि दासो न यथा भृत्यः स्वामिने सम्यक् परिचरति तद्वत् । अर्यस्स्वामी स च देवोऽचितो *अज्ञानस्मानचेतयत् प्रज्ञापयतु चेतयतु । गृत्सं स्तोतारं च कवितरः प्राज्ञतरो देवो राये धनाय धनप्राप्त्यर्थं जुनाति ,जुनातु प्रेरयतु ॥७॥

वेङ्कटमाधवः—पर्याप्तं । कर्म । दासम् । इव स्वामिने । इ । सेक्त्रे वरुणाय । करोमि । देवाय । क्षिप्रकारिणे । अपापः । ज्ञापयतु । अज्ञान् । देवः । स्वामिम् । स्तोतारम् । धनाय । अत्यन्तं प्राज्ञः । प्रेरयति ॥७॥

Mm. .—Let me do service to the bounteous giver,
The angry god, like to a slave, but sinless '
The gracious god gave wisdom to the foolish,
And he, the wiser, leads the wise to riches.

---

*अजानतो इत्यादर्शः ।

Pet. :—Free from sin, I will worship, as his servant, a forgiving and glorious God; this gracious God makes wise the simple, and, wiser than the wise man, helps him to all good.

Ren. :—I desire to dedicate myself to thee, as the slave to his master,
Thee, the ferocious god, I without crime.
The noble god has made the thoughtless think;
And he, the excellent artist, speeds the fervent to riches.

---

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥८॥

अयम् । सु । तुभ्यम् । वरुण । स्वधाऽवः । हृदि । स्तोमः । उपऽश्रितः ।
चित् । अस्तु । शम् । नः । क्षेमे । शम् । ऊं इति । योगे । नः । अस्तु ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥८॥

सायणः—हे स्वधावोऽन्नवन्वरुण तुभ्यं त्वदर्थं क्रियमाणोऽयमेतत्सूक्तात्मकं स्तोमः स्तोत्रं हृदि त्वदीये हृदये तु सुष्ठूपश्रित उपगतः समवेतोऽस्तु चिदिति पूरकः । अप्राप्तस्य प्रापणं योगः, प्राप्तस्य रक्षणं क्षेमः । नोऽस्मदीये क्षेमे रक्षणे शत्रुपद्रवाणां शमनमस्तु योगे च नोऽस्मदीये प्रापणे शमु शमनमेवास्तूपद्रवाणाम् । हे वरुणादयो देवा नोऽस्मान्सर्वदा स्वस्तिभिरविनाशैः पात रक्षत ॥८॥

वेङ्कटमाधवः—अयम् । तुभ्यम् । वरुण । बलवत् । हृदि । स्तोमः । सुष्ठु । उपश्रितः । भवतु । शंकरश्चायम् । अस्माकम् । क्षेमे । भवतु । शम् । एव । अस्मदीये योगे ॥८॥

Mm. :—O let this song, god Varuṇa, apporach thee,
And let it reach thy heart, O Lord and master!
Prosper thou us in winning and in keeping,
Protect us, gods, for ever more with blessing!

Pet. :—O glorious Varuna, may this my song go up into thy heart: bless me resting, bless me working; and do you, gods, always protect us with your blessings.

Ren :—O Varuna, (god) strong in thy laws, may this praise,
Enter thy heart, taking shelter therein!
May we have luck in peace, luck in war!
Protect us always with thy benedictions!

---

## 22—VII—88.

वसिष्ठ ऋषिः । त्रिष्टुप्छन्दः । वरुणो देवता ।

प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहन्तम् ॥१॥

प्र । शुन्ध्युवम् । वरुणाय । प्रेष्ठाम् । मतिम् । वसिष्ठ । मीळ्हुषे ।
भरस्व । यः । ईम् । अर्वाञ्चम् । करते । यजत्रम् । सहस्रऽमघम् । वृषणम् । बृहन्तम् ॥१॥

*सायणः*—ऋषिरात्मानमेव प्रत्यक्षीकृत्य स्तुतौ नियुङ्क्ते । हे वसिष्ठ त्वं मीळ्हुषे सेक्त्रे वरुणाय शुन्ध्युवं शोधयित्रीं यद्वा स्वत एव शुद्धां प्रेष्ठां प्रियतमां मतिं मननीयामीदृशीं स्तुतिं प्र भरस्व प्रहर प्रापय । यो वरुणः ईमेनं सूर्यमर्वाञ्चमस्मदभिमुखं करते अन्तरिक्षे करोति तस्मै वरुणायेत्यन्वयः । कीदृशं सूर्यम् । यजत्रं यष्टव्यं सहस्रामघं बहुधनं वृषणं कामानां वर्षकं बृहन्तं महान्तम् ॥१॥

*वेङ्कटमाधवः*—प्रभरस्व । शोधयित्रीं पापकृताम् । वरुणाय । प्रियतमाम् । स्तुतिम् । वसिष्ठ । सेक्त्रे । यम् । एनमादित्यम् । अभिमुखम् । कुरुते । यष्टव्यम् । बहुधनम् । वृषणम् । महान्तम् 'दिवि सूर्यमदधात्' इत्युक्तम् ॥१॥

Pet. :—Bring O Vasistha, a pure and acceptable hymn to the gracious Varuṇa, who drives towards us that holy and mighty Bull with its thousand boons.

---

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्व१र्यदश्मन्नधिपा उ अन्धोऽभि मा वपुर्दृशये निनीयात् ॥२॥

अध । नु । अस्य । सम्ऽदृशम् । जगन्वान् । अग्नेः । अनीकम् ।
वरुणस्य । मंसि । स्वः । यत् । अश्मन् । अधिऽपाः । ऊं इति ।
अन्धः । अभि । मा । वपुः । दृशये । निनीयात् ॥२॥

*सायणः*—अथाधुना अस्य वरुणस्य संदृशं संदर्शनं नु क्षिप्रं जगन्वान् गतवानहमग्नेरनीकं ज्वालासंघं मंसि स्तवानि । तं वरुणं यष्टुमिति शेषः । यद् यदा वरुणः स्वः सुखकरमश्मन् अश्मनि अभिषवार्थे पाषाणे अवस्थितम् अभिषुतमित्यर्थः । ईदृशमन्धः सोम लक्षणमन्नमधिपाः अधिकं-पाता भवेत् ।

छान्दसः षष्ठ्यभावः। उ इति पूरकः। तदानीं मा मां वपुः शरीरं स्वकीयम्। वपुरिति रूपनाम। प्रशस्तं रूपं वा दृशये दर्शनार्थं अपि निनीयात् अभिप्रापयेत् ॥२॥

वेङ्कटमाधवः—अस्य। सन्दर्शनम्। प्राप्तोऽहम्। अथ। क्षिप्रं तस्य यागार्थम्। वरुणस्य। अग्नेः। ज्वालालक्षणमनीकम्। सामिधेनीभिः स्तौमि। कल्याणम्। अभिषवग्राव्णि निधीयमानम्। यदा। अन्धः सोमलक्षणम्। वरुणोऽधिपाता भवति। तदानीमात्मीयं रूपम्। माम्। प्रति। नयतु। मम दर्शनाय ॥२॥

---

आ यद्रुहाव वरुणश्च नावं प्र यत्समुद्रमीरयाव मध्यम्।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम् ॥३॥

आ। यत्। रुहाव। वरुणः। च। नावम्। प्र। यत्। समुद्रम्। ईरयाव। मध्यम्। अधि। यत्। अपाम्। स्नुऽभिः। चराव। प्र। प्रऽईङ्खे। ईङ्खयावहै। शुभे। कम् ॥३॥

सायणः—यद् यदा वरुणे प्रसन्ने सति अहं वरुणश्चोभौ नावं द्रुममयीं तरणसाधनभूतामा रुहाव उभावारूढौ बभूविव। तां च नावं यद्यदा समुद्रं मध्यम् समुद्रस्य मध्यं प्रति प्र ईरयाव प्रकर्षेण गमयाव। यद् यदा च अपामुदकानामधि उपरि स्नुभिः गन्त्रीभिः अन्याभिरपि नौभिश्चराव वर्तावहै, तदानीं शुभे शोभार्थं प्रेङ्खे नौरूपायां दोलायामेव प्र ईङ्खयावहै निम्नोन्नतैस्तरङ्गैरितश्चेतश्च प्रविचलन्तौ संक्रीडावहै। कमिति पूरकः। यद्वा क्रियाविशेषणम्। कं सुखं यथा भवति तथेत्यर्थः ॥३॥

वेङ्कटमाधवः—आ रुहाव। यद्यहम्। वरुणः। च। नावम्। आरोहानन्तरम् च तां मध्यस्थितम्। समुद्रं प्रति। यदि। प्रेरयाव। समुद्रमध्यस्थानामपाम्। उपरि। स्थितैः समुत्थितैरूर्मिभिः। यदि। चराव तं ते ता वरुणगृहं प्रति नेतुम् ॥३॥

Pet. :—When I, with Varuna, climbed into the boat, when we urged it through the mid-stream, when we rode on the backs of the waves, the God and I swung happily in that swing.

---

वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्यावस्ततनन्यादुषासः ॥४॥

वसिष्ठम् । ह । वरुणः । नावि । आ । अधात् । ऋषिम् । चकार । सुऽअपाः ।
महःऽभिः । स्तोतारम् । विप्रः । सुदिनऽत्वे । अह्नाम् । यात् । नु ।
द्यावः । ततनन् । यात् । उषसः ॥४॥

*सायणः*—एवं वसिष्ठेनात्मनोक्ते यद्वरुणेन कृतं तद्दर्शयति । वसिष्ठं ह वसिष्ठं खलु वरुणो नावि स्वकीयायामा अधात् आरोहयत् । तथा तमृषिमकरोत् महोभी रक्षणैः स्वपां स्वपसं शोभनकर्माणं चकार वरुणः कृतवान् । अपि च विप्रो मेधावी वरुणः अह्ना दिवसानां मध्ये सुदिनत्वे यत्फलत्वेन शोभनदिनत्वं तत्र स्तोतारम् । अस्थापयदिति शेषः । किं कुर्वन् । यात् यातो गच्छतो द्यावो दिवसान् यात् यातीः उषासः उषसोपलक्षिता रात्रीश्च नु क्षिप्रं ततनन् सूर्यात्मना विस्तारयन् ॥४॥

*वेङ्कटमाधवः*—[वसिष्ठं ह]······ऋषिम् । चकार । शोभनकर्मा । तेजोभिः । स्तोतारम् । मेधावी । अह्नाम् । सुदिनत्वे सुदिनान्यह्नान्यस्मै चकारेत्यर्थः । यान्यहानि । द्यावः । ततनन् । यानि च उषसस्तेषामित्यह्नां मैत्री जनित्री प्रजानामित्यौषसो मन्त्रः, द्यावो दीप्तो देवः, *यादिति द्वितीया बहुवचनस्यादेशः* ॥४॥

Pet. :—Varuna put Vasistha in the boat, Varuṇa like a cunning workman by his strength made Vasiṣtha a prophet : the wise God, when the days were bright, made Vasiṣṭha his praiser, so long as the days and dawns endured.

---

क्व१ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा चित् ।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥५॥

क्व । त्यानि । नौ । सख्या । बभूवुः । सचावहे इति । यत् । अवृकम् ।
पुरा । चित् । बृहन्तम् । मानम् । वरुण । स्वधाऽवः । सहस्रऽ-
द्वारम् । जगम । गृहम् । ते ॥५॥

*सायणः*—हे वरुण त्यानि तानि पुरातनानि नौ आवयोः सख्या सख्यानि सखित्वानि क्व कुत्र बभूवुः । पुरा पूर्वस्मिन् काले अवृकम् अहिंस्यमात्यन्तिकं यत्सख्यमस्ति तत्सचावहे आवाम् सेवावहे । चिदिति पूरकः ।

अपि च हे स्वधावः अन्नवन्वरुण ते त्वदीयं गृहं जगम गच्छानि । लोडर्थे लिट् । कीदृशं गृहम् । बृहन्तं महान्तं मानम् । मान्त्यस्मिन् सर्वाणि भूतानीति मानम् सर्वस्य भूतजातस्य परिच्छेदकमित्यर्थः । सहस्रद्वारं बहुद्वारम् ॥५॥

वेङ्कटमाधवः—हे वरुण । क्व । तानि । आवयोः । सख्यानि । असवन्निति वरुणमपश्यन् । अभिगच्छेवहि । यथापुरम् । स्तेनवर्जितम् । यथापुरम् । चिदित्यु-पमार्थे । बृहन्तं बहूनर्थान् । अन्नवन्तम् । वरुण । बलवद् । सहस्रद्वारम् । गच्छाव । गृहम् । तव ॥५॥

Pet :—Where are those old kindnesses of ours, when we walked to-gether without hate; when O glorious Varuṇa, I entered thy great and holy house with its thousand doors?

---

य आपिर्नित्यो वरुण प्रियः सन्त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वन्तो यक्षिन्भुजेम यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥६॥

यः । आपिः । नित्यः । वरुण । प्रियः । सन् । त्वाम् । आगांसि । कृणवत् ।
सखा । ते । मा । ते । एनस्वन्तः । यक्षिन् । भुजेम । यन्धि । स्म ।
विप्रः । स्तुवते । वरूथम् ॥६॥

*सायणः*—हे वरुण यो वसिष्ठो नित्यः ध्रुव आपिर्बन्धुः औरसः पुत्र इत्यर्थः । यः पूर्वं प्रियः सन् त्वा प्रति आगांसि अपराधान् कृणवत् अकरोत् । स इदानीं ते तव सखा समानख्यानः प्रियोऽस्तु । हे यक्षिन्यजनीय वरुण ते तव स्वभूता वयम् एनस्वन्तः एनसा पापेन युक्ताः सन्तो मा भुजेन मा भुञ्जमहि । त्वत्प्रसादात्पापरहिता एव सन्तो भोगान् भुनजामहै । विप्रो मेधावी त्वं च स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वरूथमनिष्टनिवारकं वरणीयं वा गृहं यन्धि प्रयच्छ । स्मेति पूरकः ॥६॥

*वेङ्कटमाधवः*—यः । ज्ञातिः । नित्यनौरसे । वरुण । प्रिय । सन्तं च । त्वाम् । एनांसि । करोति तवानिष्टानि करोतीत्यर्थः । समानख्यानः । ते । अथ वसुरदाह । तेऽनागसा वयं तव स्वभूताः । मा । एनस्वन्तः । भुजेम पापफलम् । भुञ्जानम् । प्रयच्छ । मेधावी त्वम् । स्तुवते मह्यम् । ध्रुवं गृहम् ॥६॥

Pet. —I was thy close kinsman, Varuṇa, dear to thee, thy friend; but I have done evil against thee : I have sinned against thee; let me not suffer, O avenging God, defend me, for I call upon thee.

---

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्यस्मत्पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥७॥

ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियन्तः । वि । अस्मत् । पाशम् ।
वरुणः । मुमोचत् । अवः । वन्वानाः । अदितेः । उपऽस्थात् ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

*सायणः*—ध्रुवासु नित्यासु आसु दृश्यमानासु क्षितिषु भूमिषु क्षियन्तः निवसन्तो वयं हे वरुण त्वा त्वाम् । स्तुम इति शेषः । स च वरुणोऽस्मदस्मत्तः पाशं बन्धकं पापं वि मुमोचत् मोचयेत् । तथा अदितेः अखण्डनीयायाः पृथिव्याः उपस्थादुपस्थानात् अवः रक्षणं वरुणेन दत्तं वन्वानाः सभजमाना वयं स्याम । अन्यद् गतम् ॥७॥

*वेङ्कटमाधवः*—आसु । ध्रुवासु निर्गन्तुमशक्यासु । त्वेति सप्तमीबहुवचनस्याकारः कासुचित् । निवसन्तो वयमिदानीं भवामः । विमुमोक्तु । अस्मत्तः । पाशम् । वरुणः । गमनम् । याचमाना वयम् । अदितेः । उपस्थानिदानीम्, बध्नो दितेरुपस्थे तिष्ठति विमुक्तः स्वैरं गच्छतीति ॥७॥

Pet.:—O Varuna, loose my bonds from me, and bring me to dwell in that abiding city; send me help from inner heaven—and do you gods, always protect me with your blessings.

---

## 23—VIII—103.

वसिष्ठ ऋषिः । त्रिष्टुबुछन्दः, आद्यानुअनुष्टुप् । मण्डूकादेवताः ।

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥१॥

संवत्सरम् । । शशयानाः । ब्राह्मणाः । व्रतऽचारिणः । वाचम् । पर्जन्यऽजिन्विताम् । प्र । मण्डूकाः । अवादिषुः ॥१॥

*सायणः*—व्रतचारिणः व्रतं संवत्सरसत्रात्मकं कर्माचरन्तः ब्राह्मणाः । लुप्तोपममेतत् । एवंभूता ब्राह्मणा इव संवत्सरं शरत्प्रभृति आ वर्षर्तोरेकं संवत्सरं शशयानाः शिश्याना वर्षणार्थं तपश्चरन्त इव बिल एव सन्त एते मण्डूकाः पर्जन्यजिन्विता पर्जन्येन प्रीतां यया वाचा पर्जन्यः प्रीतो भवति तादृशीं वाचं प्र अवादिषुः प्रवदन्ति ॥१॥

यास्कः—'वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव, तं मण्डूका अन्वमोदन्त, स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव' (निरु. 9-6) इति। मण्डूका मज्जूका मज्जनान्मदतेर्वा मोदतिकर्मणो मन्दतेर्वा तृप्तिकर्मणो मण्डयतेरिति वैयाकरणा मण्ड एषामोक इति वा। मण्डो मदेर्वा मुदेर्वा तेषामेषा भवति।' (निरु. 9-5) ॥१॥

वेङ्कटमाधवः—संवत्सरम्। शिश्यानाः। ब्राह्मणाः। व्रतचारिणोऽनश्नन्तः। वाचम्। पर्जन्यप्रीताम्। प्रावादिषुः। मण्डूकाः। अत्र यास्कः, 'ब्राह्मणाः प्रवणादपि। वोपमार्थे स्याद्, ब्राह्मणा इव व्रतचारिण' इति ॥१॥

Ren.:—Having lain a year,
—(Like) Brahmins keeping their vows,—
The frogs raise their voice
(Which has been) roused by Parjanya.

---

दिव्या आपो अभि यदेनमायन् दृतिं न शुष्कं सरसी शयानम्।
गवामह न मायुर्वत्सिनीनां मण्डूकानां वग्नुरत्रा समेति ॥२॥

दिव्याः। आपः। अभि। यत्। एनम्। आयन्। दृतिम्। न।
शुष्कम्। सरसी इति। शयानम्। गवाम्। अह। न। मायुः।
वत्सिनीनाम्। मण्डूकानाम्। वग्नुः। अत्र। सम्। एति ॥२॥

सायणः—दिव्याः दिविभवाः आपः दृतिं न दृतिमिव शुष्कं नीरसं सरसी। महत्सरः सरसी। गौरादिलक्षणो ङीप्। सरस्याम्। 'सुपां सुलुक्' इति सप्तम्या लुक्। 'ईदूतौ च सप्तम्यर्थे' इति प्रगृह्यसंज्ञा। महति सरसि निर्जले घर्मकाले शयानं निवसन्तम् एवं मण्डूकगणं यत् यदा आयन् अभिगच्छन्ति तदा अत्र अस्मिन् वर्षणे पर्जन्ये वा सति वत्सिनीनां वत्सयुक्तानां गवां न मायुः गवां शब्द इव मण्डूकानां वग्नुः शब्दः समेति संगच्छते। यथा वत्सैः संगतासु गोषु महान् घोषो जायते तद्वद् वृष्टे पर्जन्ये महान् कलकलशब्दो जायत इत्यर्थः। अह इति पूरकः ॥२॥

वेङ्कटमाधवः—दिव्याः। आपः। अन्वायन्। यत्। एनं मण्डूकम्। दृतिम्। इव। शुष्कम्। सलिले महति सरसि। शयानम्। गवाम्। इव। शब्द। वत्सयुक्तानाम्। मण्डूकानाम्। शब्दः। अत्र पर्जन्ये वर्षासु वा। सङ्गच्छते। अहेति पूरणम् ॥२॥

Ren:—The moment the celestial waters reach the (frog)
Lying dried up like a leather-pouch in the pond,
The cries of the frogs unite,
With the lowing of the cows with their calves.

---

यदीमेनाँ उशतो अभ्यवर्षीत् तृष्यावतः प्रावृष्यागतायाम् ।
अक्खलीकृत्या पितरं न पुत्रो अन्यो अन्यमुप वदन्तमेति ॥३॥

यत् । ईम् । एनान् । उशतः । अभि । अवर्षीत् । तृष्याऽवतः । प्रावृषि ।
आऽगतायाम् । अक्खलीकृत्य । पितरम् । न । पुत्रः । अन्यः ।
अन्यम् । उप । वदन्तम् । एति ॥३॥

*सायणः*—उशतः कामयमानान् तृष्यावतः तृष्णावतः एनान् मण्डूकान् प्रावृषि वर्षर्तौ आगतायाम् आगते सति यत् यदा अभ्यवर्षीत् पर्जन्यो जलैरभिषिञ्चति । ईम् इति पूरणः । तदानीम् अक्खलीकृत्य । अक्खल इति शब्दानुकरणम् । अक्खलशब्दं कृत्वा पुत्रः पितरं न पितरमिव अन्यः मण्डूकः वदन्तं शब्दयन्तम् अन्यं मण्डूकं उप एति प्राप्नोति ॥३॥

वेङ्कटमाधवः—यदि । एनान् । कामयमानानुदकम् । अभिवर्षति पर्जन्यः । तृष्णायुक्तान् । प्रावृषि । आगतायाम् । अक्खलीकृत्येति शब्दानुकरणमाहुः । पितरम् । इव । पुत्रः । अन्यः । अन्यम् । उपगच्छति । वदन्तं शब्दायमानमिति ॥३॥

Ren:—At the rainy season's verge, when the rain
Falls on these (beings) desirous, thirsty,
One of them approaches the other who questions him
Uttering "akkhalā"—like a son (approaching) father.

---

अन्यो अन्यमनु गृभ्णात्येनोर् अपां प्रसर्गे यदमन्दिषाताम् ।
मण्डूको यदभिवृष्टः कनिष्कन् पृश्निः संपृङ्क्ते हरितेन वाचम् ॥४॥

अन्यः । अन्यम् । अनु । गृभ्णाति । एनोः । अपाम् । प्रऽसर्गे । यत् ।
अमन्दिषाताम् । मण्डूकः । यत् । अभिऽवृष्टः । कनिस्कन् ।
पृश्निः । सम्ऽपृङ्क्ते । हरितेन । वाचम् ॥४॥

सायणः—एनोः एनयोर्द्वयोर्मण्डूकयोः अन्यः मण्डूकः अन्यं मण्डूकमनुगम्य गृभ्णाति गृह्णाति । अपां उदकानां प्रसर्गे प्रसर्जने वर्षणे सति यत् यदा अमन्दिषातां हृष्टावभूताम् ; यत् यदा च अभिवृष्टः पर्जन्येनाभिषिक्तः कनिष्कन् । स्कन्दयतेर्यङ्लुगन्तस्य रूपम् । भृशं स्कन्दन्नुत्सवं कुर्वन् पृश्निः पृश्निवर्णः मण्डूकः हरितेन हरितवर्णेनान्येन मण्डूकेन वाचं संपृङ्क्ते संयोजयाति । उभावप्येकविधं शब्दं कुर्वाते । तदानीमन्योऽन्यमनुगृभ्णातीत्यन्वयः ॥४॥

वेङ्कटमाधवः—अन्यः । अन्यम् । अनयोर्मण्डूकयोः । अनुगम्य । गृह्णाति । अपाम् । प्रसर्गे । यदा । अमन्दिषाताम् । मण्डूकः । यदा मण्डूकं । अभिवृष्टः । शब्दं कुर्वन् । पृश्निवर्णः । सम्पृङ्क्ते । हरितवर्णेनान्येन । आत्मीयां वाचं सम्मिश्रयति ॥४॥

Ren :—Each of them salutes the other, when both of them—
Congratulate each other on the waters' discharge,
When the frog leaps about in the rain,
The speckled one mingles his voice with (that of) the green one.

---

यदे॑षाम॒न्यो अ॒न्यस्य॒ वाचं॑ शा॒क्तस्ये॑व॒ वद॑ति॒ शिक्ष॑माणः ।
सर्वं॒ तदे॑षां स॒मृधे॑व॒ पर्व॒ यत्सु॒वाचो॒ वद॑थ॒नाध्य॒प्सु ॥५॥

यत् । ए॒षा॒म् । अ॒न्यः । अ॒न्यस्य॑ । वाच॑म् । शा॒क्तस्य॑ऽइव । वद॑ति ।
शिक्ष॑माणः । सर्व॑म् । तत् । ए॒षा॒म् । स॒मृधा॑ऽइव । पर्व॑ । यत् ।
सु॒ऽवाचः॑ । वद॑थन । अधि॑ । अ॒प्ऽसु ॥५॥

सायणः—हे मण्डूकाः यत् यदा एषां युष्माकं मध्ये अन्यः मण्डूकः अन्यस्य मण्डूकस्य वाचं वदति अनुवदति अनुकरोति शिक्षमाणः शिक्ष्यमाणः शिष्यः शाक्तस्येव शक्तिमतः शिक्षकस्य वाचं यथानुवदति तद्वत् । यत् यदा च सुवाचः शोभनवाचो यूयं सर्वे अप्सु वृष्टेषूदकेषु अधि उपरि प्लवन्तः वदथन वदथ शब्दं कुरुथ । तत् तदा एषां युष्माकं सर्वं पर्व परुष्मच्छरीरं समृधेव समृद्धमेवाविकलावयवमेव भवति । इव शब्दोऽवधारणे । घर्मकाले मृद्भावमापन्ना मण्डूकाः पुनर्वर्षणे सत्यविकलाङ्गाः प्रादुर्भवन्तीत्यर्थः ॥५॥

वेङ्कटमाधवः—यत् । येषाम् । अन्यः । अन्यस्य । वाचम् । वदति । शक्तियुक्तस्येव । शिष्यः शिष्यमाणोऽचार्यस्य । सर्वम् । तत् । एषां मण्डूकानाम् । समृद्धमिव । पर्वाङ्गानामुदकाप्यायितम् । यत् । सुवाचो भूयम् । अप्सु । स्थिताः । शं कुरुथेति ॥५॥

Ren. :—When one of them repeats the speech of the other
As the pupil that of the teacher,
It is like a chapter finished by them......
Beautiful is your talk when you speak in the waters!

---

गोमा॑युरेको॑ अ॒जमा॑युरेकः॒ पृश्नि॒रेको॒ हरि॑त॒ एक॑ एषाम् ।
स॒मा॒नं नाम॒ बिभ्र॑तो॒ विरू॑पाः पुरु॒त्रा वाचं॑ पिपिशु॒र्वद॑न्तः ॥६॥

गोऽमा॑युः । एकः॑ । अ॒जऽमा॑युः । एकः॑ । पृश्निः॑ । एकः॑ । हरि॑तः । एकः॑ ।
ए॒षाम् । स॒मा॒नम् । नाम॑ । बिभ्र॑तः । विऽरू॑पाः । पु॒रु॒ऽत्रा ।
वाच॑म् । पि॒पि॒शुः । वद॑न्तः ॥६॥

*सायणः*—एषां मण्डूकानां मध्ये एकः मण्डूकः गोमायुः गोमायुरिव मायुः शब्दो यस्य तादृशो भवति। एकः अन्यो मण्डूकः अजमायुः अजस्य मायुरिव मायुर्यस्य तादृशो भवति। एकः पृश्निः पृश्निवर्णः एकः अपरः हरितः हरितवर्णः। एवं विरूपाः नानारूपाः अपि समानम् एकं मण्डूका इति नाम बिभ्रतः धारयन्तः पुरुत्रा बहुषु देशेषु वाचं वदन्तः शब्दं कुर्वन्तः पिपिशुः अवयवीभवन्ति प्रादुर्भवन्ति । 'पिश अवयवे' । पुरुशब्दात् 'देवमनुष्य०' इत्यादिनात्राप्रत्ययः ॥६॥

*वेङ्कटमाधवः*—गोशब्दः। एकः। अजशब्दः। एकः। पृश्निवर्णः। एकः। हरितवर्णः। एकः । एषां मण्डूकानां । समान मण्डूकाख्यम्। नाम। बिभ्रतः। नानारूपाः। बहुदेशेषु। वाचम्। मिश्रयन्ति। शब्दायन्तः ॥६॥

Ren. :—One lows like a cow, the other (bleats) like a she-goat,
One in (the group) is speckled, one is green.
They have the same name but distinct forms.
They have chiselled their voices while speaking diversely.

---

ब्रा॒ह्म॒णासो॑ अतिरा॒त्रे न सोमे॒ सरो॒ न पू॒र्णम॒भितो॒ वद॑न्तः ।
सं॒व॒त्स॒रस्य॒ तदहः॒ परि॑ ष्ठ॒ यन्म॑ण्डूकाः प्रावृ॒षीणं॑ ब॒भूव॑ ॥७॥

ब्रा॒ह्म॒णासः॑ । अ॒ति॒ऽरा॒त्रे । न । सोमे॑ । सरः॑ । न । पू॒र्णम् । अ॒भितः॑ ।
वद॑न्तः । सं॒व॒त्स॒रस्य॑ । तत् । अह॒रिति॑ । परि॑ । स्थ॒ ।
यत् । म॒ण्डू॒काः॒ । प्रा॒वृ॒षीण॑म् । ब॒भूव॑ ॥७॥

*सायणः*—रात्रिमतीत्य वर्तत इत्यतिरात्रः। अतिरात्रे न सोमे। यथा‍तिरात्राख्ये सोमयागे ब्राह्मणाः ब्राह्मणा रात्रौ स्तुतशस्त्राणि पर्यायेण शंसन्ति हे मण्डूकाः। द्वितीयो नशब्दः संप्रत्यर्थे। न संप्रति पूर्णं सरः अभितः सर्वतः वदन्तः रात्रौ शब्दं कुर्वाणा यूयं तदहः तद्दिनं परिष्ठ परितः सर्वतो भवथ। यत् अहः प्रावृषीणं प्रावृषेण्यं प्रावृषि भवं बभूव तस्मिन्नहनि सर्वतो वर्तमाना भवथेत्यर्थः ॥७॥

वेङ्कटमाधवः—ब्राह्मणाः। इव। अतिरात्रे। सोमे भूयिष्ठस्तोत्रशस्त्रे। सरः। इव। पूर्णम्। अभितः स्तोत्रशस्त्राणि। वदन्तः। सरश्शब्दः स्तोमवचनः। संवत्सरस्य। तत्। दिनम्। परितः भवथ। यद्दिनम्। हे मण्डूकाः। प्रावृषेण्यम्। भवति प्रादुर्भवति चेति ॥७॥

Ren.:—Like the Brahmins at the overnight Some sacrifice,
Speaking around the full (vat) as around a pond,
O frogs you miss not this day of the year,
Which marks the start of the rains.

---

ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणम्।
अध्वर्यवो घर्मिणः सिष्विदाना आविर्भवन्ति गुह्या न के चित् ॥८॥

ब्राह्मणासः। सोमिनः। वाचम्। अक्रत। ब्रह्म। कृण्वन्तः। परि-
वत्सरीणम्। अध्वर्यवः। घर्मिणः। सिस्विदानाः। आविः।
भवन्ति। गुह्याः। न। के। चित् ॥८॥

*सायणः*—सोमिनः सोमयुक्ताः परिवत्सरीणं सांवत्सरिकं गवामयनिकं ब्रह्म स्तुतशस्त्रात्मकं कृण्वन्तः कुर्वन्तः ब्राह्मणासः। लुप्तोपममेतत्। ब्राह्मणा इव वाचम् शब्दम् अक्रत अकृषतेमे मण्डूकाः। अपि च घर्मिणः घर्मेण प्रवर्ग्येण चरन्तः अध्वर्यवः अध्वरस्य नेतार ऋत्विज इव सिष्विदाना स्विद्यद्गात्राः गुह्याः घर्मकाले बिले निगूढाः केचित् केचन मण्डूकाः न संप्रति वृष्टौ सत्याम् आविर्भवन्ति जायन्ते ॥८॥

वेङ्कटमाधवः—ब्राह्मणासः। सोमिन इत्यौपमिकम्। कर्म कृण्वन्तः। संवत्सरान्तभवम्। वाचम्। अकुर्वन्। अध्वर्यवः। घर्मेण चरन्तः। स्विद्यच्छरीराः। आविर्भवन्ति। गुह्याः। इदानीम्। केचिद् बिलाद्गुत्थिता-मण्डूकाः। नेति सम्प्रत्यर्थः ॥८॥

Ren.:—The Brahmins busy in Soma have raised their voices,
Reciting the formula (which inaugurates) the year.
The Adhvaryus busy in boiling milk, full of sweat,
Are fully revealed: no one remains hidden.

---

देवहितिं जुगुपुर्द्वादशस्य ऋतुं नरो न प्र मिनन्त्येते ।
संवत्सरे प्रावृष्यागतायां तप्ता घर्मा अश्नुवते विसर्गम् ॥९॥

देवऽहितिम् । जुगुपुः । द्वादशस्य । ऋतुम् । नरः । न । प्र ।
मिनन्ति । एते । संवत्सरे । प्रावृषि । आऽगतायाम् ।
तप्ताः । घर्माः । अश्नुवते । विऽसर्गम् ॥९॥

*सायणः*—नरः नेतारः एते मण्डूकाः देवहितिं देवैः कृतं विधानं अस्यर्तौरयं धर्म इत्येवं रूपं जुगुपुः गोपायन्ति । काले काले रक्षन्ति । अत एव द्वादशस्य द्वादशमासात्मकस्य संवत्सरस्य ऋतु तं तं वसन्तादिकं न प्रमिनन्ति न हिंसन्ति । पर्जन्यस्तुतेरनुमोदनेन तत्तत्काले वृष्टिहेतवो भवन्तीत्यर्थः । संवत्सरे सम्पूर्णे प्रावृषि वर्षर्तौ आगतायाम् आगते सति घर्माः पूर्वं घर्मकाले वर्तमानाः तप्ताः तापेन पीडिताः संप्रति विसर्गं विसर्जनं बिलान्मोचनम् अश्नुवते प्राप्नुवन्ति ॥९॥

*वेङ्कटमाधवः*—द्वादशमासस्य संवत्सरस्य । देवहितिं हवीरूपम् । एते । रक्षन्ति । तदेवाह । न हिंसन्ति । वार्षिकमृतुम् । नेतार इति प्रकाशीभवन्त ऋतुं प्रकाशयन्तीत्यर्थः । संवत्सरे । प्रावृषि । आगतायाम् । तप्ताः केचन । घर्माः । बिलात् विसर्गम् प्राप्नुवन्ति । तप्ताः घर्मा इत्यौपमिकम् ॥९॥

Ren. :—They have kept the divine institution of the twelfth (month)
*These savants miss not the decisive date.*
When the rainy season arrives at the year's end,
The boiling cauldrons cease working.

---

गोमायुरदादजमायुरदात् पृश्निरदाद्धरितो नो वसूनि ।
गवां मण्डूका ददतः शतानि सहस्रसावे प्र तिरन्त आयुः ॥१०॥

गोऽमायुः । अदात् । अजऽमायुः । अदात् । पृश्निः । अदात् ।
हरितः । नः । वसूनि । गवाम् । मण्डूकाः । ददतः ।
शतानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥१०॥

*सायणः*—गोमायुः गोरिव मायुः शब्दो यस्य तादृशो मण्डूकः वसूनि धनानि नः अस्मभ्यम् अदात् ददातु । अजमायुः च अदात् ददातु । हरितः हरितवर्णश्च अदात् ददातु । पृश्निः पृश्निवर्णश्च अदात् ददातु । तथा सहस्रसावे सहस्रसंख्याका ओषधयः सूयन्त उत्पद्यन्त इति वर्षर्तुः सहस्रसावः । तस्मिन् सति सर्वे मण्डूकाः गवा शतानि अपरिमितागाः ददतः अस्मभ्यं प्रयच्छन्तः आयुः जीवनं प्र तिरन्ते प्रवर्धयन्तु ॥१०॥

*वेंकटमाधवः*—गोमायुः । अदादेवमन्ये च । धनानि । अस्मभ्यम् । गवाम् । शतानि । प्रयच्छन्तः मण्डूकाः । सहस्रसावे बहूना प्रसवे वर्षर्तुनम् । प्रवर्धयन्ति । आयुरन्नमिति ॥१०॥

Ren. :—The one that lows like a cow, the one that (bleats) like a she-goat,
The speckled one and the green one have yielded us treasures,
Giving hundreds of cows, at the thousandth (soma-) pressing,
The frogs have extended their own duration of life.

---

## 24—VIII—48

कण्व ऋषिः । त्रिष्टुप्छन्दः, पञ्चमी जगती । सोमो देवता ।

स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य ।
विश्वे यं देवा उत मर्त्यासो मधु ब्रुवन्तो अभि संचरन्ति ॥१॥

स्वादोः । अभक्षि । वयसः । सुऽमेधाः । सुऽआध्यः । वरिवोवित्ऽतरस्य । विश्वे । यम् । देवाः । उत । मर्त्यासः । मधु ।
ब्रुवन्तः । अभि । सम्ऽचरन्ति ॥१॥

*सायणः*—अहं प्रगाथः सुमेधाः शोभनप्रज्ञः स्वाध्यः स्वाध्ययनः सुकर्मा वरिवोवित्तरस्य अतिशयेन पूजालभमानस्य स्वादोः सुष्ठ्वदनीयस्य स्वादुभूतस्य वयसः अन्नस्य । एताः कर्माणि पञ्चयः । उक्तलक्षणं वयोऽन्नं सोमारव्यम्

अभक्षि अभक्षयेय। यं यदन्नं विश्वे देवाः सर्वेऽपीन्द्रादयः उत अपि च मर्त्यासः मर्त्या मनुष्याः मधु ब्रुवन्तः मनोहरमेतदिति शब्दयन्तः अभि संचरन्ति अभिसंगच्छन्ते प्राप्नुवन्ति तदन्नमभक्षीति ॥१॥

Grif. ;—Wisely have I enjoyed the savoury viand, religious-thoughted, best to find out treasure,
The food to which all Deities and mortals, calling it meath, gather themselves together.

---

अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य ।
इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ॥२॥

अन्तरिति । च । प्र । अगाः । अदितिः । भवासि । अवऽयाता । हरसः ।
दैव्यस्य । इन्दो इति । इन्द्रस्य । सख्यम् । जुषाणः । श्रौष्टीऽइव ।
धुरम् । अनु । राये । ऋध्याः ॥२॥

*सायणः*—हे सोम त्वम् अन्तश्च प्रागाः। हृदयस्य यागागारस्य वान्तर्गच्छसि। गत्वा च अदितिः अदीनस्त्वं दैव्यस्य हरसः क्रोधस्य अवयाता पृथक्कर्ता भवासि भवसि। हर इति क्रोधनाम। हे इन्दो सोम त्वम् इन्द्रस्य सख्यं जुषाणः सेवमानः श्रौष्टी। श्रुष्टीति क्षिप्रनाम। तत्संबन्धी श्रौष्टी। क्षिप्रगाम्यश्वः धुरम् इव राये अस्माकं धनलाभाय अनु ऋध्याः अनुगच्छसि। अथवाश्वो यथा धुरं वृत्वाभिमतदेशं प्रापयति तद्वदस्मान् प्रापय। अनुपूर्व ऋधिर्गत्यर्थः ॥२॥

Grif. :—Thou shalt be Aditi as thou hast entered within, appeaser of Celestial anger.
Indu enjoying Indra's friendship, bring us-as a swift steed the car-forward to riches.

---

अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥३॥

अपाम । सोमम् । अमृताः । अभूम । अगन्म । ज्योतिः । अविदाम ।
देवान् । किम् । नूनम् । अस्मान् । कृणवत् । अरातिः ।
किम् । ऊं इति । धूर्तिः । अमृत । मर्त्यस्य ॥३॥

*सायण*:—हे अमृत अमरण सोम त्वाम् अपाम पानं करवाम । कुर्मः । ततः अमृताः अभूम भवेम । यस्मात्त्वममृतः अतस्तव पानाद्वयमप्यमृताः स्याम । पश्चात् ज्योतिः द्योतमानं स्वर्गम् अगन्म । अविदाम ज्ञातवन्तः देवान् । तथाभूतान् अस्मान् नूनम इदानीम् अरातिः शत्रुः किं कृणवत् कुर्यात् । किमु किं वा मर्त्यस्य इदानीं मनुष्यभूतस्य मम धूर्तिः हिंसकः किं कृणवत् कुर्यात् ॥३॥

Grif.:—We have drunk soma and become immortal; we have attained the light, the Gods discovered.
Now what may foeman's malice do harm to us? what, O Immortal, mortal man's deception?

---

शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः ।
सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥४॥
शम् । नः । भव । हृदे । आ । पीतः । इन्दो इति । पिताऽइव । सोम ।
सूनवे । सुऽशेवः । सखाऽइव । सख्ये । उरुऽशंस । धीरः । प्र ।
नः । आयुः । जीवसे । सोम । तारीः ॥४॥

*सायण*:—हे इन्दो सोम अस्माभिः पीतः त्वं नः अस्माकं हृदे हृदयाय शं सुखम् आ भव । सुखभवने दृष्टान्तद्वयम् । पिता सूनवे स्वात्मजाय यथा सुखाय भवति यथा वा सखा अहितान्निवर्त्य हिते स्थापयिता सखा स स्वसख्ये यथा सुशेवः सुसुखो भवति । शेवमिति सुखनाम । तद्वत्त्वमपि भव । किं च हे उरुशंस बहुभिर्बहुधा वा शंसनीय बहुकीर्त्ते सोम धीरः धीमांस्त्वं नः अस्माकं जीवसे जीवनाय आयुः आयुष्यं प्र तारीः प्रवर्धय ॥४॥

Grif.:—Absorbed into the heart, be sweet, O Indu, as a kind father to his son, O Soma.
As a wise friend to friend: do thou, wide ruler, O Soma, lengthen out our days for living.

---

इमे मा पीता यशस उरुष्यवो रथं न गावः समनाह पर्वसु ।
ते मा रक्षन्तु विस्रसश्चरित्रादुत मा स्रामाद्यवयन्त्विन्दवः ॥५॥
इमे । मा । पीताः । यशसः । उरुष्यवः । रथम् । न । गावः । सम् ।
अनाह । पर्वऽसु । ते । मा । रक्षन्तु । विऽस्रसः । चरित्रात् ।
उत । मा । स्रामात् । यवयन्तु । इन्दवः ॥५॥

*सायण:*—इमे पीताः यशसः यशस्कराः उरुष्यवः अस्माकं रक्षाकामाः सोमाः गावः गोविकारभूता वध्यः रथं न रथमिव ता यथा रथं विस्रस्तं पर्वसु समनाह संदधते तद्वत् मां पीताः सोमाः पर्वसु संनह्यन्तु । किं च ते सोमाः मा विस्रसः विस्रस्तात् चरित्रात् चरणादनुष्ठानात् रक्षन्तु । सोमः पीतश्चेत् कर्म ह्यविस्रस्तं भवति । उत अपि च मा मां स्रामात् व्याधेः सकाशात् इन्दवः पीताः यवयन्तु पृथक्कुर्वन्तु ॥५॥

Grif.:—These glorious drops that give me freedom have I drunk.
Closely they knit my joints as straps secure a car.
Let them protect my foot from slipping on the way:
Yea let the drops I drink preserve me from disease.

---

अ॒ग्निं न मा॑ मथि॒तं सं दि॑दीपः॒ प्र च॑क्षय कृणु॒हि वस्य॑सो नः ।
अथा॒ हि ते॒ मद॒ आ सो॑म॒ मन्ये॑ रे॒वाँइ॑व॒ प्र च॑रा पु॒ष्टिमच्छ॑ ॥६॥

अ॒ग्निम् । न । मा॒ । म॒थि॒तम् । सम् । दि॒दी॒पः॒ । प्र । च॒क्ष॒य॒ । कृ॒णु॒हि । वस्य॑सः । नः॒ । अथ॑ । हि । ते॒ । मदे॑ । आ । सो॒म॒ । मन्ये॑ । रे॒वान्ऽइ॑व । प्र । च॒र॒ । पु॒ष्टिम् । अच्छ॑ ॥६॥

*सायण:*—हे सोम पीतस्त्वं मा मां मथितम् अग्निं न अग्निमिव सं दिदीपः संदीपय । प्र चक्षय च चक्षुषः संधुक्षयेन । नः अस्मान् वस्यसः अतिशयेन वसुमतः कृणुहि कुरु । अथ अधुना हि खलु ते त्वां हे सोम मदे मदाय मन्ये स्तौमि । तथा सति रेवानिव धनवानिह । इवेति संप्रत्यर्थे । पुष्टिम् अस्मत्पोषम् अच्छ प्र चर अभिगच्छ ॥६॥

Grif.:—Make me shine bright like fire produced by friction: give us a clearer sight and make us better.
For in carouse I think of thee, O Soma, shall I, as a rich man attain to comfort.

---

इ॒षि॒रेण॑ ते॒ मन॑सा सु॒तस्य॑ भक्षी॒महि॒ पित्र्य॑स्येव रा॒यः ।
सोम॑ राजन्प्र ण॒ आयूं॑षि तारी॒रहा॑नीव॒ सूर्यो॑ वास॒राणि॑ ॥७॥

इषिरेण । ते । मनसा । सुतस्य । भक्षीमहि । पित्र्यस्यऽइव । रायः ।
सोम । राजन् । प्र । नः । आयूंषि । तारीः । अहानिऽ-
इव । सूर्यः । वासराणि ॥७॥

*सायणः*—इषिरेण इच्छावता मनसा सुतस्य ते सुतमभिषुतं त्वां भक्षीमहि । पित्र्यस्य पितृसंबन्धिनो धनस्येव धनमिव । पित्र्यं धनं यथैषणेन मनसोपभुञ्जते तद्वत् भक्षित हे सोम राजन् स्वामिन् नः अस्माकं आयूंषि प्र तारीः प्रवर्धय वासराणि जगद्वासकानि अहानि सूर्यः इव । अत्र 'ईषणेन वार्षणेन वा' (निरु. 4-7) इत्यादि निरुक्तं ज्ञातव्यम् ॥७॥

Grif:—May we enjoy with an enlivened spirit the juice thou givest like ancestral riches.
O Soma, King, prolong thou existence as Surya makes the shining days grow longer.

---

सोम राजन्मृळया नः स्वस्ति तव स्मसि व्रत्यास्तस्य विद्धि ।
अलर्ति दक्ष उत मन्युरिन्दो मा नो अर्यो अनुकामं परा दाः ॥८॥
सोम । राजन् । मृळय । नः । स्वस्ति । तव । स्मसि । व्रत्याः ।
तस्य । विद्धि । अलर्ति । दक्षः । उत । मन्युः । इन्दो इति ।
मा । नः । अर्यः । अनुऽकामम् । परा । दाः ॥८॥

*सायणः*—हे सोम राजन् नः अस्मान् स्वस्ति अविनाशाय मृळय सुखय च । व्रत्या व्रतिनो वयं तव स्मसि स्वभूताः स्म । तस्य तं स्वकीयं तव विद्धि जानीहि । अथवा तव त्वमित्यर्थः । त्वं जानीहि । किं च हे इन्दो दक्षः प्रवृद्धोऽस्मच्छत्रुः अलर्ति गच्छति । उत अपि च मन्युः क्रोधः क्रुद्धो वा अलर्ति । तादृशस्योभयविधस्य अर्यः अरेः अनुकामं यथाकामं नः अस्मान् मा परा दाः परादेहि ॥८॥

Grif.:—King Soma, favour us and make us proper: we are thy devotees, of this be mindful.
Spirit and power are fresh in us, O Indu: give us not up unto our foeman's pleasure.

---

त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था नृचक्षाः ।
यत्ते वयं प्रमिनाम व्रतानि स नो मृळ सुषखा देव वस्यः ॥९॥

त्वम् । हि । नः । तन्वः । सोम । गोपाः । गात्रेऽगात्रे । नि-
ससत्थ । नृऽचक्षाः । यत् । ते । वयम् । प्रऽमिनाम । व्रतानि ।
सः । नः । मृळ । सुऽसखा । देव । वस्यः ॥९॥

*सायणः*—हे सोम देव त्वं नः अस्माकं तन्वः तनोरङ्गस्य गोपाः हि रक्षिता खलु । अतः गात्रेगात्रे सर्वेष्वङ्गेषु नृचक्षाः नृणां कर्मनेतृणां द्रष्टा त्वं निषसत्थ । निषीदसि । यत् यद्यपि ते तव व्रतानि कर्माणि वयं प्रमिनाम हिंस्मः तथापि हे देव सः त्वं वस्यः श्रेष्ठान् नः अस्मान् सुषखा शोभनसखा सन् मृळ सुखय ॥९॥

Grif.:—For thou hast settled in each joint, O Soma, aim of mens' eyes and guardian of our bodies.
When we offend against thine holy statutes, as a kind Friend, God, best of all, be gracious.

---

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥१०॥

ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हरिऽअश्व ।
पीतः । अयम् । यः । सोमः । नि । अधायि । अस्मे इति ।
तस्मै । इन्द्रम् । प्रऽतिरम् । एमि । आयुः ॥१०॥

*सायणः*—अहं प्रगाथः ऋदूदरेण उदराबाधकेन सोमेन सख्या सचेय संगच्छेय । संगतो भवामि । यः सोमः पीतः सन् मा मां न रिष्येत् न हिंस्येत् हे हर्यश्व इन्द्र । सौम्ये सूक्त इन्द्रस्य कीर्तनं सोमस्येन्द्रस्वामिकत्वान्न विरुद्धम् । यः अयं सोमः अस्मे अस्मासु न्यधायि निहितोऽभूत् तस्मै सोमाय प्रतिरम् आयुः जठरे चिरकालावस्थानम् इन्द्रम् एमि याचे ॥१०॥

*यास्कः*—'ऋदूदरः सोमो मृदूदर.' निरु. (6.4) ॥१०॥

Grif.:—May I be with the Friend whose heart is tender, who, Lord of Bays I when quaffed will never harm me—
This soma now deposited within me For this, I pray for longer life to Indra.

---

अप त्या अस्थुरनिरा अमीवा निरत्रसन्तमिषीचीरभैषुः ।
आ सोमो अस्माँ अरुहद्विहाया अगन्म यत्र प्रतिरन्त आयुः ॥११॥

अप । त्याः । अस्थुः । अनिराः । अमीवाः । निः । अत्रसन् । तमिषीचीः ।
अभैषुः । आ । सोमः । अस्मान् । अरुहत् । विऽहायाः ।
अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥११॥

सायणः—त्याः ताः अनिराः प्रेरयितुमशक्याः अमीवा बलवत्यः पीडाः अप अस्थुः अपगच्छन्तु । याः तमिषीचीः बलवत्योऽस्मान् निः नितराम् अत्रसन् प्राप्नुवन् कम्पयन्ति तथा अभैषुः । अपगमे कारणमाह—यस्मात्सोमः विहायाः महान् सन् अस्मान् आ अरुहत् आगमत् प्राप्तवान् अतोऽपास्थुरितिभावः । यत्र यस्मिन् सोमे पीते आयुः आयुष्यं प्रतिरन्ते वर्धयन्ति मनुष्यास्तं सोमम् अगन्म इति ॥११॥

Grif. :—Our maladies have lost their strength and vanished:
they feared, and passed away into the darkness.
Soma hath risen in us, exceeding mighty, and we are
come where men prolong existence.

---

यो न इन्दुः पितरो हृत्सु पीतोऽमर्त्यो मर्त्याँ आविवेश ।
तस्मै सोमाय हविषा विधेम मृळीके अस्य सुमतौ स्याम ॥१२॥

यः । नः । इन्दुः । पितरः । हृत्ऽसु । पीतः । अमर्त्यः । मर्त्यान् ।
आऽविवेश । तस्मै । सोमाय । हविषा । विधेम । मृळीके ।
अस्य । सुऽमतौ । स्याम ॥१२॥

सायणः—हे पितरः यः इन्दुः हृत्सु पीतः सन् अमर्त्यः मृतिरहितः आविवेश मर्त्यान् नः अस्मान् तस्मै सोमाय हविषा विधेम परिचरेम अस्य सोमस्य मृळीके सुखे सुमतौ चानुग्रहबुद्धौ च स्याम भवेम ॥१२॥

Grif. :—Fathers that Indu which our hearts have drunken,
Immortal in himself, hath entered mortals.
So let us serve this Soma with oblation, and rest securely
in his grace and favour.

---

त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ।
तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥१३॥

त्वम्। सोम। पितृऽभिः। सम्ऽविदानः। अनु। द्यावापृथिवी
इति। आ। ततन्थ। तस्मै। ते। इन्दो इति। हविषा।
विधेम। वयम्। स्याम। पतयः। रयीणाम् ॥१३॥

सायणः—हे सोम त्वं पितृभिः सह संविदानः संगच्छमानः द्यावापृथिवी द्यावापृथिव्यौ अनु आ ततन्थ क्रमेण विस्तारयसि। तस्मै सोमाय हविषा विधेम परिचरेम। वयं रयीणां धनानां पतयः स्याम भवेम ॥१३॥

Grif. :—Associate with the Fathers thou, O Soma, hast spread thyself abroad through earth and heaven.
So with oblation let us serve thee, Indu and so let us become the lords of riches.

---

त्रातारो देवा अधि वोचता नो मा नो निद्रा ईशत मोत जल्पिः।
वयं सोमस्य विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥१४॥

त्रातारः। देवाः। अधि। वोचत। नः। मा। नः। निऽद्रा।
ईशत। मा। उत। जल्पिः। वयम्। सोमस्य। विश्वह।
प्रियासः। सुवीरासः। विदथम्। आ। वदेम ॥१४॥

सायण :—हे त्रातारः रक्षितारो हे देवाः नः अस्मान् अधि वोचत अधिवचनं कुरुत। किं च नः अस्मान् निद्राः स्वप्नाः मा ईशत ईश्वरा अभूवन् बाधितुम्। उत अपि च जल्पिः निन्दकः अस्मान् मा निन्दतु। वयं सोमस्य प्रियासः प्रियाः स्याम विश्वतः सर्वेष्वप्यहःसु सर्वदेत्यर्थः। सुवीरासः शोभनपुत्राः सन्तः विदथं स्तोत्रं आ वदेम आभिमुख्येन वदेम। अथवा सुपुत्रा विदथं गृहमावदेम। आवदनं पुत्रपौत्राणां धनेनोपच्छन्दनम् ॥१४॥

Grif. :—Give us you blessing, O ye Gods, preservers. Never may sleep or idle talk control us.
But evermore may we, as friends of Soma, speak to the Synod with brave sons around us.

---

त्वं नः॑ सोम वि॒श्वतो॑ वयो॒धास्त्वं स्व॒र्विदा वि॑शा नृ॒चक्षाः॑ ।
त्वं न॑ इन्द ऊ॒तिभिः॑ स॒जोषाः॑ पा॒हि प॒श्चाता॑दु॒त वा॑ पु॒रस्ता॑त् ॥१५॥

त्वम् । नः॒ । सो॒म॒ । वि॒श्वतः॑ । व॒यः॒ऽधाः । त्वम् । स्वः॒ऽवित् । आ ।
वि॒श॒ । नृ॒ऽचक्षाः॑ । त्वम् । नः॒ । इ॒न्दो॒ इति॑ । ऊ॒तिभिः॑ । स॒ऽ-
जोषाः॑ । पा॒हि । प॒श्चाता॑त् । उ॒त । वा॒ । पु॒रस्ता॑त् ॥१५॥

सायणः—हे सोम त्वं नः अस्माकं विश्वतः सर्वाभ्यो दिग्भ्यो वयोधाः अन्नदाता । तथा त्वं स्वर्वित् स्वर्गलम्भकः नृचक्षाः सर्वमनुष्यद्रष्टा त्वम् आ विश । हे इन्दो त्वं सजोषाः सह प्रीयमाणः सन् ऊतिभिः सह । अथवोतयो गन्तारो मरुतः । तैः सहितः सन् पश्चातात् पश्चात् उत वा पुरस्तात् च पाहि ॥१५॥

Grif. :—On all sides, Soma, thou art our life-giver : aim of all eyes, light-finder, come within us.
Indu, of one accord with thy protections, both from behind and from before, preserve us.

---

## 25—X—14.

यम ऋषिः । 'यमाय सोमम्' इति त्रयोदश्याद्या अनुष्टुभः, 'यमाय मधुमत्तमम्' इत्येषा बृहती, आदितो द्वादश त्रिष्टुभः । 'आङ्गिरसो नः पितरो नवग्वा' इति षष्ठ्या अङ्गिरः—पित्रथर्वभृगुलक्षणा । लिङ्गोक्ता देवताः । 'प्रेहि' इत्याद्यास्तिस्रो लिङ्गोक्तदेवताकाः । पितृदेवताकाः 'अतिद्रवसारमेयौ' इत्यादिरुकतृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितः स्थितौ तद्देवताकः । शिष्टा यमदेवत्याः ।

प॒रे॒यि॒वांसं॑ प्र॒वतो॑ म॒हीरनु॑ ब॒हुभ्यः॒ पन्था॑मनुपस्पशा॒नम् ।
वै॒व॒स्व॒तं सं॒गम॑नं॒ जना॑नां य॒मं राजा॑नं ह॒विषा॑ दुवस्य ॥१॥

प॒रे॒यि॒ऽवांस॑म् । प्र॒ऽवतः॑ । म॒हीः । अनु॑ । ब॒हुऽभ्यः॑ । पन्था॑म् ।
अ॒नु॒ऽप॒स्प॒शा॒नम् । वै॒व॒स्व॒तम् । सं॒गम॑नम् । जना॑नाम् ।
य॒मम् । राजा॑नम् । ह॒विषा॑ । दु॒व॒स्य॒ ॥१॥

सायणः—हे मदीयान्तरात्मन् यजमान वा त्वं राजानं पितॄणां स्वामिनं यमं हविषा पुरोडाशादिना दुवस्य परिचर । कीदृशम् । प्रवतः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्महीः तत्तद्भोगोचितभूप्रदेशविशेषानन परेयिवांसं क्रमेण मरणादूर्ध्वं प्रापितवन्तं तथा बहुभ्यः स्वर्गार्थिभ्यः

पुण्यकृद्भ्यः पुण्यकृतार्थे पन्थां स्वर्गस्योचितं मार्गमनुसस्पशानम्। पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः। वैवस्वतं, विवस्वतः सूर्यस्य पुत्रं जनानां पापिनां संगमनं गन्तव्यस्थानरूपम् ॥१॥

*उद्गीथाचार्यः*—परेयिवांसम् उपसर्गव्यत्ययोऽत्र सामर्थ्याद् कार्यः। लिट् चात्र वर्तमाने। पर्यागच्छन्तम्। लोकपालत्वात् कृताकृतपर्यवेक्षणार्थमेतन्मन्त्रपद द्वितीयाबहुवचनान्तम्। यास्कमहर्षिणात्र [नि., X-20] वाक्यार्थसामान्याद्देवतिर्यग्जातविशेषणार्थमध्याहृतम्। प्रवतः प्रगताधमादिसमर्थपुरुषार्थसंबन्धात् प्रकृष्टगा मनुष्यजातावित्यर्थः। उद्वतश्च उद्गताश्च देवजाताः सर्वतो गतत्वाच्च बहुभ्यः मिता अनुप्रसितोति। षष्ठ्यर्थे चतुर्थ्येषा। बहूनामपरिमितानामेतेषामेव प्राणिनाम्। पन्थां पन्थानं मार्गं शुभाशुभकर्मप्रवृत्तिलक्षणं वा। अनुपस्पशानं स्वस्थाने [स्व॰—१] स्पशिर्बन्धनार्थः। विबध्नन्तम्। शुभाशुभकर्मप्रवृत्तिलक्षणमार्गपक्षे निरूपयन्तमिति। वैवस्वतं विवस्वतः पुत्रम्। संगमनं स्वर्गं प्रति सम्यग्गमयितारम्। जनानाम्। यमं राजानं सर्वस्येश्वरम्। हविषा दुवस्य परिचर। हे मदीयान्तरात्मन् यजमान वा ॥१॥

Pet. :—To him that passed along the great heights, and sought out a path for many, Vivasvat's son, the gatherer of men, Yama, the King-to him bring worship and offering.

Ren, :—He who is gone away towards the great distances,
And who, for many, has spied the path,
The son of Vivasvat, the gatherer of men,
Yama, the King,—honour him with oblation !

---

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥२॥

यमः। नः। गातुम्। प्रथमः। विवेद। न। एषा। गव्यूतिः।
अपऽभर्तवै। ऊं इति। यत्र। नः। पूर्वे। पितरः। पराऽईयुः।
एना। जज्ञानाः। पथ्याः। अनु। स्वाः ॥२॥

*सायणः*—प्रथमः सर्वेषां मुख्यः यमः नोऽस्माकं प्रजानां गातुं शुभाशुभनिमित्तं विवेद जानाति। एषा गव्यूतिर्नापभर्तवा उ। अतिशयज्ञानयोगाद्यमस्य न केनचिदपहर्तुमपनेतुं शक्यत इत्यर्थः। यत्र यस्मिन् मार्गे नोऽस्माकं पूर्वे पितरः परेयुः एना अनेन मार्गेण गच्छन्तो जज्ञानाः जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गप्रत्यागता अनुगच्छन्ति ॥२॥

उद्गीथाचार्यः—यमः । नः अस्माकं प्रजानाम् । गातुं शुभाशुभकर्मनिमित्तां सुगतिं दुर्गतिञ्च । प्रथमः अन्यस्मात् सर्वस्मात् ज्ञातुः पूर्वम् । विवेद जानाति । एषा गव्यूतिः । एषा या [ ] शुभाशुभकर्मजनितसुगतिर्दुर्गतिश्च । नाऽपभर्तवै । अतिशयज्ञानयोगाद [मस्य] न केनचिदपहर्तुमपनेतुं स्वविज्ञानेनाभिभवितुं शक्यत इति । किञ्च । यत्र यस्मिन् स्वर्गे । नः अस्माकं । पूर्वे पितरः पितामहादयः । परा ईयुः आप्तकामत्वात् स्वपुत्रदारानवेक्षमाणाः पराङ्मुखागताः । एना: अनेन यज्ञेन हेतुना । जज्ञानाः संस्कारद्वारेण पुनर्जायमानाः संस्क्रियमाणाः ? आहुतीस्तुवांश्च । स्वाः स्वभूताः । अनु आहुति संस्कारानन्तरं संस्कृतास्सन्त इति । तदप्यस्मद् पितृगतिस्थानं यम एव तत्त्वतो जानाति नान्य इति पूर्वोक्तम् सर्वः ॥२॥

Pet. .—Yama first found out for us the road; this is a pasture land which none can rob us of; thither the living go their several ways, along the road by which our fathers, that were before us, passed.

Ren. :—It is Yama, who first discovered the path,
—The pasture of which no one will deprive us any more—
(The mortals) once born, follow their own paths;
There, where are gone away from here, our first fathers.

---

मा॒तली॑ क॒व्यैर्य॒मो अङ्गि॑रोभि॒र्बृह॒स्पति॒र्ऋक्व॑भिर्वावृधा॒नः ।
यांश्च॑ दे॒वा वा॑वृ॒धुर्ये च॑ दे॒वान्त्स्वाहा॒न्ये स्व॒धया॒न्ये म॑दन्ति ॥३॥

मा॒तली॑ । क॒व्यैः । य॒मः । अङ्गि॑रःऽभिः । बृह॒स्पतिः॑ । ऋक्व॑ऽभिः ।
व॒वृ॒धा॒नः । यान् । च॒ । दे॒वाः । व॒वृ॒धुः । ये । च॒ । दे॒वान् ।
स्वाहा॑ । अ॒न्ये । स्व॒धया॑ । अ॒न्ये । म॒द॒न्ति॒ ॥३॥

सायणः—मातली । मातलिः इन्द्रस्य सारथिः । तद्वानिन्द्रो मातली । सः कव्यैः कव्यभागिभिः पितृभिः सह ववृधानो वर्धमानो भवति । यमश्चाङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति । तत्र देवा इन्द्रादयो यांश्च कव्यभागादीन् पितॄन् ववृधुर्वर्धयन्ति ये च कव्यभागादयः पितरो देवानिन्द्रादीन् वर्धयन्ति तेषां मध्ये अन्ये इन्द्रादयः स्वाहा मदन्ति स्वाहाकारेण हृष्यन्ति अन्ये पितरः स्वधया स्वधाकारेण हृष्यन्ति ॥३॥

उद्गीथाचार्यः—मातली सारथिरिन्द्रस्य । कव्यैः कव्यनामभिः पितृभिस्सह । ववृधानः सर्वप्रधानया वृद्ध्या वर्धमानः आस्ते । यमप्रसादादिति वाक्यशेषः । यमश्चांगिरो-

भिस्सह सदा वर्द्धमान आस्ते । बृहस्पतिर्ऋक्भिः । ऋक्वनो देवविशेषाः । ऋक्भिर्मध्यस्थानैर्देवगणैस्सह सदा वव्रृधानो वर्द्धमान आस्ते । यमप्रसादात् । किञ्च यांश्च पितॄन् देवा वव्रृधुः वर्द्धयन्ति स्वेनोपकारेण । ये च पितरो देवान् स्वेनोपकारेण वर्द्धयन्ति । यच्छब्दसम्बन्धात्तच्छब्दोऽध्याहार्यः । तेषां पितॄणां मध्ये एके पितरः स्वाहा मदन्ति । स्वाहाकारप्रदानेन हविषा तृप्यन्ति । यमेन सह स्वधयान्ये मदन्ति । स्वधाकारप्रदानेन हविषैके तृप्यन्ति यमेन सह ॥३॥

Pet.:—Mātalin with the Kavyas, Yama with the Aṅgirasas, Bṛhaspati with the Ṛkvans grow there in strength; they serve rhe gods, and the gods serve them; rejoicing together, the gods in our sacrifice, the fathers in our oblation.

Ren.:—Mātali with the Kavyas, Yama with the Angirasas,
Bṛhaspati, invigorated by the Singers,
Those who with the gods mutually received vigour,
—The ones content with "svāhā !", the others with "svadhā !"

---

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व ॥४॥

इमम् । यम । प्रऽस्तरम् । आ । हि । सीद । अङ्गिरःऽभिः । पितृभिः ।
संऽविदानः । आ । त्वा । मन्त्राः । कविऽशस्ताः । वहन्तु ।
एना । राजन् । हविषा । मादयस्व ॥४॥

*सायणः*—हे यम अङ्गिरोभिः एतन्नामकैः पितृभिः सविदानः ऐकमत्यं गतः इमं प्रस्तरं विस्तीर्णं यज्ञविशेषं आ सीद आगत्योपविश । हि यस्मादेवं तस्मात् कविशस्ताः विद्वद्भिः ऋत्विग्भिः प्रयुक्ताः मन्त्राः त्वा त्वां आ वहन्तु । हे राजन् एना एतेन हविषा तुष्टो मादयस्व यजमानं हर्षय ॥४॥

*उद्गीथाचार्यः*—इमं । हे यम । प्रस्तरम् अस्मदीयवेदिस्तरणगर्भासनं (दर्भासनं ?) प्रति । आ हि सीद । हीति पदपूरणः । उपवेष्टुमागच्छ । किं कुर्वन् । उच्यते । अंगिरोभिः अंगिरोनामभिः पितृभिस्सह(स)न् पथि विनोदनार्थं विचित्राः (कथाः) कुर्वन्निति । आगच्छन्तं च सन्तं त्वां स्तुतिमन्त्राः कविशस्ता मेधाविभिः ऋक्वभिः आ वहन्तु श्रोतव्यत्वेन निमित्तभूताः प्रापयन्तु । आगत्य च इहास्मद्यज्ञे । मादयस्व तर्पयात्मानं तृप्य वा ॥४॥

Pet.—Here O Yama, is a place for thee, join thyself to our father Aṅgirasas and sit down : may the spells said by our wise men bring thee ; rejoice, O King, in this our offering.

Ren.—Take seat, O Yama, on this litter,
In accord with our fathers, the Angirasas!
May the verses recited by the poets bring thee here!
Rejoice in this oblation, O King.

---

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥५॥

अङ्गिरःऽभिः । आ । गहि । यज्ञियेभिः । यम । वैरूपैः । इह ।
मादयस्व । विवस्वन्तम् । हुवे । यः । पिता । ते । अस्मिन् ।
यज्ञे । बर्हिषि । आ । निऽसद्य ॥५॥

*सायणः*—हे यम वैरूपैः विविधरूपयुक्तैः वैरूपसामप्रियैर्वा यज्ञियेभिः यज्ञयोग्यैः अङ्गिरोभिः सह आ गहि आगच्छ। आगत्य च इह अस्मिन् यज्ञे मादयस्व यजमानं हर्षय। यो विवस्वान् ते तव पिताऽस्ति अस्मिन् यज्ञे तं विवस्वन्तं हुवे आह्वयामि। स चास्तीर्णे बर्हिषि आ निषद्योपविश्य यजमानं हर्षयतु ॥५॥

*उद्गीथाचार्यः*—अंगिरोभिस्सहागच्छ। यज्ञियेभिः यज्ञार्हैः। यज्ञसम्पादिभिर्वा। विरूपा एव वैरूपाः। बहुरूपैरिति। आगत्य च इहास्मद्यज्ञे। [ मादयस्व ] तर्पयात्मानं तृप्य वा। ते तव। तमित्याध्याहार्यम्। यदिति सामर्थ्यात्। तेन चाहूतेन सहास्मिन् यज्ञे। बर्हिषि वेदिस्स्तरणे आ निषद्य मर्यादयोपविश्य। हविषा मादयस्वेति ॥५॥

Pet.:—Come with holy Angirasas, with the Vairūpas here,
O Yama, rejoice: I summon Vivasvat, who is thy father;
Sit down in the place made at my sacrifice.

Ren.:—Come with the Angirasas, worthy of the sacrifice,
O Yama, rejoice in the company of the Vairūpas!
I invite Vivasvat, who is thy father—
Seating thyself on the seat of grass at this sacrifice.

---

आङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥६॥

आङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः ।
सोम्यासः । तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् ।
अपि । भद्रे । सौमनसे । स्याम ॥६॥

*सायणः*—अङ्गिरसः अङ्गिरोनामकाः अथर्वाणः अथर्वनामकाः भृगवः भृगुनामकाश्च नोऽस्माकं पितरः नवग्वाः अभिनवगमनयुक्ताः तदा नूतनवल्लीविजनका इत्यर्थः । ते च सोम्यासः । सोममर्हन्तीति सोम्याः । यज्ञियानां यज्ञार्हाणां तेषां सुमतौ अनुग्रहयुक्तायां बुद्धौ वयं स्याम सर्वदा तिष्ठेम । अपि च सौमनसे भद्रे सौमनसस्य कारणे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥६॥

*उद्गीथाचार्यः*—ये पितरो वा । नः अस्माकं । पितरः । कीदृशाः । नवग्वाः मासे मासे पितृयज्ञे नवा गतिः । न पतिते वा मनसो गतिरभिलाषः । भृगवश्च । सोम्यासः सोमसम्पादिनः । तेषां सर्वेषामेव । वयं । सुमतौ स्याम शोभनायामनुग्राहकबुद्धौ । यज्ञियानां यज्ञार्हाणां यज्ञसम्पादिनां वा । अपि । भद्रे मन्दनीये भाजनवति वा । सौमनसे सौमनस्ये प्रीतावित्यर्थः । स्याम भवेमेत्याशास्महे । यमप्रसादादिति योज्यम् । तद्देवतत्वाविघाताय मन्त्रस्य ॥६॥

Pet. :—Our fathers, Aṅgirases, the Navagvas, the Atharvans, the soma-loving Bhṛgus—may these holy ones have us in their good will, may they have us in their kind favour.

Ren. :—Our fathers, the Aṅgirasas, the Navagvas,
The Atharvans, the Bhṛgus, (all) worthy of Soma,
Worthy of sacrifice—may we be in their favour,
In their auspicious goodwill.

---

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥७॥

प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येऽभिः । यत्र । नः । पूर्वे ।
पितरः । पराऽईयुः । उभा । राजाना । स्वधया । मदन्ता ।
यमम् । पश्यासि । वरुणम् । च । देवम् ॥७॥

*सायणः*—यत्र यस्मिन् स्थाने नोऽस्माकं पूर्वे पुरातनाः पितरः पितामहादयः परेयुः पूर्व्येभिः पूर्वस्मिन् काले भवैः । अनादिकालप्रवृत्तैरित्यर्थः, पथिभिर्मार्गैः हे मत्पितस्तत्स्थानं प्रेहि प्रगच्छ शीघ्रम् गच्छ । तत्र गत्वा च

स्वधया अमृतान्नेन मदन्ता मदन्तौ तृप्यन्तौ राजाना राजानौ उभा उभौ यमं देवं द्योतमानं वरुणं च पश्यासि पश्य ॥७॥

Pet. :—(To the corpse):—

Go forth, by the old paths, by which our fathers, that were before us, passed : thou too shalt look on the Twin Kings rejoicing in our sacrifice, on Yama and on God Varuna.

Ren. :—Advance, Advance by the ancient paths,
By which have passed our first fathers !
The two Kings, Yama and the god Varuna,
Who rejoice at the funeral rite, thou'lt see them.

---

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥८॥

सम् । गच्छस्व । पितृभिः । सम् । यमेन । इष्टापूर्तेन । परमे ।
विऽओमन् । हित्वाय । अवद्यम् । पुनः । अस्तम् । आ ।
इहि । सम् । गच्छस्व । तन्वा । सुऽवर्चाः ॥८॥

सायणः—हे मदीय पितः अतस्त्वं परमे उत्कृष्टे व्योमन् व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः सह सं गच्छस्व । इष्टापूर्तेन श्रौतस्मार्तदानफलेन संगच्छस्व । तत इष्टापूर्तेन सहागम्य अवद्यं पापं हित्वा परित्यज्य अस्तं क्रियमाणाख्यं गृहमेहि आगच्छ । ततः सुवर्चाः तृतीयार्थे प्रथमा । सुवर्चसा शोभनदीप्तियुक्तेन तन्वा शरीरेण संगच्छस्व ॥८॥

Pet. :—Go meet the fathers in heaven on high, meet Yama, meet the good works which thou hast done : leave here all evil, and go home, there glorious meet another body.

Ren :—Unite thou with the Fathers, unite with Yama,
With the sacrifices, with works, in the highest firmament !
Leaving all pollution behind, regain thy place,
Unite thyself with thy body, endowed with full brilliance.

---

अपे॑त॒ वी॑त॒ वि च॑ सर्प॒ताऽतो॒ऽस्मा ए॒तं पि॒तरो॑ लो॒कम॑क्रन् ।
अहो॑भिर॒द्भिर॒क्तुभि॒र्व्य॑क्तं य॒मो द॑दात्यव॒सान॑मस्मै ॥९॥

अप॑ । इ॒त॒ । वि । इ॒त॒ । वि । च॒ । स॒र्प॒त॒ । अतः॑ । अ॒स्मै । ए॒तम् । पि॒तरः॑ । लो॒कम् । अ॒क्र॒न् । अहः॑ऽभिः । अ॒त्ऽभिः । अ॒क्तुऽभिः॑ । वि॒ऽअ॑क्तम् । य॒मः । द॒दा॒ति॒ । अ॒व॒ऽसान॑म् । अ॒स्मै ॥९॥

*सायणः*—श्मशाने पूर्वे स्थिता हे पिशाचादयः अतः अस्मात् मृतयजमान-दहनस्थानादपेत अपगच्छत वीत विशेषेण गच्छत । वि सर्पत च । इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः । पितरः अस्मै मृतयजमानस्यार्थाय एतं लोकमिदं दहनस्थानम् अक्रन् यमस्याज्ञया अन्वकुर्वन् । यमोऽप्यह्नोभिर्दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तुभिः रात्रिभिर्व्यक्तं संगतम् । शुद्धिनिमित्तैः कालोदकादिभिः शोधितम् इत्यर्थः । अवसानं दहनस्थानं अस्मै मृतयजमानस्यार्थाय ददाति दत्तवान् ॥९॥

Pet. :—(To the bystanders):—Stand aside, go away, disperse, the fathers have made this place for him, furnished with days and waters and nights : Yama will give him rest.

Ren. :—Go away, run off, crawl out of here !
The Fathers have made this place for him.
Yama gives him a place of respite,
All decorated with days, waters and nights.

---

अति॑ द्रव सार॒मेयौ॑ श्वानौ॑ चतुर॒क्षौ श॒बलौ॑ सा॒धुना॑ प॒था ।
अथा॑ पि॒तॄन् सु॑वि॒दत्राँ॒ उपे॑हि य॒मेन॒ ये स॑ध॒माद॒ मद॑न्ति ॥१०॥

अति॑ । द्र॒व॒ । सा॒र॒मे॒यौ । श्वानौ॑ । च॒तुः॒ऽअ॒क्षौ । श॒बलौ॑ । सा॒धुना॑ । प॒था । अथ॑ । पि॒तॄन् । सु॒ऽवि॒दत्रा॑न् । उप॑ । इ॒हि॒ । य॒मेन॑ । ये । स॒ध॒ऽमाद॑म् । मद॑न्ति ॥१०॥

*सायणः*—हे अग्ने साधुना पथा समीचीनेन मार्गेण श्वानावुभौ अति द्रव अतिक्रम्य गच्छ । यमसम्बन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः । कीदृशौ श्वानौ । सारमेयौ । सरमा नाम काचित् प्रसिद्धा देवशुनी । तस्याः पुत्रौ चतुरक्षौ उपरिभागे पुनरप्यक्षिद्वयं

ययोस्तादृशौ। अथ शोभनमार्गेण गमनानन्तरं ये पितरो यमेन सधमादं सहर्षं मदन्ति प्राप्नुवन्ति तान्सुविदत्रान् सुष्ठुत्वभिज्ञान् पितॄन् उपेहि उपगच्छ ॥१०॥

Pet. :—(To the corpse) :—Run and outstrip the two dogs of Saramā, the dappled dogs, each with four eyes: run straight from them; so shalt thou come to the gracious fathers, who live in joy with Yama.

Ren. :—Run ahead of the two dogs born of Saramā,
The speckled (dogs), the four-eyed, (Go) by the direct path!
Approach the Fathers, whose (heart) you'll easily find,
Who rejoice at a common feast with Yama!

---

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्स्वस्ति चास्मा अनमीवं च धेहि ॥११॥

यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ । ताभ्याम् । एनम् । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवम् । च । धेहि ॥११॥

सायणः—हे राजन् हे यम ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां हे राजन् यम एनं प्रेतं परि देहि रक्षणार्थं प्रयच्छ। कीदृशौ श्वानौ रक्षितारौ यमगृहस्य रक्षकौ चतुरक्षौ अक्षिचतुष्टययुक्तौ पथिरक्षी मार्गस्य रक्षकौ। नृचक्षसौ मनुष्यैः ख्याप्यमानौ। श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषाः तैः प्रख्यापयन्ति। ताभ्यां श्वभ्यां दत्त्वा अस्मै प्रेताय स्वस्ति च क्षेमं अपि अनमीवं च रोगाभावं अपि धेहि सम्पादय ॥११॥

Pet. :—Those watch-dogs of thine, O Yama, warders of the path and watchers of men—give them, O King, charge over this man, grant him wealth and health.

Ren. :—Thy two dogs, O Yama, these guardians,
With four eyes, who watch the path and observe men,
Give them this (man), O King!
Ensure him well-being and absence of ill!

---

उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥१२॥

उरुऽनसौ । असुऽतृपौ । उदुम्बलौ । यमस्य । दूतौ । चरतः ।
जनान् । अनु । तौ । अस्मभ्यम् । दृशये । सूर्याय । पुनः ।
दाताम् । असुम् । अद्य । इह । भद्रम् ॥१२॥

*सायणः*—यस्य सम्बन्धिनौ दूतौ श्वानौ जनाँ अनु प्राणिनो लक्ष्यीकृत्य सर्वत्र चरतः । कीदृशौ उरुणसौ दीर्घनासिकायुक्तौ असुतृपौ परकीयान् प्राणान् स्वीकृत्य तैस्तृप्यन्तौ उदुम्बलौ उरुबलौ तावुभौ दूतौ सूर्याय दृशये सूर्यस्य दर्शनार्थम् अद्य दिने इह कर्मणि भद्रम् असुं समीचीनं प्राणं पुनरस्मभ्यं दातामदत्ताम् ॥१२॥

Pet. :—With wide nostrils, insatiate, these two dark messengers of Yama go up and down among men . may they to us here today grant again sweet breath, that we may see the Sun.

Ren. :—The two thieves of life with a big nose, the two...
Messengers of Yama wander among men,
That they deign restore us the auspicious life,
That we may (yet) see the Sun !

---

यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥१३॥

यमाय । सोमम् । सुनुत । यमाय । जुहुत । हविः ।
यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥१३॥

*सायणः*—हे ऋत्विजो यमाय यमदेवतार्थं सोमं सुनुत लतात्मकं सोमम् अभिषुणुत । तथा यमार्थं हविर्जुहुत । अग्नेर्दूतो यस्मिन् यज्ञे सोऽयमग्निदूतः । अग्नेर्दूतत्वमन्यत्राम्नातम् । 'अग्निर्देवानां दूत आसीदिति' (T. S. ii. 5,8,5) । अरंकृत. बहुभिर्द्रव्यैरलंकाररूपैर्युक्तः तादृशो यज्ञो यम ह यममेव गच्छति ॥१३॥

Pet. :—To Yama pour the Soma, to Yama bring the offering: to Yama the well-furnished sacrifice goes, with Agni for its herald.

Ren. :—For Yama press the Soma,
For Yama pour the offering,
To Yama goes the sacrifice,
Fully provided, with Agni as messenger.

---

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥१४॥

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत ।
सः । नः । देवेषु । आ । यमत् । दीर्घम् । आयुः । प्र । जीवसे ॥१४॥

सायणः—हे ऋत्विजो यूयं यमाय घृतवदाज्येन संयुक्तं हविः पुरोडाशादिकं जुहोत जुहुत । प्र च तिष्ठत यमम् यूयम् उपतिष्ठध्वं च । देवेषु मध्ये सः यमो देवः प्र जीवसे प्रकृष्टजीवनार्थं नोऽस्माकं दीर्घमायुः आयमत् प्रयच्छतु ॥१४॥

Pet.—To Yama bring the fat oblation, and draw near: may he bring us to the gods, to live a long life in heaven.

Ren.:—To Yama offer the oblation
With ghee; take your seat ahead !
That he deign guide us among gods,
That we may live a long life !

---

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥१५॥

यमाय । मधुमत्ऽतमम् । राज्ञे । हव्यम् । जुहोतन ।
इदम् । नमः । ऋषिभ्यः । पूर्वजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥१५॥

सायणः—हे ऋत्विजो यमाय राज्ञे मधुमत्तममतिशयेन मधुरं हव्य पुरोडाशादिकं हविर्जुहोतन जुहुत । पूर्वजेभ्यः सृष्ट्यादावुत्पन्नेभ्यः अत एव पूर्वेभ्यः अस्मत्तः पूर्वभाविभ्यः पथिकृद्भ्यः शोभनमार्गकारिभ्यः ऋषिभ्यः इदं प्रत्यक्षं यथा भवति तथा नमोऽस्तु ॥१५॥

Pet.:—To Yama, the King pour out the honied oblation then bow low before the sages born in old time, our fathers, who made for us this path.

Ren :—To Yama offer the oblation,
The richest in honey,
—Our homage is for the ancient Sages,
The Path-makers, who are the first-born.

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत् ।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥१६॥

त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकम् । इत् । बृहत् ।
त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे । आऽहिता ॥१६॥

*सायणः*—त्रिकद्रुकेभिः । द्वितीयार्थे तृतीयैषा । त्रिकद्रुकान् । ज्योतिर्गौरायुरिति त्रयो यागविशेषास्त्रिकद्रुका उच्यन्ते । तान्प्रत्यङ्गभावाय संरक्षणार्थम् च पतति यमः प्राप्नोति। षट्संख्याकाः उर्वीः भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति । ताश्चोर्व्यः शाखान्तरमन्त्रे समाम्नाताः षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क् च सूनृता चेति । एकमित् एकमेव बृहत् महत् जगद्यमश्च प्रतिपालनीयः प्राप्नोति । किं च यानि त्रिष्टुब्गायत्र्यादीनि छन्दांसि सन्ति सर्वा ता सर्वाणि तानि छन्दांसि यमे आहिता आहितानि । ऋत्विग्भिः स्तुतित्वेनावस्थितानि ॥१६॥

Ren.:—During the Trikadruka he flies
Towards the six vast (spaces) : the one (is called) the High.
The tristubh, the gāyatrī,
All metres are at Yama's disposal,

26—X—15

यमपुत्रः शंखाख्य ऋषिः । 'अग्निष्वात्ता' इत्येषा जगती,
शिष्टास्त्रिष्टुभः । पितरो देवता ।

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥१॥

उत् । ईरताम् । अवरे । उत् । परासः । उत् । मध्यमाः । पितरः ।
सोम्यासः । असुम् । यः । ईयुः । अवृकाः । ऋतऽज्ञाः ।
ते । नः । अवन्तु । पितरः । हवेषु ॥१॥

सायण:—त्रिविधाः पितर, उत्तमा मध्यमा अधमाश्चेति। यथाविधं श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः। स्मार्तकर्ममात्रपरा मध्यमाः। अत्रापि कैश्चित्संस्कारैर्विकला अधमाः। एतदेवाभिप्रेत्य 'येऽग्निदग्धा येऽनग्निदग्धाः' इत्यादिमन्त्रः समाम्नान्तः। तेषु अवरे निकृष्टाः उदीरताम् उत्तमं हविः प्राप्नुवन्तु। परासः उत्तमाः पितरः उत् ईरताम्। मध्यमाः पितरश्च उत् ईरताम्। ते सर्वेऽप्यस्मद्विषये सोम्यासः सोम्या अनुग्रहपराः सन्तु। ये पितरः अवृकाः वृकवदरण्यश्ववदस्मासु हिंसामकुर्वन्तः ऋतज्ञाः अस्मदनुष्ठितं यज्ञं जानन्तः असुम् अस्मत्प्राणम् ईयुः रक्षितुं प्राप्ताः ते पितरः हवेषु अस्मदीयेष्वाह्वानेषु पुनः नः अस्मान् अवन्तु रक्षन्तु ॥१॥

Mm. :—May the Soma-loving Fathers, the lowest, the highest and the middle, arise. May the gentle and righteous Fathers who have come to life (again), protect us in these invocations

—

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥२॥

इदम्। पितृऽभ्यः। नमः। अस्तु। अद्य। ये। पूर्वासः। ये।
उपरासः। ईयुः। ये। पार्थिवे। रजसि। आ। निऽसत्ताः।
ये। वा। नूनम्। सुऽवृजनासु। विक्षु ॥२॥

सायण:—पूर्वासः यजमानोत्पत्तेः पूर्वमुत्पन्नाः ज्येष्ठभ्रातृपितामहादयः ये ईयुः पितृलोकं प्राप्ताः। ये चान्ये उपरासः यजमानजन्मन उपरि उत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादय ईयुः पितृलोकं प्राप्ताः। ये अप्यन्ये पार्थिवे पृथिवीसंबंधिनि रजसि रजोगुणकार्येऽस्मिन् कर्मणि आ निषत्ता हविः स्वीकर्तुमागत्योपविष्टाः। ये वा केचिदन्ये बन्धुवर्गरूपाः पितरः विक्षु बन्धुरूपासु प्रजासु आ निषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः। कीदृशीषु विक्षु। सुवृजनासु। वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनम्। शोभनं वृजनं यासां ताः सुवृजनाः। तादृशीषु। धनसमृद्ध्या श्राद्धादिकर्मपरायणास्वित्यर्थः। सर्वेभ्य उक्तेभ्यः पितृभ्यः अद्य अस्मिन् कर्मणि इद नमः अस्तु। अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु ॥२॥

Mm. :—May this salutation be for the Fathers today, for those who have departed before or after; whether they now dwell in the sky above the earth, or among the blessed people.

—

आहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥३॥

आ । अहम् । पितॄन् । सुऽविदत्रान् । अवित्सि । नपातम् । च । विक्रमणम् । च । विष्णोः । बर्हिऽसदः । ये । स्वधया । सुतस्य । भजन्त । पित्वः । ते । इह । आऽगमिष्ठाः ॥३॥

*सायणः*—अहं यजमानः सुविदत्रान् मदीयां भक्तिं सुष्ठु जानतः पितॄन् अवित्सि आभिमुख्येन लब्धवानस्मि । विष्णोः व्यापिनो यज्ञस्य नपातं च विनाशाभावं च विक्रमणं च विशेषेण प्रवृत्तिं च लब्धवानस्मि । ये पितरः बर्हिषदः बर्हिषि सीदन्ति ते इह अस्मिन् कर्मणि आगमिष्ठाः अतिशयेनागताः । आदरपूर्वं समागत्य स्वधया पुरोडाशाद्यन्नेन सह सुतस्य अभिषुतस्य सोमलक्षणस्य पित्वः पितोरन्नस्य भागं भजन्त सेवन्ते उपयुञ्जते ॥३॥

Mm. :—I invited the wise Fathers...may they come hither quickly, and sitting on the grass readily partake of the poured out draught.

---

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा नः शंयोररपो दधात ॥४॥

बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमाः । वः । हव्या । चकृम । जुषध्वम् । ते । आ । गत । अवसा । शम्ऽतमेन । अथ । नः । शम् । योः । अरपः । दधात ॥४॥

*सायणः*— हे बर्हिषदः । यज्ञे सीदन्ति इति बर्हिषदः । अत्रापि । 'ये वै यज्वानस्ते पितरो बर्हिषदः' (तै. ब्रा. 1-6-9) इत्यत्र श्रुतत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता बर्हिषदः । तादृशा हे पितरः अर्वाक् अर्वाचीनानामस्माकम् ऊती रक्षा भवद्भिः कर्तव्येति शेषः । वः युष्मदर्थं इमा हव्या एतानि हवींषि चकृम अतस्तानि जुषध्वम् ते हविर्जुष्टवन्तो यूयं शंतमेन सुखतमेन अवसा रक्षणेन निमित्तभूतेन आ गत आभिमुख्येनास्मान् प्राप्नुत । अथ अनन्तरं नः अस्मभ्यं शं सुखं योः दुःखवियोगम् अरपः पापरहितं च दधात दत्त ॥४॥

Mm. :– Come hither to us with your help, you Fathers who sit on the grass! We have prepared these libations for you, accept them! Come hither with your most blessed protection and give us health and wealth without fail!

---

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥५॥

उपऽहूताः । पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु । प्रियेषु ।
ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु ।
ते । अवन्तु । अस्मान् ॥५॥

*सायणः*—सोम्यासः सोम्या अस्मदनुग्रहपराः सोमसम्पादिनो वा पितरः बर्हिष्येषु यागार्हेषु प्रियेषु तृप्तिकरेषु निधिषु निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सु उपहूताः अस्माभिराहूताः ते पितरः आ गमन्तु आगच्छन्तु । आगत्य च इह अस्मिन् कर्मणि अस्माभिः प्रयुक्ताः स्तुतीः श्रुवन्तु शृण्वन्तु । श्रुत्वा च अधि ब्रुवन्तु । साधुरयं यजमान इत्यादरेण कथयन्तु । ते तादृशाः पितरः अस्मान् अवन्तु रक्षन्तु ॥५॥

Mm. –The Soma-loving fathers have been called hither to their dear viands which are placed on the grass. Let them apprcach, let them listen, let them bless, let them ptotect us.

---

आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।
मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥६॥

आऽअच्य । जानु । दक्षिणतः । निऽसद्य । इमम् । यज्ञम् । अभि ।
गृणीत । विश्वे । मा । हिंसिष्ट । पितरः । केन । चित् ।
नः । यत् । वः । आगः । पुरुषता । कराम ॥६॥

*सायणः*—हे पितरः विश्वे सर्वे यूयं जानु आच्य भूमौ निपात्य दक्षिणतः दक्षिणपार्श्वे निषद्य उपविश्य इमम् अस्मदीयं यज्ञमभि गृणीत अभिष्टुत । विशिष्टतृप्तियोगात् परया प्रीत्या सगुणोऽयं यज्ञ इति प्रशंसतेत्यर्थः । अपि च वः युष्माकं यत्किंचित् कर्म वैगुण्यजनितम् आगः अपराधं पुरुषता मनुष्यत्वेन

हेतुना कराम वयं कृतवन्तः हे पितरः तेन केनचित् अप्यपराधेन नः अस्मान् मा हिंसिष्ट ॥६॥

Mm:—Bending your knee and sitting on my right, accept all this sacrifice. Do not hurt us, O Fathers, for any wrong that we may have committed against you, men as we are.

---

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥७॥

आसीनासः । अरुणीनाम् । उपऽस्थे । रयिम् । धत्त । दाशुषे ।
मर्त्याय । पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत ।
ते । इह । ऊर्जम् । दधात ॥७॥

*सायणः*—अरुणीनाम् आरोचमानानां ज्वालानां वा देवतानां वा उपस्थे समीपस्थाने वेद्याख्ये आसीनासः उपविष्टाः पितरो यूयं दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानस्य रयिं धनं धत्त दत्त । हे पितरः यूयं तस्य यजमानस्य पुत्रेभ्यः वस्वः वसु धनं प्र यच्छत । ते तादृशा यूयम् इह अस्मिन् अस्मदीये कर्मणि ऊर्जं धनं दधात निधत्त ॥७॥

Mm:—When you sit down on the lap of the red dawns, grant wealth to the generous mortal ! O Fathers, give of your treasures to the sons of this man here, and bestow vigour here on us !

---

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥८॥

ये । नः । पूर्वे । पितरः । सोम्यासः । अनुऽऊहिरे । सोमऽपीथम् ।
वसिष्ठाः । तेभिः । यमः । सम्ऽरराणः । हवींषि ।
उशन् । उशत्ऽभिः । प्रतिऽकामम् । अत्तु ॥८॥

*सायणः*—सोम्यासः सोमसंपादिनः वसिष्ठाः । वस्तृतमाः कृताच्छादना धनवत्तमा वा नः अस्माकं ये पूर्वे पितरः सोमपीथं सोमपानं अनूहिरे आनुपूर्व्येण

देवेभ्यश्च पितृभ्यश्च प्रापयन्त । दत्तवन्त इत्यर्थः । उशन् पितृभिः सह संयोगं कामयमानः यमः पितृपतिः उशद्भिः यमेन सह संयोगं कामयमानैः तेभिः तैरस्मदीयैः पितृभिः सह रराणः रममाणः हवींषि अस्माभिर्दत्तानि प्रतिकामं कामंकामं प्रति अत्तु । यानि यानि हवींषि कामयते तानि तानि भक्षयत्वित्यर्थः ॥८॥

Mm.:—May Yama as a friend with friends consume the offerings according to his wish, united with those old soma-loving Fathers of ours, the Vasisthas, who arranged the soma-draught.

---

ये ता॒तृ॒षुर्दे॑व॒त्रा जेह॑माना होत्रा॒विदः॒ स्तोम॑तष्टासो अ॒र्कैः ।
आग्ने॑ याहि सुवि॒दत्रे॑भिर॒र्वाङ् स॒त्यैः क॒व्यैः पि॒तृभि॑र्घर्म॒सद्भिः॑ ॥९॥

ये । त॒तृ॒षुः । दे॒व॒ऽत्रा । जेह॑मानाः । हो॒त्रा॒ऽविदः॑ । स्तोम॑ऽतष्टा-
सः । अ॒र्कैः । आ । अ॒ग्ने॒ । या॒हि॒ । सु॒ऽवि॒दत्रे॑भिः । अ॒र्वाङ् ।
स॒त्यैः । क॒व्यैः । पि॒तृऽभिः॑ । घ॒र्म॒सत्ऽभिः॑ ॥९॥

सायणः—देवत्रा देवान् जेहमानाः क्रमेण गच्छन्तः । क्रमेण देवत्वं प्राप्ता इत्यर्थः । होत्राविदः यज्ञान् सम्यक्कर्तुं वेदितारः अर्कैः अर्चनीयैः स्तोत्रैः स्तोमतष्टाः स्तोमानां च सम्यक्कर्तारः ये पितरः ततृषुः तृष्यन्ति हे अग्ने त्वं तैः पितृभिः अर्वाङ् अस्मदभिमुखः आ याहि आगच्छ । कीदृशैः । सुविदत्रेभिः सुविदत्रैः सत्यैः अविसंवादिभिः कव्यैः । कव्यं नाम पितृदेवत्यं हविः । तत्संबन्धिभिः । यद्वा कव्यैः कविभिर्मेधाविभिः । स्वार्थिको यत् । घर्मसद्भिः यज्ञसादिभिः ॥९॥

Mm.—Come hither O Agni, with those wise and truthful Fathers who like to sit down near the hearth, who thirsted when yearning for the gods who knew the sacrifice, and who were strong in praise with their songs.

ये स॒त्यासो॑ ह॒वि॒रदो॑ ह॒वि॒ष्पा इन्द्रे॑ण दे॒वैः स॒रथं॑ दधा॑नाः ।
आग्ने॑ याहि स॒हस्रं॑ देवव॒न्दैः परैः॒ पूर्वैः॑ पि॒तृभि॑र्घर्म॒सद्भिः॑ ॥१०॥

ये । स॒त्यासः॑ । ह॒विः॒ऽअदः॑ । ह॒विः॒ऽपाः । इन्द्रे॑ण । दे॒वैः । स॒ऽरथ॑म् । दधा॑नाः । आ । अ॒ग्ने॒ । या॒हि॒ । स॒हस्र॑म् । दे॒व॒ऽव॒न्दैः । परैः॑ । पूर्वैः॑ । पि॒तृऽभिः॑ । घ॒र्म॒सत्ऽभिः॑ ॥१०॥

*सायणः*—सत्यासः सत्याः ये पितरः हविरदः भक्षणयोग्यस्य हविषोऽत्तारो भक्षयितारः हविष्पाः पानयोग्यस्य हविषः पातारः इन्द्रेण देवैः सरथं समानमेकं तुल्यं वा रथं दधानाः । लडर्थे शानच् । गमनाय सदा धारयन्ति हे अग्ने तैः पितृभिः सह आ याहि आगच्छ । कीदृशः । सहस्रम् । तृतीयार्थे प्रथमा । सहस्रेण । बाहुभिरित्यर्थः । देववन्दैः देवसम्बन्धिभिः स्तोत्रैर्युक्तः परैः परकालीनैः पूर्वैः पूर्वकालीनैः घर्मसद्भिः यज्ञसादिभिर्महावीरसादिभिरादित्यसादिभिर्वा ॥१०॥

Mm. :—Come, O Agni, with those ancient Fathers, who like to sit down near the hearth, who for ever praise the gods, the truthful, who eat and drink our oblations, making company with Indra and the gods.

---

अग्नि॑ष्वात्ताः पितर॒ एह ग॑च्छत॒ सदः॑सदः सदत सुप्रणीतयः ।
अ॒त्ता ह॒वींषि॒ प्रय॑तानि ब॒र्हिष्य॒था र॒यिं सर्व॑वीरं दधातन ॥११॥

अग्नि॑ऽस्वात्ताः । पित॑रः । आ । इ॒ह । ग॒च्छ॒त॒ । सदः॑ऽसदः । स॒द॒त॒ । सु॒ऽप्र॒नी॒त॒यः॒ । अ॒त्त । ह॒वींषि॑ । प्रऽय॑तानि । ब॒र्हिषि॑ । अथ॑ । र॒यिम् । सर्व॑ऽवीरम् । द॒धा॒त॒न॒ ॥११॥

*सायणः*—अग्निष्वात्ताः अग्निना स्वादिताः पितरः यूयम् इह अस्मिन् कर्मणि आ गच्छत । आगत्य च हे सुप्रणीतयः अभिपूजितप्रणयनाः यूयं सदःसदः तत्तत्स्थानं सदत सीदत । तत्र तत्र स्थाने यथेष्टमुपविशतेत्यर्थः । उपविश्य च बर्हिषि आसादितानि प्रयतानि शुचीनि हवींषि अत्त भक्षयत । अथ अनन्तरं सर्ववीरं सर्वैर्वीरैः पुत्रपौत्रैरुपेतं रयिं धनं दधातन अस्मभ्यं दत्त ॥११॥

*उद्गीथाचार्यः*—...तैरस्माभिः संस्कृतानि शुचीनि । बर्हिषि आसादितानीति शेषः । अथ अनन्तरं च । रयिं धनम् । सर्ववीरं सर्वैर्वीरैः पुत्रैः पौत्रैश्चोपेतम् । दधातन दत्तास्मभ्यम् ॥११॥

Mm. :—O Fathers, you who have been consumed by Agni, come here, sit down on your seats, you kind guides! Eat of the offerings which we have placed in the turf and then grant us wealth and strong offspring!

---

त्वम॑ग्न ईळि॒तो जा॑तवेदोऽवा॑ड्ढ॒व्यानि॑ सुर॒भीणि॑ कृ॒त्वी ।
प्रादा॑: पि॒तृभ्य॑: स्व॒धया॒ ते अ॑क्षन्न॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वींषि॑ ॥१२॥

त्वम् । अ॒ग्ने॒ । ई॒ळि॒तः । जा॒त॒ऽवे॒दः॒ । अवा॑ट् । ह॒व्यानि॑ । सु॒र॒भीणि॑ ।
कृ॒त्वी । प्र । अ॒दाः॒ । पि॒तृऽभ्यः॑ । स्व॒धया॑ । ते । अ॒क्ष॒न् । अ॒द्धि ।
त्वम् । दे॒व॒ । प्रऽय॑ता । ह॒वींषि॑ ॥१२॥

*सायणः*—हे जातवेदः। जातं सर्वं जगद्वेत्तीति जातवेदाः। तथाविध हे अग्ने ईळितः अस्माभिः स्तुतः त्वं हव्यानि अस्मदीयानि हवींषि सुरभीणि सुगन्धीनि कृत्वी कृत्वा अवाट् वहनं कृतवानसि! कृत्वा च पितृभ्यः प्रादाः। ते च पितरः स्वधया स्वधाकारेण दत्तं हविः अक्षन् अदन्तु। हे देव त्वम् अपि प्रयता प्रयत्नसंपादितानि हवींषि अद्धि भक्षय ॥१२॥

*उद्गीथाचार्यः*—हे अग्ने जातवेदः उत्पन्नसर्वविषयवस्तुज्ञान। त्वमस्माभिरीडितः स्तुतः। अवाट् ऊढवानसि पितॄन् प्रति प्रापितवानसि। हव्यानि हवींषि। सुरभीणि सुगन्धीनि। कृत्वी कृत्वा। प्र अदाः प्रदत्तवांश्चासि। पितृभ्यः ते च पितरस्त्वया प्रत्तानि। स्वधया अन्नेन हेतुना अन्नमेतदस्माकमित्यभिप्रायेण। अक्षन् अत्तवन्तो भक्षितवन्तः। अथेदानीं कृतोपकारः सन्। अद्धि भक्षय त्वं हे देव। प्रयता प्रयतानि शुचीनि हवींषि ॥१२॥

Mm. :—O Agni, O Jâtavedas, at our request thou hast carried the offerings, having first rendered them sweet. Thou gavest them to the Fathers and they fed on their share. Eat also, O god, the proffered oblations!

---

ये चे॒ह पि॒तरो॒ ये च॒ नेह यांश्च॑ वि॒द्म याँ उ॑ च॒ न प्र॑वि॒द्म ।
त्वं वे॑त्थ॒ यति॒ ते जा॑तवेदः स्व॒धाभि॑र्य॒ज्ञं सुकृ॑तं जुषस्व ॥१३॥

ये । च॒ । इ॒ह । पि॒तरः॑ । ये । च॒ । न । इ॒ह । यान् । च॒ । वि॒द्म ।
यान् । ऊँ॒ इति॑ । च॒ । न । प्र॒ऽवि॒द्म । त्वम् । वे॒त्थ॒ । यति॑ । ते ।
जा॒त॒ऽवे॒दः॒ । स्व॒धाभिः॑ । य॒ज्ञम् । सुऽकृ॑तम् । जु॒ष॒स्व॒ ॥१३॥

*सायणः*—ये च पितरः इह अस्मत्समीपे वर्तन्ते ये च इह न सन्ति। यांश्च पितॄन् विद्म संनिकृष्टत्वाज्जानीमः याँ उ च न अपि च न प्रविद्म विकृष्टत्वाद्वयं न विजानीमः। यति ते यावन्तस्ते भवन्ति तान् तथोक्तान् सर्वान् हे जातवेदः उत्पन्नसर्ववस्तुविषयज्ञानाग्ने त्वं वेत्थ जानासि। स्वधाभिः हविर्लक्षणैरन्नैः सुकृतं साधुकृतं यज्ञं जुषस्व प्रीत्या गृहाण ॥१३॥

*उद्गीथाचार्यः*—ये च पितरश्च। इहास्मत्समीपे वर्तन्ते। ये चेह न सन्ति। यांश्च पितॄन् विद्म सन्निकृष्टत्वाज्जानीमो वयं यान् उ च न यानपि च न। प्रविद्म विप्रकृष्टत्वान्न विजानीमो वयम्। यति ते यत् संख्यायुताश्च ते पितरः तान् सर्वान् यथोक्तान्। त्वं वेत्थ त्वमेव जानासि। हे जातवेदः उत्पन्नसर्वविषयवस्तुज्ञान। यत एवमतः तेषां यत्संख्यायुक्तानां पितॄणाम् स्वधाभिरन्नैर्दातव्यत्वेन हेतुभूतैः इमं यज्ञम्। सुकृतं साधुकृतमपि गुणवद्भिरनुष्ठितम्। जुषस्व प्रीत्या परिगृहाण ॥१३॥

Mm. :—The Fathers who are here and the Fathers who are not here, those whom we know and those whom we not; thou, Jātavedas, knowest how many they are, accept the well-made sacrifice with the sacrificial portions!

---

ये अ॒ग्नि॒द॒ग्धा ये अन॑ग्निदग्धा॒ मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते।
तेभि॑ः स्व॒राळसु॑नीतिमे॒तां य॑थाव॒शं त॒न्वं॑ कल्पयस्व ॥१४॥

ये। अ॒ग्नि॒ऽद॒ग्धाः। ये। अन॑ग्निऽदग्धाः। मध्ये॑। दि॒वः। स्व॒धया॑। मा॒दय॑न्ते। तेभि॑ः। स्व॒ऽराट्। असु॑ऽनीतिम्। ए॒ताम्। य॒था॒ऽव॒शम्। त॒न्व॑म्। क॒ल्प॒य॒स्व॒ ॥१४॥

*सायणः*—ये पितरः अग्निदग्धाः अग्निना भस्मीकृताः। श्मशानं प्राप्ता इत्यर्थः। ये च पितरः अनग्निदग्धा श्मशानकर्म न प्राप्ताः मध्ये दिवः द्युलोकस्य मध्ये स्वधया हविर्लक्षणेनान्नेन मादयन्ते तृप्यन्ति हे अग्ने स्वराट् स्वकर्मोपभोगेन दीप्यमानः तेभिः तैः पितृभिः सहितः सन् असुनीतिं प्राणानां विषयेषु नेतारमस्मत्पित्रन्तरात्मानम् एतां तन्वम् एतद्देवताशरीरं यथावशं यथाकामं कल्पयस्व समर्थयस्व प्रापयेत्यर्थः ॥१४॥

*उद्गीथाचार्यः*—ये पितरः। अग्निना दग्धाः अग्निना भस्मीकृताः। श्मशानकर्मप्राप्ता इति। ये चाऽनग्निदग्धाः श्मशानकर्म न प्राप्ताः। मध्ये दिवः। स्वधयाऽन्नेन स्वकर्मफललक्षणेन। मादयन्ते तृप्यन्ति। तेभिः तैः पितृभिः सह संभूय। स्वराट् स्वकर्मफलोप-

भोगेन दीप्यमानः। असूनां प्राणानां विषयेषु नेतारं स्वभोगापनयाय प्रवर्तयितारमस्मदे- पित्रन्तरात्मानम्। एतां तन्वं एतद्देवताशरीरम्। यथावशं यथाकामम्। यथाभिलषितमिति। कल्पयस्व समर्थयस्व। गमयस्वेति। अग्निर्देवः पूर्वोक्तो वेदितव्यः। पूर्वमन्त्रेतस्यप्रकृ- तत्वात् ॥१४॥

Mm. :—To those who, whether burnt by fire, not burnt by fire, rejoice in their share in the midst of heaven, grant thou, O King, that they may take that life which they wish for !

---

## 27—X—34.

ऐलूषः कवष ऋषिः (मूजवत्पुत्रोऽक्षो वा) १, ३, ७, १२—अक्षा देवता। २, ४, ६, ८, ११, १४ कितवः अक्षाश्च देवता। १३—कृषिर्देवता। १—६, ८—१४ त्रिष्टुप् छन्दः। ७—जगती।

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥१॥

प्रावेपाः। मा। बृहतः। मादयन्ति। प्रवातेऽजाः। इरिणे। वर्वृतानाः। सोमस्यऽइव। मौजऽवतस्य। भक्षः। विऽभीदकः। जागृविः। मह्यम्। अच्छान् ॥१॥

सायणः—बृहतः महतो विभीदकस्य फलत्वेन सम्बन्धिनः प्रवातेजाः प्रवणे देशे जाता इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कम्पनशीला अक्षा मा मां मादयन्ति हर्षयन्ति। किञ्च, जागृविः जय-पराजय- योर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदकः विभीदकविकारोऽक्षो मह्यम् माम् अच्छान् अचच्छदत् अत्यर्थं मादयति। अत्र दृष्टान्तः—सोमस्येव यथा सोमस्य मौजवतस्य मूजवति पर्वते जातो मौजवतः तस्य, तत्र ह्युत्तमः सोमो जायते। भक्षः पानं यजमानान्देवांश्च मादयति तद्वदित्यर्थः ॥१॥

यास्कः—प्रवेपिनः मा महतो विभीदकस्य फलानि मादयन्ति। प्रवातेजा प्रवणेजा इरिणे वर्तमानाः। इरिणं निर्ऋणमृणातेरपार्णं भवति, अपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मूजवति जातः। मूजवान् पर्वतो मुञ्जवान्। मुञ्जो विमुच्यत इषीकया। इषीकेषतेर्गतिकर्मणः। इयमपीतरेषीकैतस्मादेव। विभीदको विभेदनात्। जागृविर्जागरणात्। मह्यमचच्छदत् ॥१॥

*उद्गीथाचार्यः*—प्रावेपाः प्रवेपिणः प्रकम्पनशीलाः। अक्षाः। मा मां। बृहतः महतः विभीतकस्य सम्बन्धिनः फलत्वेन फलानीति। मादयन्ति हर्षयन्ति। प्रवातेजाः प्रवरवाते काले वर्षासु प्रवणे वा प्रदेशे जाताः। इरिणे अप्सरे। ववृतानाः वर्तमानाः। न च मा मां मादयन्ति। किं तर्हि। सोमस्य इव यथा सोमस्य। मौजवतस्य। मूजवत्पर्वते जातस्य। भुक्षः पानं यजमानादीनत्यर्थमुदयत्केवम्। विभीदकः विकारः अथ। 'जागृ विजयपराजययोः', हर्षशोकाभ्याञ्जागरणस्य कर्ता। मह्यन्द्वितीयार्थे चतुर्थी, मामचक्षान् अन्तर्णीतभृशार्थमेतद् द्रष्टव्यम्। अचच्छदन् अत्यर्थं मादयति। केन सामर्थ्यात हर्षेण।

Ren. :—The tumultuous (nuts) of the high (tree) gladden me,
Who, born in open wind, roll forcefully towards the
concave board.
The vibhīdaka (dice), the lively, have pleased me
Like a mouthful of Soma, come from the (mount)
Mujavant.

---

न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत्।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ॥२॥

न। मा। मिमेथ। न। जिहीळे। एषा। शिवा। सखिऽभ्यः।
उत। मह्यम्। आसीत्। अक्षस्य। अहम्। एकऽपरस्य।
हेतोः। अनुऽव्रताम्। अप। जायाम्। अरोधम् ॥२॥

*सायणः*—एषा अस्मदीया जाया मा मां कितवं न मिमेथ न च चुक्रोध न जिहीळे न च लज्जितवती। सखिभ्यः अस्मदीयेभ्यः कितवेभ्यः शिवा सुखकरी आसीत् अभूत्। उत अपि च मह्यम् शिवासीत्। इत्थम् अनुव्रताम् अनुकूलां जायाम् एकपरस्य एकः परः प्रधानं यस्य तस्य अक्षस्य हेतोः कारणादहम् अपारोधम् परित्यक्तवानस्मीत्यर्थः ॥२॥

*उद्गीथाचार्यः*—मा मां न मिमेथ नाक्रुष्टवती सुशीलत्वात्। न जिहीळे नापि लज्जापितवती सुचरितत्वात्। अथवा न चुक्रोधैषा। एषा मम जाया। किंच शिवा सुखा। आसनप्रदानपादप्रक्षालनादि यथार्हप्रतिपत्त्या सुखकरीति। सखिभ्यः एव सुखाते। अपि मह्यमासीत्। सुखां एवं गुणविशिष्टां सती। अक्षस्य एकपरस्य एकः परः प्रधानः यस्य स एकपरः तस्य एकपरस्य पराजयप्रधानस्येति। अथवा एकपरस्य

एककृतायप्रधानस्य हेतोः कारणात् अक्षवितद्यूतेन निमित्तेनेति। अनुव्रतां अनुगतकर्माणां अनुकूलामिति। जायां भार्यामहमेव। अरोधम्। उपरोधितवानस्मि वित्तनाशेन दुःखितां कृतवानिति ॥२॥

Ren.—She has picked no quarrel with me, has not been angry either;

She has been kind to my friends and to me.
If I have pushed away the faithful wife,
The throw higher by one is the cause thereof.

---

द्वेष्टि॑ श्व॒श्रूरप॑ जा॒या रु॑णद्धि॒ न ना॑थि॒तो वि॑न्दते मर्डि॒तार॑म्।
अश्व॑स्येव॒ जर॑तो॒ वस्न्य॑स्य॒ नाहं वि॑न्दामि कित॒वस्य॒ भोग॑म् ॥३॥

द्वेष्टि॑। श्व॒श्रूः। अप॑। जा॒या। रु॒ण॒द्धि॒। न। ना॒थि॒तः। वि॒न्द॒ते॒।
म॒र्डि॒तार॑म्। अश्व॑स्यऽइव। जर॑तः। वस्न्य॑स्य। न।
अ॒हम्। वि॒न्दा॒मि॒। कि॒त॒वस्य॑। भोग॑म् ॥३॥

सायणः—श्वश्रूः जायाया माता गृहगतं कितवं द्वेष्टि निन्दतीत्यर्थः। किञ्च, जाया भार्या अपरुणद्धि निरुणद्धि। अपि च नाथितः याचमानः कितवो धनं मर्डितारम् धनदानेन सुखयितारं न विन्दते न लभते। इत्थं बुद्ध्या विमृशन्नह जरतः वृद्धस्य (वस्न्यस्य) वस्नम् मूल्यम् तदर्हस्य अश्वस्येव कितवस्य भोगं न विन्दामि न लभे ॥३॥

Ren :—The mother-in-law is angry with me, my wife pushes me away.

In distress there is no one to pity me.
I do not see (he tells himself) how a gambler can be useful:
He is like an old horse put for sale.

---

अ॒न्ये जा॒यां परि॑ मृशन्त्यस्य॒ यस्यागृ॑धद्वेद॑ने वा॒ज्य१॒॑क्षः।
पि॒ता मा॒ता भ्रात॑र एनमाहु॒र्न जा॑नीमो॒ नय॑ता ब॒द्धमे॒तम् ॥४॥

अ॒न्ये। जा॒याम्। परि॑। मृ॒श॒न्ति॒। अ॒स्य॒। यस्य॑। अगृ॑धत्। वेद॑ने।
वा॒जी। अ॒क्षः। पि॒ता। मा॒ता। भ्रात॑रः। ए॒न॒म्। आ॒हुः॒। न।
जा॒नी॒मः॒। नय॑त। ब॒द्धम्। ए॒तम् ॥४॥

*सायणः*—यस्य कितवस्य वेदने धने वाजी बलवान् अक्षः देवः अगृधत् अभिकांक्षां करोति तस्य अस्य कितवस्य जायाम् भार्याम् अन्ये प्रतिकितवाः परिमृशन्ति वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति। किञ्च पिता जनकः माता जननी च भ्रातरः सहोदराश्च एनम् कितवम् आहुः वदन्ति न वयमस्मदीयमेनं जानीमः, रज्ज्वा बद्धमेतं कितवं हे कितवाः, यूयं नयत यथेष्टदेशं प्रापयत इति ॥४॥

Ren. :—Others will now touch his wife,
The winning dice is avid for his money.
*Father, mother, brother say of him :*
"We know him not, take him away, bound !"

---

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥५॥

यत्। आऽदीध्ये। न। दविषाणि। एभिः। परायत्ऽभ्यः। अव। हीये।
सखिऽभ्यः। निऽउप्ताः। च। बभ्रवः। वाचम्। अक्रत। एमि।
इत्। एषाम्। निःऽकृतम्। जारिणीऽइव ॥५॥

*सायणः*—यत् यदाहम् आदीध्ये ध्यायामि तदानीम् एभिः अक्षैः न दविषाणि न दूये न परितपामि। यद्वा, न दविषाणि न देविष्यामीत्यर्थः। परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्यः अवहीये अवहितो भवामि—नाहं प्रथममक्षान्विसृजामीति। किञ्च बभ्रवः बभ्रुवर्णा अक्षा न्युप्ताः कितवैरवक्षिप्ताः सन्तो वाचमक्रत शब्दं कुर्वन्ति। तदा संकल्पं परित्यज्य अक्षव्यसनेनाभिभूयमानोऽहम् एषाम् अक्षाणाम् निष्कृतम् स्थानम् जारिणीव यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वद् एमि इत् गच्छाम्येव ॥५॥

Ren. :—When I decide, "I no longer wish to play with these (dice),
I remain behind friends who go away."
But when the brown nuts have raised their voice,
I run to their meeting-place as an adulteress.

---

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः।
अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि ॥६॥

मुमान् । एति । कितवः । पृच्छमानः । जेष्यामि । इति । तन्वा ।
शूशुजानः । अक्षासः । अस्य । वि । तिरन्ति । कामम् ।
प्रतिऽदीव्ने । दधतः । आ । कृतानि ॥६॥

सायणः—तन्वा शरीरेण शूशुजानः शोशुचानो दीप्यमानाः कितवः कोऽत्रास्ति धनिकस्तं जेष्यामीति पृच्छमानः पृच्छन् सभा कितवसम्बन्धिनीम् एति गच्छति । तत्र प्रतिदीव्ने कितवाय कृतानि देवनोपयुक्तानि कर्माणि आ दधतः जयार्थमाभिमुख्येन मर्यादया वा दधतः अस्य कितवस्य कामम् इच्छाम् अक्षासः अक्षा वितिरन्ति वर्धयन्ति ॥६॥

Ren .—The gambler enters the hall, interrogating himself,
Puffing himself in the hope of winning.
But the dice elude his desire :
It is to the adversary they give the winning points.

---

अक्षास इदङ्कुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥७॥

अक्षासः । इत् । अङ्कुशिनः । निऽतोदिनः । निऽकृत्वानः । तपनाः ।
तापयिष्णवः । कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा ।
सम्ऽपृक्ताः । कितवस्य । बर्हणा ॥७॥

सायणः—अक्षास इत् अक्षा एव अंकुशिनः अंकुशवन्तो नितोदिनः नितोदवन्तश्च पुरुषस्य कृषं प्रवर्तमानस्य निकृत्वानः पराजये निकर्तनशीलाश्छेत्तारो वा । तपनाः पराजये कितवस्य सन्तापकाः तापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य सन्तापनशीलाश्च भवन्ति । किञ्च, जयतः कितवस्य कुमारदेष्णाः धनदानेन धन्यतां लम्भयन्तः कुमाराणां दातारो भवन्ति । अपि च मध्वा मधुना संपृक्ताः प्रतिकितवेन बर्हणा परिवृढेन सर्वस्वहरणेन कितवस्य पुनर्हन्तारो भवन्ति ॥७॥

Ren :—In sooth, the dice are hooded, they have stings.
They destroy, they torture, they are torture-makers.
Their gifts are those of children. They hit him who wins.
Honey-coated (they seize) the gambler by force.

---

त्रिपञ्चाशः क्रीळति व्रात एषां देव इव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति ॥८॥

त्रिऽपञ्चाशः । क्रीळति । व्रातः । एषाम् । देवःऽइव । सविता ।
सत्यऽधर्मा । उग्रस्य । चित् । मन्यवे । न । नमन्ते ।
राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥८॥

*सायण*:—एषाम् अक्षाणां त्रिपञ्चाशः त्र्यधिकपञ्चाशत्संख्याको व्रातः सङ्घः क्रीळति आस्फारे विहरति । आह्निकाः प्रायेण तावद्भिरक्षैर्दीव्यन्ति हि । तत्र दृष्टान्तः—सत्यधर्मा सविता सर्वस्य जगतः प्रेरकः सूर्यो देव इव । यथा सविता देवो जगति विहरति तद्वदक्षाणां सङ्घ आस्फारे विहरतीत्यर्थः । किञ्च, उग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधाय एतेऽक्षा न नमन्ते न प्रह्वीभवन्ति, न वशे वर्तन्ते, तं नमयन्तीत्यर्थः । राजा चित् जगतः ईश्वरोऽपि एभ्यः नमः इत् नमस्कारमेव देवनवेलायां कृणोति नावज्ञां करोतीत्यर्थः ॥८॥

Ren.:—Their array, of three times fifty, plays
Like the god Savitar with veracious laws.
(The dice) bow not to the wrath of the mighty.
The king himself renders them homage.

---

नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥९॥

नीचाः । वर्तन्ते । उपरि । स्फुरन्ति । अहस्तासः । हस्तऽवन्तम् ।
सहन्ते । दिव्याः । अङ्गाराः । इरिणे । निऽउप्ताः । शीताः ।
सन्तः । हृदयम् । निः । दहन्ति ॥९॥

*सायण*:—अपि चैतेऽक्षा नीचा नीचीनस्थले वर्तन्ते तथापि उपरि पराजयाद् भीतानां द्यूतकराणां कितवानां हृदयस्योपरि स्फुरन्ति । अहस्तासः हस्तरहिता अप्यक्षा हस्तवन्तं द्यूतकरं कितवं सहन्ते पराजयकरणेनाभिभवन्ति । दिव्याः दिवि भवा अपक्वता अङ्गारा. अङ्गारसदृशाः अक्षा इरिणे इन्धनरहित आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तोऽपि हृदयम् कितवानामन्तःकरणं निर्दहन्ति पराजयजनितसन्तापेन भस्मीकुर्वन्ति ॥९॥

Ren :—They roll downwards, they spring upwards,
Without hands themselves, they overpower one who has them
Thrown on the concave board, the divine coals,
So cold themselves, burn the heart.

---

जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित्।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥१०॥

जाया। तप्यते। कितवस्य। हीना। माता। पुत्रस्य। चरतः।
क्व। स्वित्। ऋणऽवा। बिभ्यत्। धनम्। इच्छमानः।
अन्येषाम्। अस्तम्। उप। नक्तम्। एति ॥१०॥

*सायण:*—क्व स्वित् क्वापि चरतः निर्वेदाद् गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगजसन्तापेन सन्तप्ता भवति। माता जनन्यपि पुत्रस्य क्वापि चरतः कितवस्य सम्बन्धात् हीना तप्यते पुत्रशोकेन सन्तप्ता भवति। ऋणवा अक्षपराजयादृणवान् कितवः सर्वतो बिभ्यत् धनम् स्तेयजनितम् इच्छमानः कामयमानः अन्येषां ब्राह्मणादीनां अस्तम् गृहम् 'अस्तं पस्त्यम्' (निघ० 3-4) इति गृहनामसु पाठात्। नक्तम् रात्रौ उपैति चौर्यार्थमुपगच्छति ॥१०॥

Ren. :—The gambler's wife, (abandoned) torments herself,
And the mother of son who goes away, God knows where?
Who at night, approaches the house of another,
Begging money, the fearful debtor.

---

स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम्।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद ॥११॥

स्त्रियम्। दृष्ट्वाय। कितवम्। ततापु। अन्येषाम्। जायाम्। सुऽकृतम्। च। योनिम्। पूर्वाह्णे। अश्वान्। युयुजे। हि। बभ्रून्।
सः। अग्नेः। अन्ते। वृषलः। पपाद ॥११॥

*सायण:*—कितवम् कितवः। विभक्तिव्यत्ययः। अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूताम् स्त्रियं नारीं सुखेन वर्तमानां सुकृतम् सुष्ठु कृतं सुसंस्कृतं योनिम् गृहञ्च दृष्ट्वाय दृष्ट्वा मम जाया दुःखिता गृहञ्चासंस्कृतमिति ज्ञात्वा तताप तप्यते। पुनः पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रुवर्णान् अश्वान् व्यापकानक्षान् युयुजे युनक्ति। पुनश्च वृषलः वृषलकर्मा स कितवो रात्रौ अग्नेः अन्ते समीपे पश्चाद् शीतार्त्तः सन् शेते ॥११॥

Ren. :—When he has seen the woman, wife of others and the bed.
Well prepared, the gambler is filled with remorse.
Having, since morning, harnessed the brown horses,
He drops down (at day's) end, (before) the fire, lamentable.

---

यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥१२॥

यः। वः। सेनाऽनीः। महतः। गणस्य। राजा। व्रातस्य। प्रथमः।
बभूव। तस्मै। कृणोमि। न। धना। रुणध्मि। दश। अहम्।
प्राचीः। तत्। ऋतम्। वदामि ॥१२॥

*सायण:*—हे अक्षाः, वः युष्माकं महतो गणस्य सङ्घस्य यः अक्षः सेनानीः नेता बभूव भवति। व्रातस्य च। गणव्रातयोरल्पो भेदः। राजा ईश्वरः प्रथमो मुख्यो बभूव। तस्मै अक्षाय कृणोमि अहम् अञ्जलिं करोमि। अतः परं धना धनानि अक्षार्थं अहं न रुणध्मि न सम्पादयामीत्यर्थः। एतदेव दर्शयति। अहं दश दशसंख्याका अङ्गुलीः प्राचीः प्राङ्मुखीः करोमि। तत् एतदहम् ऋतम् सत्यमेव वदामि नानृतं ब्रवीमीत्यर्थः ॥१२॥

Ren. :—To the chief of your big army,
To the first king of your host,
I stretch my ten (fingers) and
Say in sooth, "I hold no money".

---

अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥१३॥

अक्षैः । मा । दीव्यः । कृषिम् । इत् । कृषस्व । वित्ते । रमस्व । बहु ।
मन्यमानः । तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि ।
चष्टे । सविता । अयम् । अर्यः ॥१३॥

*सायणः*—हे कितव, बहु मन्यमानः मद्वचने विश्वासं कुर्वन् त्वम् अक्षैर्मा दीव्यः द्यूतं मा कुरु । कृषिमित् कृषिमेव कृषस्व कुरु । वित्ते कृष्या सम्पादिते धने रमस्व रतिं कुरु । तत्र कृषौ गावो भवन्ति, तत्र जाया भवति । तत् एव धर्म-रहस्यं श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकः अयम् दृष्टिगोचरः अर्यः ईश्वरो विचष्टे विविधमाख्यातवान् ॥१३॥

*दुर्गाचार्यः*—अक्षैः मा दीव्यः इत्यक्षदेवनप्रतिषेधः । तत्र हि बहवोऽनर्थाः सन्ति । कृषिम् इत् कृषस्व इति कृषिविधानम् । तस्यां हि बहवो गुणाः सन्ति । वित्ते रमस्व स्वल्प एवोपार्जिते बहु एतदेवेति मन्यमानः । मा वित्तलोभेन दीव्यः, निजमपि वित्तं हारयिष्यसि । कृषिं पुनरेतस्मात् कारणात् कृषस्व । हे कितव तत्र तस्यां कृषौ गावः सन्ति, तत्र तस्यां च जाया । तत् पुनरेतत् मे मम सविता देव. अर्यः ईश्वरः । वि श्रुतिस्मृत्यनुशासनद्वारेण विविधम् अनेकप्रकारम् आचष्टे । उभे अपि हीमे श्रुतिस्मृती मन्वादिद्वारेण आदित्यान्तरपुरुषप्रभवे एव । अत इदम् उक्तम्—सवितैवैतन्मम बिचष्टे इति ॥१३॥

Ren. :—"Play no more with dice I till thy field.
Be content with thy goods, thinking it to be riches enough ?
There are thy cows, gambler, there thy spouse".
Thus explains to me the noble Savitar.

---

मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥१४॥

मित्रम् । कृणुध्वम् । खलु । मृळत । नः । मा । नः । घोरेण । चरत ।
अभि । धृष्णु । नि । वः । नु । मन्युः । विशताम् । अरातिः ।
अन्यः । बभ्रूणाम् । प्रऽसितौ । नु । अस्तु ॥१४॥

*सायणः*—हे अक्षाः, यूयं मित्रं कृणुध्वम् अस्मासु मैत्रीं कुरुत । खल्विति पूरणः । नः अस्मान् मृळत सुखयत च । नः अस्मान् धृष्णु धृष्णुना । तृतीयार्थे प्रथमा । घोरेण असह्येन मा अभिचरत मा गच्छत । किञ्च, वः युष्माकं मन्युः

क्रोधः अरातिः अस्माकं शत्रुः निविशताम् अस्मच्छत्रुषु तिष्ठतु। अन्यः अस्माकं शत्रुः कश्चित् बभ्रूणां बभ्रुवर्णानां युष्माकं प्रसितौ प्रबन्धने नु क्षिप्रम् अस्तु भवतु ॥१४॥

Ren. :—Have a friendly pact, take pity on us !
Attack us not in this cruel fashion !
May thy wrath cool down as also thy disfavour !
May some other be under the sway of the brown (ones) !

---

## 29—X—71

एकादशर्चम्। आङ्गिरसस्य बृहस्पतेरार्षम्। नवमी जगती, शिष्टा दश त्रिष्टुभः। अनेनसूक्तेनर्षिः परमपुरुषार्थसाधन परब्रह्मज्ञानं स्तुतवान्। अतस्तद्देवत्यमिदम्।

बृह॑स्पते प्रथ॒मं वा॒चो अग्रं॒ यत्प्रैर॑त नाम॒धेयं॒ दधा॑नाः।
यदे॑षां॒ श्रेष्ठं॒ यद॑रि॒प्रमासी॑त्प्रे॒णा तदे॑षां॒ निहि॑तं॒ गुहा॒विः ॥१॥

बृह॑स्पते। प्र॒थ॒मम्। वा॒चः। अग्र॑म्। यत्। प्र। ऐर॑त। ना॒म॒ऽधेय॑म्।
दधा॑नाः। यत्। ए॒षा॒म्। श्रेष्ठ॑म्। यत्। अ॒रि॒प्रम्। आसी॑त्।
प्रे॒णा। तत्। ए॒षा॒म्। नि॒ऽहि॑तम्। गुहा॑। आ॒विः ॥१॥

*सायणः*—बृहस्पतिरनेन सूक्तेन विदितवेदार्थान् बालान् दृष्ट्वा स्मयमानः स्वात्मानं संबोध्याह। हे बृहस्पते अन्तरात्मन् प्रथमम् उत्पत्त्यनन्तरमितरवागुच्चारणात्प्रागेव नामधेयं नाम दधानाः पदार्थेषु निदधानाः बालाः यत् प्रैरत प्रेरितवन्तः, तत् वाचोऽग्रं भवति। यत्तत् तातेत्यादिकं वाक्यं पूर्वमभिधाय पश्चादन्या वाचो वदिष्यन्ति खलु तस्माद्वाचोऽग्रम्। अस्यां दशायामवस्थितान् बालान् पश्य। तथेदानीम् एषां श्रेष्ठं प्रशस्यतमं यत् यच्च अरिप्रं पापरहितं वेदार्थज्ञानम् आसीत् एषां तज्ज्ञानं गुहा गुहायां निहितं गोप्यं तत् प्रेणा। मकारलोपश्छान्दसः। प्रेम्णाविर्भवति। वेदाभ्यासकाले सरस्वती स्वार्थमेभ्यः प्रकाशयतीति। एवं विस्मये। 'बृहस्पते प्रथमं वाचोऽग्रम्।' (ऐ० आ०, I, 3-3) इत्यादिकमारण्यकमनुसन्धेयम् ॥१॥

Ren. :—O Brhaspati, that was, then, the first beginning of Speech,
When they put themselves to work, giving names (to objects).
All that they had of the best, the immaculate,
Hidden in them, revealed itself under the effect of their love,

---

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥२॥

सक्तुम्ऽइव । तितउना । पुनन्तः । यत्र । धीराः । मनसा । वाचम् ।
अक्रत । अत्र । सखायः । सख्यानि । जानते । भद्रा ।
एषाम् । लक्ष्मीः । निऽहिता । अधि । वाचि ॥२॥

सायणः—तितउना । परिपूयतेऽनेनेति । यद्वा । तता विस्तृता भृष्टयवा अत्रेति तितउः । 'तनोतेर्डउः सन्वच्च' (उ० सू०, v-22) इति डउप्रत्ययः । सन्वद्भावादित्वम् । उक्तनिर्वचनेन सूर्पेण सक्तुमिव यथा कश्चित्सक्तुं दुर्धावं पुनाति तद्वत् प्रकृतितः प्रत्ययतश्च शब्दानुत्पुनन्तः धीराः धीमन्तो विद्वांसः यत्र यस्मिन् काले विद्वत्संघे वा मनसा प्रज्ञायुक्तेन वाचमक्रत अकृषत कुर्वन्ति । करोतेर्लुङि रूपम् । अत्र तत्र काले सखायः समानख्यानाः शास्त्रादिविषयज्ञानास्ते सख्यानि तेषु भवानि ज्ञानानि जानते जानन्ति । यद्वा । सखायो वाचा वक्तृसंघास्ते तस्यास्तस्या वाचः सख्यानि जानन्ति । वाक्ययुक्तानभ्युदयाँल्लभन्त इति । तस्मात् एषां वाचि भद्रा कल्याणी निहिता लक्ष्मीः भवति । अधिः सप्तम्यर्थद्योतकः । अर्थज्ञानं वाचि पश्याम इत्यर्थः ॥२॥

यास्कः—तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा । सक्तुमिव तितउना......। सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेः दुर्धावो भवति । कसतेर्वा स्याद्विपरीतस्य विकसितो भवति । यत्र धीरा मनसा वाचमकृषत प्रज्ञानम् । धीराः प्रज्ञानवन्तो ध्यानवन्तः । तत्र सखायः सख्यानि संजानते भद्रैषां लक्ष्मीर्निहिताधि वाचि इति । भद्रं भगेन व्याख्यातं, भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा । लक्ष्मीर्लाभाद्वा लक्षणाद्वा (लप्स्यनाद्वा) लाञ्छनाद्वा लषतेर्वा स्यात्प्रेप्साकर्मणो लश्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः ॥२॥

पतञ्जलिः—सक्तुः सचतेर्दुर्धावो भवति । कसतेर्वा स्याद्विपरीताद्विकसितो भवति । तितउ परिपवनं भवति । ततवद्वा तुन्नवद्वा । धीरा ध्यानवन्तः । मनसा प्रज्ञानेन । वाचमक्रत वाचमकृषत । अत्रा सखायः सख्यानि जानते । अत्र सखायः सन्तः सख्यानि जानते । क्व य एष दुर्गो मार्गः, एकगम्यो वाग्विषयः । के पुनस्ते वैयाकरणाः । कुत एतत् 'भद्रैषां लक्ष्मीर्निहिताधि वाचि' । एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्लक्षणाद् भासनात् परिवृढा भवति ॥२॥

Ren. :—When the Sages, cleansing (their thought) as saktu*
In the sieve, create Speech with the help of thought,
It is then that friends recognise friendships :
A prominent sign is put on their speech.

---

यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥३॥

यज्ञेन । वाचः । पदऽवीयम् । आयन् । ताम् । अनु । अविन्दन् ।
ऋषिषु । प्रऽविष्टाम् । ताम् । आऽभृत्य । वि । अदधुः । पुरुऽ-
त्रा । ताम् । सप्त । रेभाः । अभि । सम् । नवन्ते ॥३॥

*सायण*:—विदितार्था धीराः पदवीयम् । वेतेः 'अचो यत्' । संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । पदेन यातव्यः पन्थाः पदवीयः । तं वाचः मार्गं यज्ञेन आयन् प्राप्तवन्तः ऋषिषु अतीन्द्रियार्थदर्शिषु प्रविष्टां तां वाचम् अविन्दन् अलभन्त । अनन्तरं तां वाचम् आभृत्य आहृत्य पुरुत्रा बहुषु देशेषु व्यदधुः व्यकार्षुः । सर्वान् मनुष्यानध्यापयामासुरिति । एतादृशीं वाचं रेभाः शब्दायमानाः पक्षिणः पक्षिरूपाणि गायत्र्यादीनि सप्त छन्दांसि अभि सं नवन्ते अभितः संगच्छन्ते ॥३॥

Ren. :—They have walked in the path of Speech, thanks to the sacrifice.
They have discovered her again as entered in the poets.
Bringing her back, they have divided her in a large number.
The Seven Singers together acclaim her.

---

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः ॥४॥

उत । त्वः । पश्यन् । न । ददर्श । वाचम् । उत । त्वः । शृण्वन् । न ।
शृणोति । एनाम् । उतो इति । त्वस्मै । तन्वम् । वि । सस्रे ।
जायाऽइव । पत्ये । उशती । सुऽवासाः ॥४॥

---

*Barley first parched then pounded.

सायणः—त्वशब्द एकवाची । एकः । उतशब्दोऽप्यर्थे । पश्यन् अपि मनसा पर्यालोचयन्नपि वाचं न ददर्श दर्शनफलाभावान्न पश्यति । त्वः एकः शृण्वन्नपि एनां वाचं न शृणोति श्रवणफलाभावात् । इत्यनेनार्धेन अविद्वानभिहितः । तृतीयपादेन विदितवेदार्थमाह । त्वस्मै एकस्मै अपि तन्वम् आत्मीयं शरीरं वि सस्रे स्वयं वागिविधं गमयति । आत्मानं विवृणुते प्रकाशयतीति । तत्र दृष्टान्तः । जायेव यथा उशती संभोगं कामयमाना सुवासाः शोभनवसना जाया पत्ये भर्त्रे ऋतुकाले संभोगार्थं स्वयमात्मानं विवृणुते । तद्वदेनां पश्यति शृणोति चेति विदितवेदार्थस्य प्रशंसा ॥४॥

यास्कः—अप्येकः पश्यन्न पश्यति वाचम् । अपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धम् । अप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते । ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा । जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु । सुवासाः कल्याणवासाः । कामयमाना ऋतुकालेषु । यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा ॥४॥

पतञ्जलिः—उत त्वः । अपि खल्वेकः पश्यन्नपि न पश्यति वाचम् । अपि खल्वेकः शृण्वन्नपि न शृणोत्येनाम् । अविद्वांसमाहार्धम् । 'उतो त्वस्मै तन्वं विसस्रे' । तनुं विवृणुते । 'जायेव पत्य उशती सुवासाः' तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग् वाग्विदे स्वमात्मानं विवृणुते । वाङ् नो विवृणुयाद् आत्मानमित्यध्येयं व्याकरणम् ॥४॥

Ren. . – One having eyes has not seen Speech,
One having ears does not hear it at all.
For another, She has uncovered her body,
As for her husband the willing spouse, well-decked.

---

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥५॥

उत । त्वम् । सख्ये । स्थिरऽपीतम् । आहुः । न । एनम् । हिन्वन्ति ।
अपि । वाजिनेषु । अधेन्वा । चरति । मायया । एषः । वाचम् ।
शुश्रुऽवान् । अफलाम् । अपुष्पाम् ॥५॥

सायणः—त्वम् उत एकमपि सख्ये विदुषां संसदि । या सत्कथा सा सखिकर्मत्वात्सख्यमित्युच्यते, सा च वाचा क्रियते । अतो वाक्संबन्धाद्

वाक्सख्ये स्थिरपीतम्। मधु यस्य हृदये स्थिरं भवति। यद्वा स्थिरपीतम् स्थिरग्राम्निम्। आहुः। यद्वा तस्मिञ्ज्ञातार्थमाहुः। लोके यथा ज्ञातार्थं पुरुषं पीतार्थमिति वदन्ति। किंच एनं विज्ञातार्थं पुरुषं वाजिनेषु लोके यथा ज्ञातार्थं पुरुषं पीतार्थमिति वदन्ति। किंच एनं विज्ञातार्थं पुरुषं वाजिनेषु वाक् इना ईश्वरा येषां ते वाजिनः अर्थाः वाचः आयताः खलु। वाग्ज्ञेयेष्वर्थेषु न अपि हिन्वन्ति। अपिशब्दोऽन्वर्थे, केचिदपि नानुगच्छन्ति। अयमेवातिशयेन विद्वानिति। यद्वा। वाजिनेषु सारभूतेषु निरूपणीयेष्वर्थेष्वेनं न हिन्वन्ति न बहिः कुर्वन्ति। एनं पुरस्कृत्यैव सर्वे वेदार्थं विचारयन्तीति। इत्यर्थज्ञः प्रशस्तः। अनन्तरमुत्तरार्धेन केवलपाठको निन्द्यते। एषः अविज्ञातार्थः पुरुषः अधेन्वा धेनुत्वविवर्जितया कामानामदोग्ध्या देवमनुष्यस्थानेषु वाक्प्रतिरूपया मायया चरति। किं कुर्वन्। अफलामपुष्पाम। वाचोऽर्थः पुष्पफलम्। अर्थवर्जिताम्। यद्वा। वाचोऽर्थो याज्ञदैवते। यज्ञे भवं ज्ञानं याज्ञं देवतासु भवं ज्ञानं दैवतम्। तद्वर्जिताम् कर्मादिविषयज्ञानवर्जिताम् वाचं शुश्रुवान्। केवलं पाठमात्रेणैव श्रुतवान्स चरति। यथा वन्ध्या पीना गौः किं द्रोणमात्रं क्षीरं दोग्धीति माया-मुत्पादयन्ती चरति, यथा वन्ध्यो वृक्षोऽकाले पल्लवादियुक्तः सन् पुष्यति फलतीति भ्रान्तिमुत्पादयंस्तिष्ठति तथा पाठं शृण्वाणः चरतीति ॥५॥

*यास्कः*—अप्येकं वाक् सख्ये स्थिरपीतमाहू रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वपि। अधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया नास्मै कामान्दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु यो वाचं श्रुतवान् भवत्यफलामपुष्पामित्य-फलास्मा अपुष्पा वाग्भवतीति वा किञ्चित्पुष्पफलेति वा अर्थं वाचः पुष्पफलमाह। याज्ञदैवते पुष्पफले, देवताध्यात्मे वा ॥५॥

Ren. :—Of another (again) it is said that he is still, thick in friendship,
He is pushed no longer even in competitions.
He moves himself with his barren imagination,
The speech he has heard has neither fruits nor flowers.

---

यस्तित्याज॑ सचि॒विदं॒ सखा॑यं॒ न तस्य॑ वा॒च्यपि॑ भा॒गो अ॑स्ति।
यदीं॑ शृ॒णोत्यल॑कं शृ॒णोति॒ न॒हि प्र॒वेद॑ सुकृ॒तस्य॒ पन्था॑म् ॥६॥

यः । ति॒त्याज॑ । स॒चि॒ऽविद॑म् । सखा॑यम् । न । तस्य॑ । वा॒चि । अपि॑ । भा॒गः । अ॒स्ति॒ । यत् । ई॒म् । शृ॒णोति॑ । अल॑कम् । शृ॒णो॒ति॒ । न॒हि । प्र॒ऽवेद॑ । सु॒ऽकृ॒तस्य॑ । पन्था॑म् ॥६॥

*सायणः*—सचिविदम् । सचिशब्दः सखिवाची । सखिविदम् । योऽध्येता स वेदस्य सखा सम्प्रदायोच्छेदनिवारकत्वेन वेदं प्रत्युपकारित्वात् । तादृशमुपकारिणमध्येतारं वेत्तीति सचिवित् । तमभिज्ञं सखायम् अध्येतॄणां पुरुषाणां स्वार्थबोधनेनोपकारित्वात्सखिभूतं वेदं यः पुमान् तित्याज तत्याज परार्थविनियोगेन परित्यजति । त्यजतेर्लिटि 'अपस्पृधेथामानृचुः' इत्यादिना निपातितः । तस्य पुरुषस्य वाचि सर्वस्यां लौकिक्यां शास्त्रीयायां वाच्यपि भागः भजनीयः कश्चिदर्थः न अस्ति । ईम् अयं पुरुषः यत् वेदव्यतिरिक्तं शृणोति तत् अलक अलीकं व्यर्थमेव शृणोति । हि यस्मात्कारणात् सुकृतस्य पन्थां पन्थानं न प्रवेद श्रद्धाराहित्यादनुष्ठानमार्गं न जानाति । तस्मात्तदीयश्रवणमपि निष्फलमिति । द्वितीयचतुर्थपादयोरभिप्राय आरण्यके दर्शितः 'न तस्यानूक्ते योगोऽस्ति' (ऐ० आ० iii–2–4) इत्यादिना । तथा 'तं योऽनुत्सृजत्यभागो वाचि भवत्यभागो नाके तदेपाभ्युक्ता' (तै० आ० ii–15–5) इत्यध्वर्युभिश्च ॥६॥

Ren. :—One who has abandoned his friend, his colleague in learning,
He has no longer any right to Speech.
What he hears, he hears in vain :
He has not known the way of meritorious acts.

---

अ॒क्ष॒ण्वन्तः॒ कर्ण॑वन्तः॒ सखा॑यो मनोज॒वेष्वस॑मा बभूवुः ।
आ॒द॒घ्नास॑ उपक॒क्षास॑ उ त्वे ह्र॒दा इ॑व॒ स्नात्वा॑ उ त्वे ददृश्रे ॥७॥

अ॒क्ष॒ण्ऽवन्तः॑ । कर्ण॑ऽवन्तः । सखा॑यः । म॒नः॒ऽज॒वेषु॑ । अस॑माः । ब॒भू॒वुः॒ । आ॒द॒घ्नास॑ः । उ॒प॒ऽक॒क्षास॑ः । ऊं इति॑ । त्वे॒ । ह्र॒दाःऽइ॑व । स्नात्वा॑ः । ऊं इति॑ । त्वे॒ । द॒दृ॒श्रे॒ ॥७॥

*सायणः*—अक्षण्वन्तः अक्षिमन्तः । 'छन्दस्यपि दृश्यते' इत्यक्षिशब्दादनङ् । 'अनो नुट्' इति नुट् । अनेन दृश्यते सर्वमित्यक्षि । यद्वा । तैजसत्वात् अन्येभ्योऽङ्गेभ्यो व्यक्ततरम् । तथा च श्रूयते—'तस्मादेते व्यक्ततरे

इव' इति। तादृशाक्षियुक्ताः कर्णवन्तः। कर्णौ निकृत्तद्वारः। गर्भावस्थायामेव केनापि निर्मितविल इति। यद्वा शरीरस्य शिरसो वोर्ध्वं गते उच्चैः स्थिते। कर्णविललक्षणाकाशवन्तः। तथा चाम्नायते—'ऋच्छन्ती इव खे उदगन्ताम्' इति। तादृशाः सखायः। समानं ख्यानं ज्ञानं येषामिति सखायः। तेषु वाक्येषु बाह्येष्विन्द्रियेषु समानज्ञाना इति। ते मनोजवेषु। मनसा गम्यन्ते ज्ञायन्ते इति मनोजवाः प्रज्ञाद्याः। तेषु असमाः अतुल्याः बभूवुः भवन्ति। तेषु मध्ये केचित् आदघ्नासः। आस्यशब्दस्य पृषोदरादित्वादाकारादेशः। आस्यदघ्नाः आस्यप्रमाणोदका ह्रदा इवेति मध्यमप्रज्ञानाह्। अथ त्वे एके। सर्वनामत्वाज्जसः शीभावः। उपकक्षासः। कक्षसमीपप्रमाणोदका ह्रदा इव। अल्पोदका इति। अनेनाल्पप्रज्ञानाह। तथा त्वे एके स्नात्वाः। स्नातेः कृत्यार्थे त्वन्प्रत्ययः (पा० सू०, iii, 4-14)। स च 'अर्हे कृत्यतृचश्च' (पा० सू०, iii, 3-169) इत्यर्हार्थे च भवति। स्नानार्हा अक्षोभ्योदका ह्रदा इव ददृश्रे दृश्यन्ते। अनेन महाप्रज्ञानाह। उः पूरणः ॥७॥

*यास्कः*—अक्षिमन्तः कर्णवन्तः सखायः। अक्षि चष्टेः; अनक्तेरित्याग्रायणः। तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते। कर्णः कृन्ततेर्निकृत्तद्वारो भवति। ऋच्छतेरित्याग्रायणः। ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते। मनसां प्रजवेष्वसमा बभूवुः। आस्यदघ्ना अपरे उपकक्षदघ्ना अपरे। आस्यमस्यतेः। आस्यन्दत एतदन्नमिति वा। दघ्नं दघ्यतेः स्रवतिकर्मणः। दस्यतेर्वा स्याद्विदस्ततरं भवति। प्रस्नेया ह्रदा इवैके प्रस्नेया ददृशिरे स्नानार्हाः। ह्रदो ह्रादतेः शब्दकर्मणः ह्लादतेर्वा स्याच्छीतीभावकर्मणः ॥७॥

Ren. :—Our friends, who have eyes, who have ears,
Are, however, unequal in improvisations,
Some resemble ponds (where one enters) upto the mouth—
Or upto the armpits (only); others good only for the bath.

---

हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥८॥

हृदा। तष्टेषु। मनसः। जवेषु। यत्। ब्राह्मणाः। सम्ऽयजन्ते।
सखायः। अत्र। अह। त्वम्। वि। जहुः। वेद्याभिः।
ओहब्रह्माणः। वि। चरन्ति। ऊं इति। त्वे ॥८॥

*सायणः*—सखायः समानख्यानाः ब्राह्मणाः हृदा बुद्धिमता हृदयेन तष्टेषु निश्चितेषु परिकल्पितेषु मनसो जवेषु गन्तव्येषु वेदार्थेषु गुणदोषनिरूपणाः यत् यदा संयजन्ते संगच्छन्ते। यजिरत्र संगतिकरणवाची । अत्र अस्मिन् ब्राह्मणसंघे त्वम् अविज्ञातार्थमेकं पुरुषं वेद्याभिः वेदितव्याभिः विद्याभिः प्रवृत्तिभिर्वा वि जहुः विशेषेण परित्यजन्ति। अह इति विनिश्चये। ओहब्रह्माणः ऊह्यमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षणं येषां ते तथोक्ताः । तादृशास्त एके विद्वांसः वि चरन्ति यथाकामं वेदार्थेषु विनिश्चयार्थं प्रवर्तन्ते । उः प्रसिद्धौ ॥८॥

*यास्कः*—हृदा तष्टेषु मनसा प्रजवेषु यद्ब्राह्मणाः संयजन्ते समानख्यानाः ऋत्विजोऽत्र विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः ओहब्रह्माणः ऊहब्रह्माणः ऊह एष ब्रह्मेति वा ॥८॥

Ren. :—When all the Brahmins sacrifice together as friends,
Fashioning improvisations in their conscience,
One with (insufficient) capacities is left behind;
Others go forward, causing the (Sacred) Formula to be acclaimed

---

इ॒मे ये नार्वाङ् न प॒रश्च॑र॑न्ति॒ न ब्रा॑ह्म॒णासो॒ न सु॒तेक॑रासः।
त ए॒ते वाच॑म॒भि॒पद्य॑ पा॒पया॑ सि॒रीस्तन्त्रं॑ तन्वते॒ अप्र॑जज्ञयः ॥९॥

इ॒मे। ये। न। अ॒र्वाक्। न। प॒रः। चर॑न्ति। न। ब्रा॒ह्म॒णासः॑। न। सु॒ते॒ऽक॑रासः। ते। ए॒ते। वाच॑म्। अ॒भि॒ऽपद्य॑। पा॒पया॑। सि॒रीः। तन्त्र॑म्। त॒न्व॒ते॒। अप्र॑ऽजज्ञयः ॥९॥

*सायणः*—अनया वेदार्थानभिज्ञा निन्द्यन्ते। इमे ये अविद्वांसः अर्वाक् अर्वाचीनमधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह न चरन्ति। ये परः परस्तात् देवैः सह न चरन्ति ते ब्राह्मणासः ब्राह्मणाः वेदार्थतत्पराः न भवन्ति। तथा सुतेकरासः। सोमं सुतमभिषुतं कुर्वन्तीति सुतेकरा ऋत्विजः। तेऽपि न भवन्ति। अप्रजज्ञयः। जानातेः 'आदृगमहनः' इति किप्रत्ययः। अविद्वांस त एते मनुष्याः वाच लौकिकीमभिपद्य प्राप्य तया पापया पापकारिण्या वाचा युक्तास्ते सिरीः। 'छन्दसीवनिपौ' इतीप्रत्ययः। 'सुपां सुलुक्' इति जसः सुः। सीरिणो भूत्वा तन्त्रं कृषिलक्षणं तन्वते विस्तारयन्ति। कुर्वन्तीति। सर्वथा वेदार्थो ज्ञेय इत्यभिप्रायः ॥९॥

Ren :—Those who move neither forward nor backward,
Who are not worthy Brahmins, Soma-pressers,
These make use of Speech in a bad way,
They weave, ignorant ones, a web of rags.

---

सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः ।
किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥१०॥

सर्वे । नन्दन्ति । यशसा । आऽगतेन । सभाऽसहेन । सख्या ।
सखायः । किल्बिषऽस्पृत् । पितुऽसनिः । हि । एषाम् ।
अरम् । हितः । भवति । वाजिनाय ॥१०॥

*सायण*:—सखायः समानख्यानाः समानज्ञानाः सर्वे सभ्याः मनुष्याः सभासहेन सभां सोढुं शक्नुवता सख्या ऋत्विजां सखिभूतेन यज्ञं प्रति आगतेन यशसा यशस्विना सोमेन हेतुना नन्दन्ति हृष्टा भवन्ति। स हि स एव सोमः एषां जनानां किल्बिषस्पृत् । यः स्वस्मादन्यः पुरुषः श्रेष्ठतामश्नुते स किल्बिषं भवति बाध्यत्वेन। यथा पापं सदाचारैः बाधितव्यं भवति तद्वत्। पापरूपस्य शत्रोर्बाधकः। यद्वा। यज्ञे साध्वनुप्रवचनाकरणेन यत्किल्बिषमेषां जायते, तद्यो बाधते स किल्बिषस्पृत्। तथा त्वं पितुषणिः। पितुरित्यन्ननाम दक्षिणा वा। तमनेन सोमेन सनोति यजमानः संभजत इति तादृशः। तेषामन्नदक्षिणा-दातेति। किं च हितः पात्रेषु निहितः सोमः वाजिनाय। इन्द्रियं वीर्यं वाजिनम्। तेषां वीर्याय तत्कर्तुम् अर अलं पर्याप्तः समर्थो भवति। 'सर्वे नन्दन्तीत्यन्वाह यशो वै सोमो राजा' इत्यादिकम् 'इन्द्रियं वै वीर्यं वाजिनमाजरसं हास्मै वाजिनं नापच्छिद्यते' इत्यन्तं ब्राह्मणमत्रानुसन्धेयम् (ऐ० ब्रा०, 1-13) ॥१०॥

Ren. :—All friends rejoice in the glorious friend
Who emerges as the winner of the contest,
He saves them from sin, he earns them a living.
He is well-set (to win the prize of) the contest.

---

ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥११॥

ऋचाम् । त्वः । पोषम् । आस्ते । पुपुष्वान् । गायत्रम् । त्वः । गायति । शक्वरीषु । ब्रह्मा । त्वः । वदति । जातऽविद्याम् । यज्ञस्य । मात्राम् । वि । मिमीते । ऊं इति । त्वः ॥११॥

*सायणः*—अनया होत्रादिऋत्विक्कर्मणां विनियोगमाचष्टे । त्वः एको होता ऋचां पोषं यथाविधि कर्मणि प्रयोगं पुपुष्वान् । एको धातुरनुवादार्थः । बह्वीर्ऋचः पुष्यन् शंसन् आस्ते । त्वः एक. उद्गाता शक्वरीषु । शक्वर्य ऋचः । आभिर्ऋग्भिर्वृत्रं हन्तुमिन्द्रः समर्थोऽभूदिति शक्वर्यः । तासु गायत्रं साम गायति । त्वः एको ब्रह्मा च जातविद्या जाते जाते कर्तव्ये प्रायश्चित्तादौ वेदयित्रीं वाचं वदति । ब्रह्मा हि सर्वं वेदितुं योग्यो भवति खलु । 'चादिलोपे विभाषा' इति न निघातः । त्वः एकोऽध्वर्युश्च यज्ञस्य मात्रां यज्ञो यथा मीयतेऽभिषवग्रहणादिकया क्रियया तां मात्रां यज्ञशरीरं विमिमीते अत्यर्थं निर्मिमीते । 'ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी' (नि०, 1–8) इत्यादिनिरुक्तानुसारेणार्थोऽभ्यधायि । एवं बृहस्पतिर्विदितवेदार्थं तुष्टाव ॥११॥

*यास्कः*—इत्यृत्विक्कर्मणां विनियोगमाचष्टे । ऋचामेकः पोषमास्ते पुपुष्वान्होतर्गर्चनी, गायत्रमेको गायति शक्वरीषूद्गाता । गायत्रं गायतेः स्तुतिकर्मणः । शक्वर्यः ऋचः शक्नोतेः । तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणा शक्वरीत्वमिति विज्ञायते । ब्रह्मैको जाते जाते विद्यां वदति । ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति । ब्रह्मा परिवृढः श्रुततो ब्रह्म परिवृल्हं सर्वतः । यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युः । अध्वर्युरध्वरं युनक्त्यध्वरस्य नेताध्वर कामयत इति वा । अपि वाधीयाने युरुपबन्धः, अध्वर इति यज्ञनाम । ध्वरतिर्हिंसाकर्मा, तत्प्रतिषेधः ॥११॥

Ren.:—One holds himself (motionless), harvesting the stanzas;
Another sings the songs in Śakvarī verses.
The Brahmā explains the hereditary learning,
Another, lastly, measures the dimensions of the sacrifice.

---

## 29—X—90

नारायण ऋषिः । अन्त्या त्रिष्टुप्, शिष्टा अनुष्टुभः ।
अव्यक्तमहदादि लक्षणो यः पुरुषः स देवता ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥

सहस्रऽशीर्षा । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् । सः । भूमिम् ।
विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअंगुलम् ॥१॥

*सायणः*—सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा सहस्रशब्दस्योपलक्षणत्वादनन्तैः। शिरोभिर्युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्। एवं सहस्राक्षत्वं सहस्रपादत्वं च। स पुरुषो भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशाङ्गुलं दशाङ्गुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद् बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥१॥

Pet. :—The Man had a thousand heads, a thousand eyes, a thousand feet: He covered the earth on all sides, and stretched ten fingers' beyond it.

Ren. :—The Purusa has a thousand heads,
He has a thousand eyes, a thousand feet.
Covering the earth from end to end,
He extends beyond by ten fingers.

---

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भव्यम् । उत ।
अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥२॥

*सायणः*—यदिदं वर्तमानं जगत्सर्वम् पुरुष एव। यच्च भूतमतीतं जगद्यच्च भव्यं भविष्यज्जगत्तदपि पुरुष एव। यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट् पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उत अपि च अमृतत्वस्य देवत्वस्यायमीशानः स्वामी। यद्यस्मात्कारणात् अन्नेन प्राणिनां भोग्येनान्नेन निमित्तभूतेनातिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः ॥२॥

Pet. :—The Man was all that is and all that will be: ruling over immortality,. He was all that grows by food.

Ren. :—The Purusa is no other but this universe,
That which has been, that which is to be.
And He is the master of the immortal domain,
Because He grows beyond food.

---

एतावा॑नस्य महि॒मातो॒ ज्याया॑श्च॒ पूरु॑षः ।
पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥३॥

ए॒तावा॑न् । अ॒स्य॒ । म॒हि॒मा । अतः॑ । ज्याया॑न् । च॒ । पुरु॑षः । पाद॑ः ।
अ॒स्य॒ । विश्वा॑ । भू॒तानि॑ । त्रि॒ऽपात् । अ॒स्य॒ । अ॒मृत॑म् । दि॒वि ॥३॥

*सायणः*—अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान्सर्वोऽप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु पुरुषः अतो महिम्नोऽपि ज्यायान् अतिशयेनाधिकः। एतच्चोभयं स्पष्टीक्रियते। अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादः चतुर्थोंऽशः। अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सद्दिवि द्योतनात्मके स्वप्रकाशस्वरूपे। व्यतिष्ठत इति शेषः। यद्यपि सत्यं ज्ञानमनन्तं ब्रह्मेत्याम्नानात् (तै० आ० viii, 1; तै० उप० ii, 1;) परब्रह्मण इयत्ताभावात्पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादन्यासः ॥३॥

Pet..—Such was His greatness; and the Man was greater still: this whole world is a fourth of him, three-fourths of him are immortal in the sky.

Ren.:—Such is His power,
And still more powerful is the Purusa.
All the beings are a quarter of him;
The immortal one in the sky, the three (remaining) quarters.

---

त्रि॒पादू॒र्ध्व उदै॒त्पुरु॑षः॒ पादो॑ऽस्ये॒हाभ॑व॒त्पुनः॑ ।
ततो॒ विष्व॒ङ् व्य॑क्रामत्साशनानश॒ने अ॒भि ॥४॥

त्रि॒ऽपात् । ऊ॒र्ध्वः । उत् । ऐ॒त् । पुरु॑षः । पाद॑ः । अ॒स्य॒ ।
इ॒ह । अ॒भ॒व॒त् । पु॒न॒रिति॑ । तत॑ः । विष्व॑ङ् । वि । अ॒क्रा॒-
म॒त् । सा॒श॒ना॒न॒श॒ने इति॑ । अ॒भि ॥४॥

*सायणः*—योऽयं त्रिपात्पुरुषः संसाररहितो ब्रह्मस्वरूपः सोऽयमूर्ध्वं उदैत्। अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतः अत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान्। तस्यास्य सोऽयं पादो लेशः सोऽयमिह मायायां पुनरभवत्। संसृष्टिसंहाराभ्यां पुनः पुनरागच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम्, 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति'। ततो मायायामागत्यानन्तरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान्। किं कृत्वा। साशनानशने (अभि) अभिलक्ष्य। साशनं भोजनादि व्यवहारोपेतं चेतनं प्राणिजातम्। अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥४॥

Pet :—For with three-fourths the Man went on high; but a fourth of him remained here, and then spread on all sides, over the living and lifeless world.

Ren. :—With three quarters the Purusa has raised himself high,
The fourth has taken birth below.
There from has He spread himself in all directions,
Towards objects which eat and which eat not.

---

तस्माद्विराळजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥५॥

तस्मात्। विऽराट्। अजायत। विऽराजः। अधि। पुरुषः। सः। जातः।
अति। अरिच्यत। पश्चात्। भूमिम्। अथो इति। पुरः ॥५॥

*सायणः*—विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते। तस्मादादिपुरुषाद् विराड् ब्रह्माण्डदेहोऽजायत उत्पन्नः। विविधानि राजन्ते वस्तून्यत्रेति विराट्। विराजोऽधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषस्तद्देहाभिमानी कश्चित्पुमानजायत। सोऽयं सर्ववेदान्तवेद्यः परमात्मा स एव स्वकीयमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। एतच्चाथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति। 'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययेति' (न० ताप० उप० ii, 1,2)। स जातो विराट् पुरुषोऽत्यरिच्यत अतिरिक्तोऽभूत्। विराड् व्यतिरिक्तो देव तिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चाद्देवादि जीवभावादूर्ध्वं भूमिम्। ससर्ज इति

शेषः । अथोभूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥५॥

Pet. :—From him Virāṭ was born, and the Man from Virāṭ; when born he stretched beyond the earth, behind and before.

Ren. :—From Him is born (creative) Energy,
From (the creative) Energy is the Purusa born.
Once born he has stretched himself beyond.
The earth, as much behind as forward.

---

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥६॥

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत । वसन्तः । अस्य ।
आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥६॥

सायणः—यद्यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात्पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वत अन्वतिष्ठन् । तदानीमस्य यज्ञस्य वसन्तो वसन्तर्तुरेवाज्यमासीत् । तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः । एवं ग्रीष्म इध्म आसीत् । तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः । शरद्धविरासीत् । तामेव पुरोडाशादिहविष्ट्वेन संकल्पितवन्त इत्यर्थः । पूर्वं पुरुषस्य हविः सामान्यरूपत्वेन संकल्पः । अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम् ॥६॥

Pet. :—When the gods made sacrifice with the Man for their offering, Spring was the butter for him, Summer the fuel, Autumn the offering.

Ren. :—When the gods stretched the sacrifice.
With the Puruṣa as oblation,
The Spring was the (ritual) ghee.
Summer the fuel-wood and Autumn the offering.

---

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥७॥

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रतः । तेन ।
देवाः । अयजन्त । साध्याः । ऋषयः । च । ये ॥७॥

*सायणः*—यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः । कीदृशमित्याह । अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम् । एतच्च प्रागेवोक्तं 'तस्माद्विराळजायत विराजो अधि पूरुषः' इति । तेन पुरुषरूपेण पशुना अयजन्त । मानसं यागं निष्पादितवन्त इत्यर्थः । के ते देवा इत्यत्राह । साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूला ऋषयो मन्त्रद्रष्टारश्च ये सन्ति ते सर्वेऽप्ययजन्तेत्यर्थः ॥७॥

Pet :—They be-sprinkled this sacrifice on the altar, the Man born in the beginning: the gods, the holy ones, and the sages took him for their offering.

Ren. :—On the (sacred) seat, they besprinkled Purusa,
(i. e.) The Sacrifice born in the beginning
By him the gods accomplished the sacrifice,
So did the Saints and Seers.

---

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥८॥

तस्मात् । यज्ञात् । सर्वऽहुतः । संऽभृतम् । पृषत्ऽआज्यम् । पशून् ।
तान् । चक्रे । वायव्यान् । आरण्यान् । ग्राम्याः । च । ये ॥८॥

*सायणः*—सर्वहुतः । सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत् । तादृशात्तस्मात्पूर्वोक्तान्मानसाद्यज्ञात्पृषदाज्यं दधिमिश्रमाज्यं संभृतं सम्पादितम् । दधि चाज्यं चेत्येवमादि भोज्यजातं सर्वं संपादितमित्यर्थः । तथा वायव्यान् वायुदेवताकाँल्लोकप्रसिद्धानारण्यान्पशूंश्चक्रे उत्पादितवान् । आरण्याः हरिणादयः । तथा ये च ग्राम्याः गवाश्वादयस्तानपि चक्रे । पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते । 'वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्षदेवत्याः खलु वै पशवः वायव एवैतान्परिददाति' इति (तै० ब्रा० iii,3,2,1,3 ) ॥८॥

Pet. :—From that sacrifice fully made was produced the butter : it made the creatures that are in the sky, the beasts of the forest, and those that dwell in villages.

Ren. :—From that sacrifice totally-offered,
Was drawn the clotted (ritual) fat.
From this were made the animals of the air,
Those of the desert and of the agglomerations.

---

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥९॥

तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे । छन्दांसि ।
जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥९॥

सायणः—सर्वहुतस्तस्मात्पूर्वोक्ताद्यज्ञादृचः सामानि जज्ञिरे उत्पन्नाः । तस्माद्यज्ञाच्छन्दांसि गायत्र्यादीनि जज्ञिरे । तस्माद्यज्ञाद्यजुरप्यजायत ॥९॥

Pet. :—From that sacrifice fully made the Rgveda and Sama-veda were born · from it the Atharvaveda was born, from it the Yajurveda was born.

Ren. :—From that sacrifice totally offered,
Were born the Hymns, the Chants :
The metres were also born thereof,
As also the (liturgical) formulae.

---

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥

तस्मात् । अश्वाः । अजायन्त । ये । के । च । उभयादतः । गावः ।
ह । जज्ञिरे । तस्मात् । तस्मात् । जाताः । अजावयः ॥१०॥

सायणः—तस्मात्पूर्वोक्ताद्यज्ञादश्वा अजायन्त उत्पन्नाः तथा ये के चाश्वव्यतिरिक्ता गर्दभा अश्वतराश्चोभयादत ऊर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा तस्माद्यज्ञाद् गावश्च जज्ञिरे । किं च । तस्माद्यज्ञादजावयश्च जाताः ॥१०॥

Pet. :—From it horses were born, and all animals with two rows of teeth : from it cows were born, from it were born all goats and sheep.

Ren. :—From that (sacrifice) were born the horses,
And all the beasts with two rows of teeth.
The cattle were also born thereof,
Were born thereof the goats and sheep.

---

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥११॥

यत् । पुरुषम् । वि । अदधुः । कतिधा । वि । अकल्पयन् । मुखम् ।
किम् । अस्य । कौ । बाहू इति । कौ । ऊरू इति ।
पादौ । उच्येते इति ॥११॥

*सायणः*—प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवा यद्यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तस्तदानीं कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः । अस्य पुरुषस्य मुखं किमासीत् । कौ बाहू अभूताम् । कावूरू । कौ च पादावुच्येते । प्रथमं सामान्यरूपः प्रश्नः पश्चान्मुखं किमित्यादिना विशेषविषयाः प्रश्ना. ॥११॥

Pet. :—When they divided the Man, into how many parts did they shape him ? What was his mouth, what his arms, what his thighs, what his feet ?

Ren. :—When they had dismembered the Purusa,
How did they distribute its parts ?
What became his mouth, what his arms ?
His thighs, his feet, what name received ?

---

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१२॥

ब्राह्मणः । अस्य । मुखम् । आसीत् । बाहू इति । राजन्यः ।
कृतः । ऊरू इति । तत् । अस्य । यत् । वैश्यः । पत्ऽभ्याम् । शूद्रः । अजायत ॥१२॥

सायणः—इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति। अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषो मुखमासीत्। मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिमान्पुरुषः स बाहू कृतः बाहुत्वेन निष्पादितः। बाहुभ्यामुत्पादित इत्यर्थः। तत्तदानीमस्य प्रजापतेर्यदूरू तद्रूपो वैश्यः संपन्नः। ऊरुभ्यामुत्पन्न इत्यर्थः। तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान्पुरुषोऽजायत। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीतेत्यादौ' विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये ॥१२॥

Pet. :—The Brāhmana was his mouth, of his arms the warrior was made, his thighs became the husbandman, and the pariah was born from his feet.

Ren. :—His mouth became the Brahmin,
The warrior was the product of his arms,
His thighs were the Artisans,
Of his feet was the Servant born.

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१३॥

चन्द्रमाः। मनसः। जातः। चक्षोः। सूर्यः। अजायत। मुखात्। इन्द्रः।
च। अग्निः। च। प्राणात्। वायुः। अजायत ॥१३॥

सायणः—यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। प्रजापतेर्मनसः सकाशाच्चन्द्रमा जातः। चक्षोश्च चक्षुषः सूर्योऽप्यजायत। अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ। अस्य प्राणाद् वायुरजायत ॥१३॥

Pet. :—The moon sprang from his mind, and the sun was born from his eyes. Indra and Agni were born from his mouth, Vāyu from his breath.

Ren. :—The moon is born of his consciousness,
Of his gaze is born the sun,
Of his mouth Indra and Agni,
Of his breath the wind.

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१४॥

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः । द्यौः । सम् । अवर्तत । पत्ऽभ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥१४॥

सायणः—यथा चन्द्रादीन्प्रजापतेर्मनःप्रभृतिभ्योऽकल्पयंस्तथान्तरिक्षादीँल्लोकान्प्रजापतेर्नाभ्यादिभ्यो देवा अकल्पयन् उत्पादितवन्तः । एतदेव दर्शयति । नाभ्याः प्रजापतेर्नाभेरन्तरिक्षमासीत् । शीर्ष्णः शिरसो द्यौः समवर्तत उत्पन्ना । अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना । अस्य श्रोत्राद्दिश उत्पन्नाः ॥१४॥

Pet. :—From his navel came the mid-world, from his head rolled the sky : from his feet came the earth ; from his ear the east and the west : thus they framed the world.

Ren. :—The aerial region came of his navel,
From his head evolved the sky,
Of his feet the earth, of his ear the quarters,
Thus were regulated the worlds.

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः । देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥१५॥

सायणः—अस्य सांकल्पिकयज्ञस्य गायत्र्यादीनि सप्तच्छन्दांसि परिधय आसन् । ऐष्टिकस्याहवनीयस्य त्रयः परिधयः उत्तरवेदिकास्त्रयः आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अतएवाम्नायते: 'न पुरस्तात्परिदध्यादादित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहन्तीति' । तत एत आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः । तथा समिधस्त्रिः सप्त त्रिगुणितसप्तसंख्याका एकविंशतिः कृताः । द्वादशमासाः पञ्चर्तवः त्रय इमे लोका असावादित्य एकविंश इति श्रुताः (तै० सं० 5,1,10,3) पदार्था एकविंशतिदारुयुक्तेन्धनत्वेन भाविताः । यद्यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपा यज्ञं तन्वाना मानसं यज्ञं तन्वानाः कुर्वाणाः पशुमबध्नन् । विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वत्र यत्पुरुषेण हविषेत्युक्तम् ॥१५॥

Pet.:—Seven logs were put round for him, thrice seven faggots were made: when the gods made sacrifice, and bound the Man for their offering.

Ren.:—Seven were the sticks of the palisade,
Three times seven were the faggots made,
When the gods stretching the sacrifice,
Had tied the Purusa as victim.

---

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि ।
आसन् । ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे ।
साध्याः । सन्ति । देवाः ॥१६॥

सायणः—पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति । देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः । अस्मात्पूजनात्तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यान्यासन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवाद भागार्थः संगृह्यते । यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपास्तिसाधका देवाः सन्ति तिष्ठन्ति तन्नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानस्तदुपासका महात्मानः सचन्ते समवयन्ति प्राप्नुवन्ति ॥१६॥

Pet.:—With sacrifice the gods sacrificed, these were the first rites: then these great ones sought out heaven, where are the holy gods that were before them.

Ren.:—The gods stretched the sacrifice by sacrifice,
Such were the first institutions.
These powers obtained access to the firmament,
Where the Saints, the first gods are.

---

## 30—X—117.

भिक्षुर्नामाङ्गिरस ऋषिः । प्रथमाद्वितीये जगत्यौ, शिष्टाः सप्त त्रिष्टुभः ।
अत्र धनस्यान्नस्य च दानं स्तूयते । अतस्तद्दैवत्यम् ॥

न वा उं देवाः क्षुधमिद्वधं ददुरुताशितमुपं गच्छन्ति मृत्यवंः ।
उतो रयिः पृणतो नोपं दस्यत्युतापृंणन्मर्डितारं न विन्दते ॥१॥

न । वै । ऊँ इति । देवाः । क्षुधंम् । इत् । वधम् । ददुः । उत । आशितम् । उपं । गच्छन्ति । मृत्यवंः । उतो इति । रयिः । पृणतः । न । उपं । दस्यति । उत । अपृंणन् । मर्डितारंम् । न । विन्दते ॥१॥

*सायणः*—भिक्षुः, प्रथमं व्यतिरेकमुखेनान्नदानं प्रशंसति । देवाः वै देवाः सर्वेषां क्षुधं न ददुः प्रायच्छन् । किन्तु वधम् इत् वधमेव दत्तवन्तः । एतादृशीं वधरूपां क्षुधमन्नदानेन यः शाम्यति स दाता खलु । उ इति पूरणः । योऽदत्त्वा भुङ्क्ते तम् आशितं भुञ्जानं पुरुषमपि मृत्यवः मरणानि उप गच्छन्ति समीपे यान्ति । "आशितः कर्ता" (पा० सू० 6-1-207) इत्याद्युदात्तत्वम् । क्षुधार्तानां भोक्तॄणां च मरणं समानं किं दानेन धननाशरूपेण । अत आह । उत । उत शब्दोऽप्यर्थे । पृणतः प्रयच्छतः पुरुषस्य रयिः धनं नोपदस्यति नोपक्षीयते । 'दसु उपक्षये', दैवादिकः । "पृण दाने" तौदादिकः, तस्य शत्रन्तस्य "शतुरनुमो नद्यजादी" इति विभक्तेराद्युदात्तत्वम् । दानप्रसंगे वा दातारं दूषयति । अपृणन् अप्रयच्छन् पुरुषस्तु मर्डितारं आत्मनः सुखयितारं न विन्दते । न कुत्रापि लभते । इह बन्धवोऽप्रदानान्न सुखयन्ति देवा अपि हविष्प्रदानाभावात् ॥१॥

*Ren.* :—No, the gods have not created hunger as the only way to death:
Deaths (of various types) also await the satiated man.
The riches of the donor do not get exhausted,
And the miser finds no one to pity him.

---

य आध्राय चकमानाय पित्वोऽन्नंवान्त्सन्रफितायोपजग्मुषे ।
स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न विन्दते ॥२॥

यः । आध्राय । चकमानाय । पित्वः । अन्नंऽवान् । सन् । रफितायं । उपऽजग्मुषे । स्थिरम् । मनः । कृणुते । सेवते । पुरा । उतो इति । चित् । सः । मर्डितारंम् । न । विन्दते ॥२॥

*सायणः*—यः पुरुषः स्वयम् अन्नवान्सन्नपि आध्राय । आध्रायतेऽसौ इति आध्रो दुर्बलः । तस्मै पित्वः पितूनन्नानि चकमानाय कामयमानाय । चकमानः

कान्तिकर्मा। रफिताय। रफतिर्हिंसार्थः। दारिद्र्येण हिंसिताय उपजग्मुषे गृहं प्रत्यागताय अतिथये मनः आत्मीयमन्तःकरणं अदाने। स्थिरं कृणुते कुरुते। मनःस्थैर्यकरणेन तं क्लेशयतीत्यर्थः। कृणुते। 'कृवि हिंसाकरणयोः'........ न केवलं क्लेशकरणं अपितु पुरा तस्य पुरस्तादेव सेवते भोगान् सः अपि मर्डितारम् आत्मनः सुखयितारं न विन्दते। न कुत्रापि लभते ॥२॥

Ren. :—He, who having food, hardens his heart,
Towards the poor come to him, destitute, begging
A pittance—the rich having waited on him of old—
He also finds no one to pity him.

—

५१८

स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥३॥

सः। इत्। भोजः। यः। गृहवे। ददाति। अन्नऽकामाय।
चरते। कृशाय। अरम्। अस्मै। भवति। यामऽहूतौ।
उत। अपरीषु। कृणुते। सखायम् ॥३॥

*सायणः*—अन्वयमुखेन प्रशंसति। स इत् स एव भोजः दाता खलु यो गृहवे। ग्रहेर्मृगय्वादित्वात् कु प्रत्ययः (उ. स. 1–38), प्रतिगृहीत्रे अन्नकामाय अन्नं याचमानाय चरते गृहमागतवते कृशाय दारिद्र्येण एतादृशायातिथये-ऽन्नं ददाति प्रयच्छति। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। यामहूतौ। यामा गन्तारो देवाः। अत्र यातेः 'अर्तिस्तुसुहुसृ' (उ. सू.) इत्यादिना मन्प्रत्ययः। त आहूयन्तेऽत्रेति यामहूतिर्यज्ञः, तस्मिन् अस्मै दात्रे फलम् अरं अलं पर्याप्तं भवति। कामप्रदानं भवतीत्यर्थः। उत अपि च अपरीषु। 'केवलमामके' (पा. सू.) इति ङीप्। अन्यासु शात्रवीषु सेनासु सखायं कृणुते। तद्वदाचरतीत्यर्थः। तस्य सर्वे सखाय एव न शत्रव इत्यर्थः ॥३॥

Ren :—He is generous who gives to the mendicant,
To the emaciated approaching him for food.
He answers him when the latter calls him on the way;
And for the future makes a friend thereof.

—

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ॥४॥

न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे । सचमानाय ।
पित्वः । अप । अस्मात् । प्र । इयात् । न । तत् । ओकः ।
अस्ति । पृणन्तम् । अन्यम् । अरणम् । चित् । इच्छेत् ॥४॥

*सायणः*—व्यतिरेकेण निन्दामाह । सः पुरुषः सखा न भवति यः पुरुषः सचाभुवे सहभवनशीलाय सचमानाय सेवमानायोपसर्जनीभूताय सख्ये सखिजनाय पित्वः पितूनन्नानि न ददाति न प्रयच्छति । स सुहृन्न भवतीत्यर्थः । अस्मात् अदातुः सख्युः स अप प्रेयात् अपगच्छेत् । यद्येनं परित्यज्य गच्छेत् । "इण् गतौ", लिङ् यासुट् । तर्हि तदोकः निवासः सदैव न अस्ति न भवति । सदनं हि बन्धुभिः परिगतम् । सः गतः पुरुषः पृणन्तं अन्नादिकं प्रयच्छन्तं अन्यम् अरणम् । चित् अर्थं स्वामिनमेव इच्छेत् कामयेत ॥४॥

Ren.:—He is no friend who shares not his pittance
With the friend, companion, associate,
The latter should discard him ! His abode is not there.
And seek another donor, though a stranger.

---

पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनुपश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः ॥५॥

पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसम् । अनु । पश्येत ।
पन्थाम् । ओ इति । हि । वर्तन्ते । रथ्याऽइव । चक्रा । अन्यम्ऽअन्यम् । उप । तिष्ठन्त । रायः ॥५॥

*सायणः*—धनवन्तं पुरुषं दाने प्रेरयति । तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषः नाधमानाय याचमानायातिथये पृणीयाद् इद् धनानि दद्यात् एव । 'पृ पालनपूरणयोः' । क्र्यादिः । प्वादीनां ह्रस्वः । यदि दद्यात् द्राघीयांसम् । दीर्घशब्दादीयसुनि 'प्रियस्थिर' इत्यादिना द्राघीत्यादेशः । दीर्घतमं पन्थां पन्थानं सुकृतमार्गं अनुपश्येत अनुपश्येत् । व्यत्ययेनात्मनेपदम् । तत्र कारणमाह । रायः धनानि ओ हि । आ उ । आ वर्तन्ते एव खलु एकत्र न तिष्ठन्तीत्यर्थः । तत्र दृष्टान्तः । रथ्येव यथा रथ्यानि 'रथाद् यत्' (पा, सू) 'तस्येदम्' इत्यर्थे

यत्। रथसंबन्धीनि चक्रा चक्राणि उपर्यधोभावेनावर्तन्ते तद्वदावृत्तिमेव दर्शयति। अन्यमन्यं पुरुषं धनानि उपतिष्ठन्त उपतिष्ठन्ते। समवेतानि भवन्ति। 'उपाद्देवपूजासंगतिकरण' (का. 1-3-15) इत्यात्मनेपदम्। तस्माद् धनानि देयानि इति भावः॥५॥

Ren.—The stronger should give to the miserable:
That he turn his eyes towards the long path!
For the riches are like chariot-wheels;
They turn and pass from one to the other.

---

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥६॥

मोघम्। अन्नम्। विन्दते। अप्रऽचेताः। सत्यम्। ब्रवीमि। वधः। इत्। सः। तस्य। न। अर्यमणम्। पुष्यति। नो इति। सखायम्। केवलऽअघः। भवति। केवलऽआदी ॥६॥

सायण:—अदातारं दूषयति। अप्रचेताः अप्रकृष्टज्ञानः दाने चेतो मनो यस्य न भवति सः मोघं व्यर्थमेव अन्नं विन्दते लभते। 'विद्लृ लाभे' तौदादिकः। 'शे मुचादीनाम्' इति नुमागमः। इदं सत्यं यथार्थमेव इति ब्रवीमि। ऋषिरहं वदामि। न केवलं व्यर्थं किन्तु तस्य पुरुषस्य सः वधः इत् वध एव अन्नं परामृशतः। तच्छब्दस्य वधसामानाधिकरण्यात् पुँल्लिङ्गता। यथा 'शेरणौ' (पा. सू.) इत्यत्र यत् कर्म स एव कर्तेति। अथवा स निरर्थको वध एव यः पुरुषः अर्यमणम्। उपलक्षणमिदम्। सर्वान् देवान् अर्यमादीन् न पुष्यति हविष्प्रदानेन न पोषयति नो नापि सखायं समानख्यानमभ्यागतमतिथिं मित्रवर्गं च न पोषयति। 'पुष् पुष्टौ'। दैवादिकः। यच्छब्दाध्याहारादनिघातः। अत एव केवलादी। 'अदेः सुप्यजातौ' (पा. सू.) इति णिनिः। अतः उपधालक्षणा वृद्धिः। केवलमसाक्षिकमन्नं भुञ्जानः सः केवलाघो भवति। केवलपापवान् भवति। अघमेव केवलं तस्य शिष्यते। नैहिकं नामुष्मिकमिति। तस्मात् यथाकथंचिद्दातव्यमित्यभिप्रायः॥६॥

Ren.:—In vain does the fool receive food:
I swear: it is an order of death for him.
He cultivates not a benefactor, nor friend.
He who eats alone commits alone the fault.

---

कृषन्नित्फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः।
वदन्ब्रह्मावदतो वनीयान्पृणन्नापिरपृणन्तमभि ष्यात् ॥७॥

कृषन्। इत्। फालः। आशितम्। कृणोति। यन्। अध्वानम्। अप।
वृङ्क्ते। चरित्रैः। वदन्। ब्रह्मा। अवदतः। वनीयान्। पृणन्।
आपिः। अपृणन्तम्। अभि। स्यात् ॥७॥

*सायणः*—कृषन् कृषिं कुर्वन् फालः आशितं कर्षकं भोक्तारं कृणोति करोति। यथा अध्वानम् मार्गं यन्। इणः शतरि नुमागमः। गच्छन् पुरुषः चरित्रैः आत्मीयैः गमनैः अपवृङ्क्ते। स्वामिनो धनमावर्जयति। 'वृजी वर्जने'। आदादिकः। अनुदात्तेत्। वदन् शास्त्रार्थं ब्रुवाणः ब्रह्मा ब्राह्मणः अवदतः शास्त्रम-ब्रुवाणाज्जनात् वनीयान् संभक्ततमः प्रियकरो भवति। ते यथा स्वकर्मणि प्रवर्तमानाः परेषामुपकारकाः तथा पृणन् दाता पुरुषः अपृणन्तम् अदातारं जनम् अभि अभिलक्ष्य आपिः स्यात् बन्धुर्भवेत् ॥७॥

Ren.:—The ploughshare tilling satiates the man.
The feet, walking, finish the route.
The Brahmā who talks is better than the dumb.
He who gives is above one who gives not.

---

एकपाद्भूयो द्विपदो वि चक्रमे द्विपात्त्रिपादमभ्येति पश्चात्।
चतुष्पादेति द्विपदामभिस्वरे सम्पश्यन्पङ्क्तीरुपतिष्ठमानः ॥८॥

एकऽपात्। भूयः। द्विऽपदः। वि चक्रमे। द्विऽपात्। त्रिऽपादम्।
अभि। एति। पश्चात्। चतुःऽपात्। एति। द्विऽपदाम्। अभिऽ-
स्वरे। सम्ऽपश्यन्। पङ्क्तीः। उपऽतिष्ठमानः ॥८॥

*सायणः*—अत्र पादशब्दो भागवचनः। एकपात् एकभागधनः पुरुषः द्विपदः द्विगुणधनस्य मार्गं भूयः। तृतीयायाः सुः। भूयसा कालेन विचक्रमे विविधं गच्छति। 'वेः पादविहरणे' (पा. सू.) इत्यात्मनेपदम्। तथा द्विपात् पुरुषः त्रिपादं त्रिभागधनं पुरुषं पश्चात् अभ्येति अभिगच्छति। चतुष्पाद् चतुर्भागधनस्तु द्विपदाम्। बहुवचनादेकपादादयः उपलक्ष्यन्ते। एकपाद-धनादीनां पंक्तीः अभिस्वरे अभिगमने संपश्यन् सम्यगीक्षमाणः सन् उपतिष्ठमानः एति गच्छमानो भवति। अन्योन्यापेक्षया सर्वे उत्तमाधमाः। तस्मात्त्व-मेव धनवानिति न मन्ये किं त्वतिथिभ्यो धनानि ददस्वेत्यर्थः ॥८॥

Ren.:—With one foot he has gone farther than one with two,
With two feet he overtakes one who walks with three;
With four he remains within the reach of man,
Watching the herd, offering his services.

---

समौ चिद्धस्तौ न समं विविष्टः सम्मातरा चिन्न समं दुहाते ।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्सन्तौ न समं पृणीतः ॥९॥

समौ । चित् । हस्तौ । न । समम् । विविष्टः । सम्ऽमातरा । चित् । न । समम् । दुहाते इति । यमयोः । चित् । न । समा । वीर्याणि । ज्ञाती इति । चित् । सन्तौ । न । समम् । पृणीतः ॥९॥

*सायणः*—अतिथिभ्यो धनमप्रयच्छन्नपि मम भ्राता दास्यति चेत् तत्र हेतुमाह । समौ चिद्धस्तौ समावपि समं समानं न विविष्टः, कार्यम् न व्याप्नुतः । "विप्लृ व्याप्तौ" जौहोत्यादिकः । संज्ञापूर्वकस्य विधेरनित्यत्वादभ्यासस्य गुणाभावः तथा संमातरा वत्सस्य मातरौ धेनू समे अपि समं समानं पयः न दुहाते । यमयोश्चित् सहजातयोः पुत्रयोरपि समा समानि वीर्याणि न सन्ति । तस्मात् ज्ञाती चित् एकस्मिन् कुले सन्तौ जातावपि समं न पृणीतः न यच्छतः । तस्माद्यस्य धनमस्ति स एव दद्यादित्यर्थः॥९॥

Ren.:—Two hands, though equal, work not equally.
Two (cows) of same mother, yield not equal milk.
Twins possess not equal strength.
Two men, though kinsmen, give not equally.

---

## 31—X—125.

आम्भृणी वाक् ऋषिः । परमात्मा देवता । 1, 3—8—त्रिष्टुभः 2—जगती ।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥१॥

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः । उत । विश्वऽदेवैः । अहम् । मित्रावरुणा । उभा । बिभर्मि । अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥१॥

*सायणः*—अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद् ब्रह्म जगत् कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैरेकादशभिः। इत्थम्भावे तृतीया। तदात्मना चरामि। एवं वसुभिः इत्यादौ तत्तदात्मना चरामीति योज्यम्। तथा मित्रावरुणा मित्रञ्च वरुणञ्च। 'सुपां सुलुक्०' इति द्वितीयाया आकारः। उभा उभौ अहम् एव ब्रह्मीभूता बिभर्मि धारयामि। इन्द्राग्नी अपि अहम् एव धारयामि। उभा उभौ अश्विना अश्विनौ अपि अहम् एव धारयामि। मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सद् दृश्यते। माया च जगदाकारेण विवर्तते। तादृश्या मायाया आधारत्वेनासंगस्यापि ब्रह्मण उक्तस्य सर्वस्योपपत्तिः ॥१॥

*दुर्गाचार्यः*—वागाम्भृणीये वागेव ब्रवीति। अहम् एव रुद्रैः वसुभिः आदित्यैः विश्वदेवैः विश्वैश्च देवैः सहभूता चरामि स्तुतिरूपेण। अहम् एव मित्रावरुणा मित्रावरुणौ उभा उभावपि इन्द्राग्नी अश्विना अश्विनौ च उभा उभावपि इन्द्राग्नी अश्विना अश्विनौ च उभा उभावपि बिभर्मि हविषा, मत्पूर्वकं हविःसम्प्रदानं सर्वदेवतानाम् इत्यभिप्रायः ॥१॥

Pet.:—I walk with the Rudras and the Vasus, with the Ādityas too, and all the host of gods: I bear up the Two, Mitra and Varuna; I sustain Indra and Agni, and the Two Aśvins.

Ren.:—I go with the Rudras, with the Vasus,
I go with the Ādityas and with all the Gods.
I bear both Varuna and Mitra,
I bear Indra and Agni, and both the Aśvins.

---

अहं सोमंमाहनसं बिभर्म्यहं त्वष्टारंमुत पूषणं भगंम् ।
अहं दंधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥२॥

अहम्। सोमंम्। आहनसंम्। बिभर्मि। अहम्। त्वष्टारंम्। उत।
पूषणंम्। भगंम्। अहम्। दधामि। द्रविणम्। हविष्मते।
सुप्रऽअव्ये। यजंमानाय। सुन्वते ॥२॥

*सायणः*—आहनसम् आहन्तव्यमभिषोतव्यं सोमम्। यद्वा, शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमम्। अहम् एव बिभर्मि। तथा त्वष्टारम् उत अपि च पूषणम् भगम् च अहम् एव बिभर्मि। तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे। अवतेस्तर्पणार्थात् "अवितॄस्तृतन्त्रिभ्य ईः" इतीकारप्रत्ययः। चतुर्थ्येकवचने यणि 'उदात्तस्वरितयोर्यणः

स्वरितोऽनुदात्तस्य' इति सुप. स्वरितत्वम्। सुन्वते सोमाभिषवं कुर्वते। 'शतुरनुमः' इति चतुर्थ्या उदात्तत्वम्। ईदृशाय यजमानाय द्रविणम् धनं यागफलरूपमहमेव (ददामि) धारयामि। एतच्च ब्रह्मणः फलदातृत्वं 'फलमत उपपत्ते.' इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् ॥२॥

Pet.:—I bear up the soma stream, I Tvastr, Pūṣan, Bhaga: I give wealth to him that brings an oblation, to the pious householder, to him that pours out the soma.

Ren.:—I bear the exuberant Soma,
I bear Tvastr as also Pūsan and Bhaga.
I confer riches on the oblation-offerer,
On the sacrificer, on the soma-presser, on the good invoker.

---

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥३॥

अहम्। राष्ट्री। सम्ऽगमनी। वसूनाम्। चिकितुषी। प्रथमा।
यज्ञियानाम्। ताम्। मा। देवाः। वि। अदधुः। पुरुऽत्रा। भूरिऽस्थात्राम्। भूरि। आऽवेशयन्तीम् ॥३॥

सायणः—अहं राष्ट्री। ईश्वरनामैतत्। सर्वस्य जगत ईश्वरी तथा वसूनाम् धनानां संगमनी संगमयित्री उपासकानां प्रापयित्री। चिकितुषी यत् साक्षात् कर्तव्यं परं ब्रह्म तज् ज्ञातवती स्वात्मतया साक्षात् कृतवती। अत एव यज्ञियानाम् यज्ञार्हाणां प्रथमा मुख्या। या एवंगुणविशिष्टाहं तां (मा) मा भूरिस्थात्राम् बहुभावेन प्रपञ्चात्मनाऽवतिष्ठमानाम्। भूरि भूरीणि बहूनि भूतजातानि आवेशयन्तीम् जीवभावेनात्मानं प्रवेशयन्तीम् ईदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः देवाः विदधति कुर्वन्ति। उक्तप्रकारेण वैश्वरूप्येणावस्थानाद् यद् यत् कुर्वन्ति तत् सर्वं मामेव कुर्वन्तीत्यर्थः ॥३॥

Pet :—I am the Queen, the gatherer of riches, I was the first to know the holy ones: therefore, have the gods put me in many places, making me enter and dwell everywhere.

Ren.:—I am the dominating one, the gatherer of the treasures,
Who understands; among the beneficiaries of homage, the first.
The gods have distributed me in many places,
I have many abodes, I enter in many (forms).

---

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥४॥

मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति । यः । प्राणिति । यः ।
ईम् । शृणोति । उक्तम् । अमन्तवः । माम् । ते । उप । क्षियन्ति ।
श्रुधि । श्रुत । श्रद्धिऽवम् । ते । वदामि ॥४॥

सायणः—यः अन्नमत्ति स भोक्तृशक्तिरूपया मया एव अन्नमत्ति । यश्च विपश्यति आलोकयतीत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति सोऽपि मयैव । यः (ईम्) उक्तं शृणोति । 'श्रु श्रवणे' । 'श्रुवः शृ च' इति श्नु प्रत्ययः, धातोः शृभावश्च । य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते माम् अमन्तवः अमन्यमाना अजानन्त उपक्षियन्ति उपक्षीणाः संसारेण हीना भवन्ति । मनेरौणादिकस्तुप्रत्ययः । नञ्समासे अव्ययस्वरेणान्तोदात्तत्वम् । यद्वा भावे तु-प्रत्ययः । ततो बहुव्रीहौ 'नञ्-सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । माम् अमन्तवः मद्विषयज्ञानरहिता इत्यर्थः । हे श्रुत विश्रुत सखे, श्रुधि मया वक्ष्यमाणं शृणु । छान्दसो विकरणस्य लुक् । 'श्रुशृणुपृकृवृभ्यः' इति हेर्धिभावः । किं तच्छ्रोतव्यम् ? श्रद्धिवम् । श्रद्धिः श्रद्धा तया युक्तम् । श्रद्धायत्नेन लभ्यमित्यर्थः । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या' इति श्रच्छब्दस्योपसर्गवद्वर्तमानत्वात् 'उपसर्गे घोः किः' इति किप्रत्ययः । मत्वर्थीयो वः । ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि ॥४॥

Pet. :—By me, whoever sees, or breathes, or hears what is said, eats food : they know it not; but are under my control, listen one and all, this is a true thing I say.

Ren. :—Thanks to me the discerning one eats food,
The one who breathes, the who hears what is spoken.
Unknowing, they live in me.
Listen, thou who knowest, what I say merits belief.

---

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥५॥

अहम् । एव । स्वयम् । इदम् । वदामि । जुष्टम् । देवेभिः । उत ।
मानुषेभिः । यम् । कामये । तम्ऽतम् । उग्रम् । कृणोमि । तम् ।
ब्रह्माणम् । तम् । ऋषिम् । तम् । सुऽमेधाम् ॥५॥

*सायणः*—अहं स्वयमेव इदम् वस्तुब्रह्माण्डात्मकं वदामि उपदिशामि । देवेभिः देवैरिन्द्रादिभिरपि जुष्टम् सेवितम् । उत अपि च मानुषेभिः मनुष्यैरपि जुष्टम् । ईदृग्वस्त्वात्मिकाऽहं कामये यं पुरुषं रक्षितुमहं वाञ्छामि त तम् पुरुषम् उग्रं कृणोमि सर्वेभ्योऽधिकं करोमि । तम् एव ब्रह्माणं स्रष्टारं करोमि । तम् एव ऋषिम् अतीन्द्रियार्थदर्शिनं करोमि । तमेव सुमेधाम् शोभनप्रज्ञं च करोमि ॥५॥

Pet. :—Verily I myself speak, and say what shall be welcome to gods and men : whomsoever I love I make strong. I make him Brahman, I make him a prophet and a wise man.

Ren. :—I spontaneously announce
That which pleases the gods and the humans.
Whomsoever I love, I make him powerful;
I make him a Brahmā, a Seer, a Sage.

---

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥६॥

अहम् । रुद्राय । धनुः । आ । तनोमि । ब्रह्मऽद्विषे । शरवे । हन्तवै ।
ऊँ इति । अहम् । जनाय । सऽमदम् । कृणोमि । अहम् । द्यावा-
पृथिवी इति । आ । विवेश ॥६॥

*सायणः*—पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य । षष्ठ्यर्थे चतुर्थी । महादेवस्य धनुः चापम् अहम् आतनोमि ज्ययाततं करोमि । किमर्थम् ? ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरु हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै हन्तुं हिंसितुम् हन्तेः 'तुमर्थे सेसेन्०' इति तवै प्रत्ययः, 'अन्तश्च तवै युगपत्' इत्याद्यन्तयोर्युगपदुदात्तत्वम् । 'शृ हिंसायाम्' इत्यस्मात् 'शृ स्वृस्निहि०' इत्यादिना उप्रत्ययः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी । उशब्दः पूरकः । अहम् एव समदम् । समानं माद्यन्त्यस्मिन् इति समत् संग्रामः । स्तोतृजनार्थं शत्रुभिः सह संग्राममहमेव कृणोमि करोमि । तथा द्यावापृथिवी दिवञ्च पृथिवीञ्च अन्तर्यामितया अहमेव आविवेश प्रविष्टवती ॥६॥

Pet. :—I bend the bow for Rudra that his arrow may smite down the man who hates God : I make strife among the people, I pervade heaven and earth.

Ren. :—I stretch the bow for Rudra.
That the arrow destroy the enemy of the sacred formula !
I create the contest among men.
I have pervaded the Sky and the Earth.

---

अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥७॥

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अन्तः । समुद्रे । ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥७॥

*सायणः*—'द्यौः पिता' इति श्रुतेः पिता द्यौः । पितरम् दिवम् अहं सुवे प्रसुवे जनयामि, 'आत्मन आकाशः सम्भूतः' इति श्रुतेः । कुत्रेति तदाह—अस्य परमात्मनो मूर्धन् मूर्धनि उपरि । कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते, तन्तुषु पट इव । मम च योनिः कारणं समुद्रे । समुद्द्रवन्त्यस्माद् भूतजातानीति समुद्रः परमात्मा । तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद् ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः । यत ईदृग्भूताहमस्मि ततः हेतोः विश्वा विश्वानि सर्वाणि (भुवना) भुवनानि भूतजातानि अनु प्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि । 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम् । उत अपि च अमूं द्याम् विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम् । उपलक्षणमेतत् । एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उपस्पृशामि । यद्वा, अस्य भूलोकस्य मूर्धन् मूर्धनि उपरि अहं पितरम् आकाशं सुवे । समुद्रे जलधौ अप्सु उदकेषु अन्तः मध्ये मम योनिः कारणभूतोऽम्भृणाख्यऋषिर्वर्तते । यद्वा, समुद्रे अन्तरिक्षे अप्सु अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते । ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि । अन्यत् समानम् ॥७॥

Pet. :—I set my Father over all the world; my seat is in the waters in the sea : thence I spread through all worlds, and touch with my head the sky.

Ren. —I give birth to the Father at the summit of this (world).
My origin is in the waters, in the ocean
Thence have I spread myself across all beings,
And I touch even the sky with the side (of my skull).

---

अहमेव वातं इव प्र वाम्यारभंमाणा भुवनानि विश्वां ।
परो दिवा पर एना पृथिव्यैतावंती महिना सं बंभूव ॥८॥

अहम् । एव । वातःऽइव । प्र । वामि । आऽरभंमाणा । भुवनानि ।
विश्वा । परः । दिवा । परः । एना । पृथिव्या ।
एतावंती । महिना । सम् । बभुव ॥८॥

सायण—विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्रवामि प्रवर्ते वात इव । यथा वातः परेणाप्रेरित सन् स्वेच्छयैव प्रवाति तद्वत् । उक्तं सर्वं निगमयति । परो दिवा । पर इति सकारान्तं परस्तादित्यर्थे वर्तते, यथाध इत्यधस्तादर्थे । तद् योगे च तृतीया सर्वत्र दृश्यते । दिव आकाशस्य परस्तात् । एना पृथिव्या । 'द्वितीयाटौस्स्वेनः' इतीदम एनादेशः । अस्याः पृथिव्याः परः परस्तात् । द्यावापृथिव्योरुपादानमुपलक्षणम् । एतदुपलक्षितत्वात् सर्वस्माद्विकारजातात् परस्ताद् वर्तमानासङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती सम्बभूव । एतच्छब्देनोक्तं सर्वं परामृश्यते । (एतावती ।) एतत्परिमाणमस्याः । 'यत्तदेतेभ्यः परिमाणे' इति वतुप् । 'आ सर्वनाम्नः' इत्यात्वम् । सर्वजगदात्मनाऽहं सम्भूतास्मि । (महिना ।) महच्छब्दादिमनिचि 'टेः' इति टिलोपः, ततः तृतीयायाम्, उदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वम् । छान्दसो मलोपः ॥८॥

Pet .—I blow as the wind blows, taking hold of all worlds : past heaven, past earth : such is my might.

Ren —It is I again who blows like the wind,
Seizing all the existences,
Beyond the sky, beyond the earth below,
Such in greatness have I become.

---

32—X—129

परमेष्ठी नाम प्रजापतिर्ऋषिः। त्रिष्टुप् छन्दः। परमात्मा देवता।

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥१॥

न। असत्। आसीत्। नो इति। सत्। आसीत्। तदानीम्। न।
आसीत्। रजः। नो इति। विऽओम। परः। यत्। किम्। आ।
अवरीवरिति। कुह। कस्य। शर्मन्। अम्भः। किम्।
आसीत्। गहनम्। गभीरम् ॥१॥

*सायणः*—'तपसस्तन्महिनाजायतैकम्' इत्यादिनाग्रे सृष्टिः प्रतिपादयिष्यते। अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तत् असत् शशविषाणवन्निरुपाख्यं न आसीत्। न हि तादृशात् कारणादस्य सतो जगत उत्पत्तिः संभवति। तथा नो सत् नैव सदात्मवत् सत्त्वेन निर्वाच्यम् आसीत्। यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि संभवति। कुतस्तयोः तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। ननु नो सदिति परमार्थेन सत्त्वस्य निषेधः। तर्ह्यात्मनोऽप्यनिर्वाच्यत्वप्रसंगः। अथोच्यते। न। आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायाया एवात्र सत्त्वं निषिध्यत इति। एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात्। अथ व्यावहारिकसत्त्वस्य तदापि व्यावहारिकसत्ता पृथिव्यादीनां भावानां विद्यमानत्वात् कथं नो सदिति निषेधः। तत्राह—"नासीद्रज इत्यादि" अत्र च सामान्यापेक्षमेकवचनम्। व्योम्नो वक्ष्यमाणत्वात् तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः। तथा व्योम अन्तरिक्षं तदपि नो नैवासीत्। पर इति सकारान्तं परस्तादित्यर्थे वर्तते। परशब्दाच्छान्दसोऽस्तातेरर्थेऽसिप्रत्ययः। परः व्योम्नः परस्तादुपरिदेशो द्युलोकप्रभृति सत्यलोकान्तं यत् अस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति किमावरीवरिति। किम् आवरणीयं तत्त्वमावरकभूतजातम् आवरीवः। अत्यन्तमावृणुयात् आवार्याभावात् तदावरकमपि नासीदित्यर्थः। वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत्। यद्वा। किमिति प्रथमैव। किं तत्त्व-

मावरकमावृणुयात्। आव्रियमाणवस्तदपि स्वरूपेण नासीदित्यर्थः। आवृण्वत् तत्तत्त्वं कुह कुत्र देशेऽवस्थायावृणोति। आधारभूतस्तादृशो देशोऽपि नासीदि- दित्यर्थः। किंशब्दात् सप्तम्यर्थे ह्प्रत्ययः 'कु तिहोः' (पा० सू० 7-2-104) इति प्रकृतेः कादेशः। कस्य शर्मन् कस्य वा भोक्तुर्जीवस्य शर्मणि सुखदुःख- साक्षात्कारलक्षणे भोगे निमित्तभूते सति तदावरकमावृणुयात्। जीवानामुप- भोगार्था हि सृष्टिः। तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणं प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात्प्रलीना इति कस्य कश्चिदपि भोक्ता न संभवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपञ्च- वत् भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति। किंशब्दादुत्तरस्य ङसः 'सावेकाचः०' इति प्राप्तस्योदात्तत्वस्य 'न गोश्वन्साववर्ण०' इति प्रतिषेधः। 'सुपां सुलुक्' इति शर्मणः सप्तम्या लुक्। यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्सत्त्वमपि निराकृतं तथापि 'आपो वा इदमग्रे सलिलमासीत्' (तै० सं० 7-1-5-1) इति श्रुत्या कश्चिदपां सद्भावमाशंकेत। तं प्रत्याचष्टे 'अम्भः किमासीत्' इति। गहनं दुष्प्रवेशं गभीरं दुरवस्थानं अत्यगाधम् ईदृशम् अम्भः किमासीत्। तदपि नैवासीदित्यर्थः। श्रुतिस्त्ववान्तरप्रलयविषया ॥१॥

यास्कः—'लोका रजांस्युच्यन्ते'। (नि० 4-19)

Mm. :—Nor aught nor naught existed;  
Yon bright sky was not nor heaven's broad woof out-stretched above.  
What covered all? what sheltered? what concealed?  
Was it the water's fathomless abyss?

Rcn. :—Neither the non-Being then existed, nor the Being.  
The aerial space existed not, nor the firmament beyond.  
What moved itself powerfully? Where? Under whose care?  
Was that water, unfathomably deep?

—

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।  
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥२॥

न। मृत्युः। आसीत्। अमृतम्। न। तर्हि। न। रात्र्याः। अह्नः। आसीत्। प्रऽकेतः। आनीत्। अवातम्। स्वधया। तत्। एकम्। तस्मात्। ह। अन्यत्। न। परः। किम्। चन। आस ॥२॥

*सायणः*—ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यते इत्यत आह न मृत्युरासीत् इति। ननु यदि स नासीत् तर्हि तदभावकृतम् अमृतम् अमरणं प्राणिनामवस्थानं तदानीमपि स्यात् तत्राह। अमृतं न तर्हि इति। तर्हि तस्मिन् प्रतिहारसमये। अयं भावः। सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत् तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि संजिहीर्षा जायते। तथैव सः मृत्युः सर्वं जगत् संहरत इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति। एतदेवाभिप्रेत्य कठैराम्नायते—"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" (क. उ. 2-25) इति। नन्वेतस्य सर्वाधिकरणभूतः कालो विद्यत इत्यत आह न राज्या इति। राज्याः अह्नः च प्रकेतः प्रज्ञानं न आसीत्। तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात्। एतेनाहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। कथं तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः। उपचारादिति ब्रूमः। यथेदानीन्तननिषेधस्य कालोऽवच्छेदकस्तथा मायापि तदवच्छेदहेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्ययः। यद्वादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्यानीदिति। तत् सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वं आनीत् प्राणितवत्। नन्वेवं प्राणनकर्तृजीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः। 'अप्राणो ह्यमनाः शुद्धः' इति तस्य प्राणसंबन्धाभावात् तत्राह आनीदवातमिति। अयमाशयः। आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकालसम्बन्ध इति त्रयोऽर्थाः प्रतीयन्ते। तत्र समुदायो न विधीयते यथाऽऽग्नेयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात्। किं तर्ह्यनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते दध्ना जुहोतीति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानम्, तत्राप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधानुपपत्तिप्रसङ्गात्। अतोऽनेन कर्तृत्वेन इदानीन्तनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति। नन्वीदृशस्य ब्रह्मणो मायया सह सम्बन्धासंभवाद् सांख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति कथं नो सदिति निषेधः। तत्राह स्वधया इति। स्वस्मिन् धीयते ध्रियत आश्रित्य वर्तत इति स्वधा माया। तया सह ब्रह्मैकमविभागापन्नमासीत्। 'सहयुक्तेऽप्रधाने'—(पा. सू. 2-319) इति तृतीया सहशब्दयोगाभावेऽपि सहार्थयोगे भवति। 'वृद्धो यूना' (पा. सू. 1-2-65) इति निपातनाल्लिङ्गात्। अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते। यद्यपि असंगस्य ब्रह्मणस्तया सह सम्बन्धो

न संस्पृशति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव सम्बन्धोऽध्यास्यते यथा शुक्तिकायां रजतस्य। एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम्। ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वात् ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं तस्य सत्त्वमुक्तम् आनीदवातम् इति। ब्रह्मणो वा सत्त्वात् तस्या अपि सत्त्वप्रसङ्ग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः। मैवम्। अत्युक्तिदृष्ट्यैक्यावभासेऽपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम्। ननु दृग्दृश्याविति द्वावेव पदार्थौ आनीदवातं स्वधयेति तौ चेदङ्गीक्रियेते तत्किमपरमवशिष्यते यत् नासीद्रजः इत्यादिना प्रतिषिध्येत तत्राह तस्मादिति। तस्माद् तस्मात्खलु पूर्वोक्तान्मायासहितात् ब्रह्मणः अन्यत् किंचन किमपि वस्तु भूतभौतिकात्मकं जगत् न आस न बभूव। "छन्दस्युभयथा" इति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः। ननु तदानीमन्यस्य सत्त्वनिषेधो न शक्यः। असत्त्वे चाप्रसक्तत्वान्न निषेधोपयोग इत्यत आह पर इति। परः परस्तात् सृष्टेरूर्ध्वं वर्तमानमिदं जगत् तदानीं न बभूवेत्यर्थः। अन्यथा उक्तरीत्या क्वचिदपि निषेधो न स्यादिति भावः ॥२॥

Mm. :—There was not death, hence was there not immortal.
There was no light of night, no light of day.
The only one breathed breathless in itself.
Other than it there nothing since has been.

Ren. :—There existed then neither death, nor non-death;
There existed no distinctive sign for the night or day.
The One breathed of his own impulse, with no breath.
Outside that, nothing else existed.

तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥३॥

तमः। आसीत्। तमसा। गूळ्हम्। अग्रे। अप्रकेतम्। सलिलम्।
सर्वम्। आः। इदम्। तुच्छ्येन। आभु। अपिऽहितम्। यत्।
आसीत्। तपसः। तत्। महिना। अजायत। एकम् ॥३॥

सायणः—ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म। जायमानस्य जननक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्य अवश्यंभावात्

अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते। कथं तस्य जन्म अत आह तमसा गूळ्हमग्रे इति। अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् तमसा गूळ्हम्। यथा नैशं तमः सर्वं पदार्थजातमावृणोति तद्वत्। आत्मतत्त्वस्यावरकत्वात् मायापरसंज्ञं भावाज्ञानरूपमत्र तम इत्युच्यते। तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति। आच्छादकात् तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते। एतेन कारणावस्थायाम् असदेव कार्यमुत्पद्यते इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः। ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते चेत् कथं नासीद्रज इत्यादि निषेधः। तत्राह तम आसीत् इति। तमो भावरूपाज्ञानं मूलकारणम्। तद्रूपता तदात्मनाम्। यतः सर्वं जगत् प्राक् तम आसीत् अतोनिषिध्यत इत्यर्थः। नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वाज्जगत्कर्म। कथं तयोः कर्मकर्त्रोस्तादात्म्यम्। तत्राह अप्रकेतमिति। अप्रकेतम् अप्रज्ञायमानम्। अयमर्थः। यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम्। अत एव मनुना स्मर्यते—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः" (मनु. 1–5) इति। कुतो वा न प्रज्ञायते तत्राह। सलिलम्। 'षल गतौ'। औणादिक इलच्। इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन संगतमविभागापन्नम् आः आसीत्। अस्तेर्लङि तिपि 'बहुलं छन्दसि' इतीडभावे, 'हल्ङ्याब्भ्यः' इति तिलोपे 'तिप्यनस्तेः' (पा. सू. 8–2–73) इति पर्युदासादृकाराभावः। यद्वा सलिलमिति लुप्तोपमम्। सलिलमिव। यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसा विभागापन्न जगन्न शक्यविज्ञानमित्यर्थः। ननु विविधविचित्रभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः। तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते। तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसंभव इत्यत आह तुच्छ्येन इति। आ समन्ताद् भवतीति आभु तुच्छ्येन। छान्दसो यकारोपजनः। तुच्छ्येन तुच्छकल्पनेन सदसद्विलक्षणेन भावरूपाज्ञानेन अपिहितं छादितं आसीत्। दधातेः कर्मणि निष्ठा। दधातेर्हि 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। एकम् एकीभूतं कारणेन तमसा विभागतां प्राप्तमपि तत्कार्यजातं तपसः स्रष्टव्यपर्यालोचनरूपस्य महिना माहात्म्येन अजायत उत्पन्नम्। तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते—"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" (मु. उ. 1–1–9) इति ॥३॥

Mm. —Darkness there was, and all at first was veiled.
In gloom profound, an ocean without light;
The germ that still lay covered in the dusk,
Burst forth, one nature from the fervent heat.

Ren. —At the origin darkness was hidden by darkness.
This universe was only an indistinct (sheet of) water.
Then by the power of Heat the One was born,
Void (principle) covered with vacuity.
(âbhu or potential if read as âbhū).

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥४॥

कामः । तत् । अग्रे । सम् । अवर्तत । अधि । मनसः । रेतः । प्रथमम् ।
यत् । आसीत् । सतः । बन्धुम् । असति । निः । अविन्दन् ।
हृदि । प्रतिऽइष्य । कवयः । मनीषा ॥४॥

सायणः—ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किं निबन्धनमित्यत आह कामस्तदग्र इति। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरमनसि कामः समवर्तत सम्यगजायत। सिसृक्षाऽजायतेत्यर्थः। ईश्वरस्य सिसृक्षा वा किं हेतुकेत्यत आह मनस इति। मनसः अन्तःकरणस्य संबन्धि वासनाशेषेण मायायां विलीनेऽन्तःकरणे समवेतम्। सामान्यापेक्षमेकवचनम्। सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः। एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशं रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमम् अतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत्। भूष्णु वर्धिष्ण्वजायत परिपक्वं सत् फलोन्मुखमासीदित्यर्थः। तत्तो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः। तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति। तथा चाम्नायते—'सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किं च' (तै० आ० 8–6) इति श्रुतिः। आत्मनेत्थमवगमितेऽर्थे विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति सत इति। सतः सत्त्वेन इदानीमनुभूयमानस्य सर्वस्य जगतः बन्धुं बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शिना अतीतानागतवर्तमानाभिज्ञा योगिनः हृदि हृदये

निरुद्धय। मनीषा मनीषया बुद्ध्या, 'सुपां सुलुक्' इति तृतीयाया लुक्। प्रतीष्य विचार्य। 'अन्येषामपि०' इति सांहितिको दीर्घः। असति सद्विलक्षणेऽव्याकृते कारणे निरविन्दन् निष्कृष्यालभन्त। विविच्याजानन्नित्यर्थः ॥४॥

Mm. :—Then first came Love upon it, the new germ
Of mind, ye poets in their hearts discerned
Pondering this bond between created things
And uncreated.

Ren. —The desire was its first development.
(Desire) which has been the first seed of consciousness.
Asking themselves, the Poets were able to discover
By their reflection the bond of the Being with the non-being.

---

तिरश्चीनो विततो रश्मिरेषाम् अधः स्विदासी३दुपरि स्विदासी३त्।
रेतोधा आसन्महिमान आसन् त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥५॥
तिरश्चीनः। विऽततः। रश्मिः। एषाम्। अधः। स्वित्। आसी३त्। उपरि।
स्वित्। आसी३त्। रेतःऽधाः। आसन्। महिमानः। आसन्।
स्वधा। अवस्तात्। प्रऽयतिः परस्तात् ॥५॥

*सायणः*—एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि। अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते। येयं नासदासीदित्यविद्या प्रतिपादिता यश्च कामस्तदग्रे इति कामो मनसो रेतः प्रथमं यदासीदिति यत्कर्म एषाम् अविद्याकामकर्मणां वियदादिभूतजातानि सृजतां रश्मिः रश्मिसदृशो यथा सूर्यरश्मिः उदयानन्तरं निमेषमात्रेण युगपत् सर्वं जगत् व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गः विततः विस्तृतः आसीत्। स्विदासीत् इति वक्ष्यमाणमत्रापि संबध्यते। 'विचार्यमाणानाम्' (पा. सू. 8-2-97) इति प्लुतः। तत्रोदात्तइत्यनुवृत्तेः स चोदात्तः। स्वित् इति वितर्के। सः कार्यवर्गः प्रथमतः किं तिरश्चीनः तिर्यगवस्थितो मध्ये स्थित आसीत् कि वा अधः अवस्तात् आसीत्। आहोस्वित् उपरि उपरिष्टात् किमासीत्। 'उपरि स्विदासीदिति' (पा. सू. 8-2-102) इत्यनुदात्तः प्लुतः। 'आत्मनः आकाशः संभूत आकाशाद्वायुर्वायोरग्निः' (तै. आ. 8-1) इत्यादिकया पञ्चमी श्रुत्या तत उद्गातारं ततो होतारमितिवत् क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्गस्य शीघ्रव्यापनेन

तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते। एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते। सृष्टेषु कार्येषु मध्ये केचिद् भावाः रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्त्तारो भोक्तारश्च जीवाः आसन् अन्ये भावाः महिमानः। स्वार्थिक इमनिच्। महान्तो वियदादयो भोग्याः आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत्सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः। अयमेवार्थस्तैत्तिरीयके—'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. आ. 8–6) इत्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा। अन्ननामैतत्। भोग्यप्रपञ्चः अवस्तात् अवरो निकृष्ट आसीत्। प्रयतिः प्रयतिता भोक्ता परस्तात् पर उत्कृष्ट आसीत्। भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवानित्यर्थः। 'विभाषा परावराभ्याम्' (पा. सू. 5–3–29) इति प्रथमार्थे अस्तातिः। 'अस्ताति च' (पा. सू. 5–3–40) इत्यवरशब्दस्यावादेशः। अवस्तादिति संहितायाम् ईषा अक्षादित्वात् प्रकृतिभावः ॥५॥

Ren.:—Their cord was stretched transversally.
What was there below ? What was above ?
There were the donors of seed, there were powers.
The spontaneous impulse was below, the Gift of self was above.

---

को अद्धा वेद क इह प्र वोचत् कुत आजाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥६॥

कः। अद्धा। वेद। कः। इह। प्र। वोचत्। कुतः। आऽजाता। कुतः। इयम्। विऽसृष्टिः। अर्वाक्। देवाः। अस्य। विऽसर्जनेन। अथ। कः। वेद। यतः। आऽबभूव ॥६॥

सायणः—एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता। 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद' (श० ब्रा० 1–4–213) इतिवत्। अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह को अद्धेति। कः पुरुषः अद्धा पारमार्थ्येन वेद जानाति। कः वा इह अस्मिँल्लोके प्रवोचत् प्रब्रूयात्। इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात्। कुतः कस्माच्च निमित्तकारणात् आजाता समन्ताज्जाता प्रादुर्भूता। एतदुभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुया-

दित्यर्थः। ननु देवाः अजानन्तः। सर्वज्ञास्ते ज्ञास्यन्ति वक्तुं शक्नुवन्तीत्यत्र आह—अर्वागिति। देवाः च अस्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं यद् भौतिकं सर्जनं सृष्टिस्तेन अर्वाक् अर्वाचीनाः कृताः। मूलसृष्टेः पश्चाज्जाता इत्यर्थः। तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः। अजानन्तो वा कथं प्रब्रूयुः। उक्तं दुर्विज्ञानत्वं निगमयति। अथ एवं सति देवा अपि न जानन्ति किल। तद्व्यतिरिक्तः कः नाम मनुष्यादिः वेद तज्जगत्कारणं जानाति यतः कारणात् कृत्स्नं जगत् आ बभूव अजायत ॥६॥

Mm :—Who knows the secret ? who proclaimed it here ?
Whence, whence this manifold creation sprang ?
The gods themselves came later into being,
Who knows from whence this great creation sprang ?

Ren.:—Who knows, in sooth, who could here proclaim
From where is born, from where comes this secondary creation.
The gods (are born) afterwards, by the secondary creation of our (world).
But who knows from where has this itself originated ?

---

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ॥७॥

इयम्। विऽसृष्टिः। यतः। आऽबभूव। यदि। वा। दधे। यदि।
वा। न। यः। अस्य। अधिऽअक्षः। परमे। विऽओमन्।
सः। अङ्ग। वेद। यदि। वा। न। वेद ॥७॥

*सायणः*—उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानं एवं सृष्टं तज्जगत् दुर्धरमपीत्याह इयमिति। यतः उपादानभूतात् परमात्मनः इयं विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः आबभूव आजाता, सोऽपि किल यदि वा दधे धारयति। यदि वा न धारयति एवं च को नाम अन्यो धर्तुं शक्नुयात्। यदि धारयेदीश्वर एव धारयेन्नान्य इति। एतेन कार्यस्य धारयितृप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तं भवति। तथा च पारमार्षसूत्रम्, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्" (वे० सू०, i–4–23)। यद्वा अनेनार्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव द्रढयति। को वेदेत्यनुवर्तते। इदं विविधा सृष्टिः यत आबभूव इति को वेद। न कोऽपि। नास्त्येव जगतो जन्म न कदाचिदनीदृशं जगदिति वहवो

भ्रान्ता भवन्त्यपि। यतः। "जनिकर्तुः प्रकृतिः" (पा०, i-4-30) इत्यपादान-संज्ञायां पञ्चम्यास्तसिल्। यस्मात्परमात्मनः उपादानभूतादावभूव तं परमात्मानं को वेद। न कोऽपि। प्रकृतितः परमाणुभ्योऽपि वा जगज्जन्मेति बहवो भ्रान्ताः। तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदधे इदं जगत् ससर्ज यदि वा न ससर्ज। असंदिग्धे संदिग्धवचनमेतच्छा-स्त्राणि चेत्प्रमाणं स्युरिति यथा। स एव विदधे। तं को वेद। अजानन्तोऽपि बहवो जडान् प्रधानान् अकर्तृकमेवेदं जगत् स्वयमजायतेति विपरीतं प्रतिपन्ना विदधतो विधानमजानन्तोऽपि। स एव उपादानभूत इत्यपि को वेद। न कोऽपि उपादानादन्यस्तटस्थ एवेश्वरो विदधे इति हि बहवः प्रतिपन्नाः। देवा अपि यन्न जानन्ति तदर्वाचीनानामेषां तत्परिज्ञाने कैव कथेति। यद्येवं जगत्सृष्टिरत्यन्तदुःखबोधा न तर्हि सा प्रमाणपद्धतिमध्यारत इत्याशङ्क्य तत्सद्भाव ईश्वरमेव प्रमाणयति यो अस्येति। अस्य भूतभौतिकात्मकस्य जगतः यः अध्यक्ष ईश्वरः परमे उत्कृष्टे सत्यभूते व्योमन् व्योमन्याकाशे आकाशवन्निर्मले स्वप्रकाशे। यद्वा अवतेस्तर्पणार्थात् "अन्येभ्योऽपि दृश्यन्ते" इति मनिन्। "नेड्वशि कृति" इतीट्प्रतिषेधः। "ज्वरत्वर" इत्यादिना वकारोपधयोः ऊट्। सप्तम्या लुक्। "न ङिसंबुद्ध्योः" इति नलोपप्रतिषेधः। व्योमनि विशेषेण तृप्ते। निरतिशयानन्दस्वरूप इत्यर्थः। यद्वा। अवतिर्गत्यर्थः। व्योमनि विशेषेण गते व्याप्ते। देशकालवस्तुभिरपरिच्छिन्न इति। अथवा। अवतिर्ज्ञानार्थः। व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि। ईदृशे स्वात्मनि प्रतिष्ठितः। श्रूयते हि सनत्कुमारनारदसंवादे "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" (छा० उप०, vii-24-1) इति ईदृशो यः परमेश्वरः सो अङ्ग। अङ्गेति प्रसिद्धौ। सोऽपि नाम वेद जानाति। यदि वा न वेद न जानाति। को नाम अन्यो जानीयात्। सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इति ॥७॥

Mm.:—He from whom all this great creation came,
Whether his will created or was mute,
The most high Seer that is in highest heaven,
He knows it-or perchance e'en He knows not.

Ren. :—From where has come this secondary creation,
If it has been or not the object of an institution,
The One who surveys this (world) in the highest firmament,
Alone knows,—unless (it be that) he also does not know ?

—

## 33—X—135

यमगोत्रः कुमार ऋषिः । अनुष्टुप् छन्दः । यमो देवता ।

यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः ।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥१॥

यस्मिन् । वृक्षे । सुऽपलाशे । देवैः । सम्ऽपिबते । यमः ।
अत्र । नः । विश्पतिः । पिता । पुराणान् । अनु । वेनति ॥१॥

*सायणः*—वृक्षे । लुप्तोपममेतत् । वृक्षवत् सुपलाशे शोभनपलाशोपेते शोभनोद्यानसहिते । यद्वा । शोभनपर्णोपेते वृक्षे । तादृशस्य वृक्षस्य मूलं यथौष्ण्यजनितश्रमापनोदनेन सुखकरं भवति तद्वत् सुखकरे यस्मिन् स्थाने देवैः परिजनभूतैः यमः नियन्ता वैवस्वतः संपिबते सह भुङ्क्ते । पिबतीत्यर्थः । विश्पतिः विशां प्रजानामधिपतिः पिता नः । व्यत्ययेन बहुवचनम् । मम नचिकेतसो जनको वाजश्रवसः अत्र अस्मिन् स्थाने पुराणान् पुरातनान् अत्र चिरकालं निवसतः पितॄन् अनु तेषां पश्चात् तत्समीपे निवसत्वयमिति वेनति मां कामयते । नचिकेता नाम कुमारो वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाजगाम । अयमर्थ इदमादिकैर्मन्त्रैः प्रतिपाद्यते । यद्वा । कुमारो नाम नचिकेतसोऽन्यः कश्चिदृषिः । यच्छतीति यम आदित्यः । तमनेन सूक्तेन तुष्टाव । सुपलाशे वृक्ष इव यस्मिन् शोभने स्थाने यम आदित्यो देवैः । दीव्यन्तीति देवा रश्मयः । तैः संपिबते संगच्छते । उपसर्गवशात् पिबतिरत्र गत्यर्थः । व्यत्ययेनात्मनेपदम् । अत्र अस्मिन् स्थाने स्थितो विश्पतिर्विशां प्रजानां प्रकाशनप्रवर्षणादिना पालयिता प्राणात्मना सर्वेषां जनकः सः आदित्यः पुराणांश्चिरन्तनान् स्तोतॄन् नोऽस्मानपि वेनति अनुग्राह्यत्वेन कामयते । यद्वा । अत्रस्थाने स्थितवान् नोऽस्माकं पुराणान् पूर्वपुरुषाननु वेनति अनुक्रमेण कामयते ॥१॥

Ren :—Under a tree with pretty foliage,
Where Yama drinks along with the gods,
There the chief of the clan, our father,
Turns himself in thought towards the ancients.

---

पुराणाँ अनुवेनन्तं चरन्तं पापयामुया ।
असूयन्नभ्यचाकशं तस्मा अस्पृहयं पुनः ॥२॥

पुराणान् । अनुऽवेनन्तम् । चरन्तम् । पापया । अमुया ।
असूयन् । अभि । अचाकशम् । तस्मै । अस्पृहयम् । पुनरिति ॥२॥

सायणः—पुराणान् पुरातनान् पितृन् अनुवेनन्तं मामनुगतं कामयमानं अमुया अनया पापया निकृष्टया बुद्ध्या सह चरन्तं वर्तमानं पितरं वाजश्रवसं असूयन् सुखेन जीवन्तं मां मृत्युसमीपं प्रेहीत्युक्तवानिति मानसेनोपतापेन युक्तः सन् प्रथमम् अभ्यचाकशम् । अयं पश्यतिकर्मा । अभ्यपश्यम् । 'असुन् मानस उपतापे' कण्ड्वादिः । पुनः पश्चात् अस्पृहयं पितुराज्ञया तं मृत्युं प्राप्तुमैच्छम् । 'स्पृह ईप्सायाम्' । चुरादिरदन्तः । 'स्पृहेरीप्सितः' (पा० सू० 1–4–36) इति । संप्रदानसंज्ञायां तच्छब्दाच्चतुर्थी । यद्वा । पुराणान् । चिरंतनान् स्तोतृन् पूर्वपुरुषान् पितृन् वा अनुवेनन्तमनुक्रमेण कामयमानं चरन्तं उदयास्तमयाभ्यां दिवि परिवर्तमानमनया पापया निकृष्टया स्तोतुमसमर्थया बुद्ध्या असूयन् । गुणेषु दोषाविष्करणमसूया । परकीयगुणेषु दोषानाविष्कुर्वन्नभ्यचाकशम् । अयमपि कश्चिदिति सामान्यरूपेणाभ्यपश्यम् । इदानीं तु पुनस्तस्यादित्यस्य माहात्म्यं जानन् तस्मा अस्पृहयम् । तमेवादित्यं स्तुतिभिः परिचरणात्मकैः कर्मभिश्च प्राप्तुमैच्छम् ॥२॥

Ren. :—I have looked at him with envy,
As he turned himself in thought towards the ancients,
Walking the rough route.
I wished to see him again.

---

यं कुमार नवं रथम् अचक्रं मनसाकृणोः ।
एकेषं विश्वतः प्राञ्चम् अपश्यन्नधि तिष्ठसि ॥३॥

यम् । कुमार । नवम् । रथम् । अचक्रम् । मनसा । अकृणोः ।
एकऽईषम् । विश्वतः । प्राञ्चम् । अपश्यन् । अधि । तिष्ठसि ॥३॥

सायणः—नचिकेतःसंज्ञं कुमारं यमोऽनयोत्तरया च प्रलोभयति । हे कुमार नवम् अभिनवमितः पूर्वमदृष्टम् । अभिनवत्वमेव व्यनक्ति । अचक्रं चक्ररहितं तम् एकेषम् एकेषा यस्य तादृशं तथापि विश्वतः सर्वतः प्राञ्चं प्रकर्षेणाञ्चन्तं गच्छन्तं यं रथं मनसाकृणोः मत्समीपं प्रतिगमनाय अध्यवसायात्मकमीदृशं यं रथमकरोः कृत्वा च अपश्यन् कर्तव्याकर्तव्यविभागमजानन् अधि तिष्ठसि रथमारोहसि । यद्वा । स्तोतारं कुमाराख्यमृषिमादित्यः

प्रत्यक्षः सन् देहात्मनोर्विवेकं बोधयति। हे कुमार ऋषे चक्ररहितम् एकेषम्। एकः प्राण ईषास्थानीयो यस्य। ईदृशमभिनवं सर्वतो गच्छन्तं शरीरात्मकं यं रथं मनसान्तःकरणेन आकृणोः अकरोः। संकल्पात्मकेन मनसा हि कामो जायते। सत्यां हि कामनायां पुण्यपापात्मकं कर्म क्रियते। तेन च भोगप्रदानायेदं शरीरमारभ्यत इति परंपरया मनसः शरीरनिष्पादकत्वम्। तं शरीरात्मकं रथमपश्यन्न जानन्। 'लक्षणहेत्वो.' (पा. सू. 3-2-126) इति हेतौ शतृप्रत्ययः। मत्स्वरूपापरिज्ञानाद्धेतोरधितिष्ठसि। भोगायतनत्वेन स्वीकरोषि ॥३॥

Ren :—O boy, the new chariot
That you have made in imagination, (the chariot)
Without wheels, with only one shaft and facing in all directions,
You have mounted it without seeing him.

---

यं कु॒मा॒र॒ प्राव॑र्तयो॒ रथं॒ विप्रे॑भ्य॒स्परि॑।
तं सामानु॒ प्राव॑र्त॒त॒ समि॒तो ना॒व्याहि॑तम् ॥४॥

यम्। कु॒मा॒र॒। प्र। अव॑र्तयः। रथ॑म्। विप्रे॑भ्यः। परि॑।
तम्। साम॑। अनु॑। प्र। अ॒व॒र्त॒त॒। सम्। इ॒तः। ना॒वि। आऽहि॑तम् ॥४॥

*सायणः*—हे कुमार नचिकेतः यं पूर्वोक्तमधिष्ठितं रथं प्रावर्तयः मत्समीपं प्रत्यागमयः विप्रेभ्यः मेधाविभ्यः परि उपरि भूलोके वर्तमानानां मेधाविनां वान्धवानामुपरिष्टात्। अन्तरिक्ष इत्यर्थः। 'पञ्चम्या. परावध्यर्थे' इति विसर्जनीयस्य सत्त्वम्। तं रथं साम पित्रा कृतं सान्त्वनं यमसमीपं गत्वा एवमेव त्वया वक्तव्यमिति प्रत्यागमनकारणमुपायोपदेशनम्। अनु प्रावर्तत। इतः अस्माल्लोकादन्वगच्छत्। कथंभूतम्। नावि नौवत्तरणसाधनायां बुद्धौ सम् आहितं सम्यग् धृतम्। यद्वा। हे कुमार ऋषे यं शरीरात्मकं रथमधिष्ठितं प्रावर्तयः संसारे प्रवर्तितवानसि मेधाविनां मध्ये तं रथमनु साम। उपलक्षणमेतत्। ऋक्सामादि साध्यं स्तोत्रं नावि नौवत्तारयित्र्यां वाचि वेदात्मिकायां समाहितं सम्यक् प्रतिपाद्यत्वेन हितं कर्म च इतः अस्माल्लोकात् प्रावर्तत प्रवृत्तमभूत्। इत्थमात्मस्वरूपापरिज्ञानेन शरीरबन्धनं तेन कर्तव्यं व्यवहारजातं चोक्तम्। अथ तु सत्यज्ञानादिस्वरूपमकर्तारं परमात्मानं यदि स्वात्मतया साक्षात्करोति तदोक्तं न संभवतीत्यभिप्रायः ॥४॥

Ren. :—O boy, the chariot that you have set rolling
Before the experts of eloquence,—
The chant has rolled behind,
Placed from right here on the vessel.

---

कः कुमारमजनयद् रथं को निरवर्तयत् ।
कः स्वित्तदद्य नो ब्रूयाद् अनुदेयी यथाभवत् ॥५॥

कः । कुमारम् । अजनयत् । रथम् । कः । निः । अवर्तयत् ।
कः । स्वित् । तत् । अद्य । नः । ब्रूयात् । अनुऽदेयी । यथा । अभवत् ॥५॥

*सायणः*—कः पुरुषः इमं कुमारमजनयत् । अधिक्षेपे किंशब्दः । ईदृशं बालं यमसमीपं प्रहिण्वन् कथं पिता समीचीनः स्यात् । तत्तावदास्ताम् । कः वा पुरुषोऽस्य बालस्य यमसमीपं प्रतिगमनाय तं रथं निरवर्तयत् निवर्तितवान् । सोऽपि मूर्ख इत्यर्थः । यथा येन प्रकारेणायं कुमारः अनुदेयी अनुदातव्यः अभवत् भवति तत् तदनुगुणं वचनमुपायकथनम् अद्य अस्मिन् काले नः अस्माकं कः स्वित् को नाम ब्रूयात् अभिदध्यात् । प्रथमं यमसमीपं गत्वा पश्चात् ततो निर्गमनोपायं ब्रुवन्नपि न प्राज्ञ इत्यर्थः । अथवा । कुमाराख्य ऋषिरात्मनः सार्वात्म्यमवगच्छन् स्वव्यतिरिक्तस्यान्यस्यासंभवं किंशब्देनाक्षेपवाचिना दर्शयति । कुमारं मां कः पिताजनयत् । न कोऽपि । 'अजो नित्यः शाश्वत.' (क० उ० 2-18) इति श्रुत्युक्तरूपोऽहं भवामि । कश्च शरीरात्मकं रथं निरवर्तयत् निर्वर्तयति । मद्व्यतिरिक्तस्य निर्वर्तयितुरभावात् तथा निर्वर्त्यस्यान्यस्यासंभवाच्च । अद्य अस्मिन् काले सार्वात्म्यानुभवदशायां तं तं प्रकारं क. स्वित् को नाम नोऽस्माकं ब्रूयात् येन प्रकारेण अनुदेयी अनुदातव्या मद्व्यतिरिक्तान्यपदार्थसत्ता अभवत् भवति । स प्रकारोऽपि दुर्वचन इत्यर्थः ॥५॥

Ren. .—Who has begotten the child ?
Who has made the chariot ?
Who can tell us today
What was its cargo like ?

---

यथाभवदनुदेयी ततो अग्रमजायत।
पुरस्ताद्बुध्न आततः पश्चान्निरयणं कृतम्॥६॥

यथा। अभवत्। अनुऽदेयी। ततः। अग्रम्। अजायत।
पुरस्तात्। बुध्नः। आऽततः। पश्चात्। निःऽअयनम्। कृतम्॥६॥

*सायणः*—अनुदेयी अनुदातव्यः यथा येन प्रकारेण पितरमनुलक्ष्य अयं कुमारो यमेन दत्तः अभवत् भवति तथा ततः तस्मात् वाजश्रवसात् पितुः अग्रं यमसमीपं गच्छेति वचनस्याग्रतो वर्तमानं नचिकेतसा, यमेन सह वदितव्यं 'तं वै प्रवसन्तं गन्तासीति होवाच'( तैब्रा० 3–11–8–2) इत्यादिकं ब्राह्मणान्तरोक्तं अजायत प्रादुरभवत्। पितोपदिष्टवानित्यर्थः। पुरस्तात् ततः पूर्वं बुध्नः उक्तस्याग्रस्य मूलभूतं यमस्य गृहं प्रतिगच्छ इति वचनम् आततः अतिविस्तृतमासीत्। अतः तदशक्यपरिहारमिति पश्चात् क्रोधं परित्यज्य निरयणं तस्माद्यमान्निर्गमनोपायं कृतं पित्राचरितम्। यद्वा। अनुदेयी आत्मानमनु दातव्यात्मस्वरूपव्यतिरिक्तान्यपदार्थसत्ता यथाभवत् भवति तदनुगुणं ततस्तस्मान्मायाविष्टादात्मनोऽग्रं स्रष्टव्यस्य विकारजातस्याद्यं महत्तत्त्वं सिसृक्षाकारणमजायत उदपद्यत। पुरस्तात्सृष्टेः प्रागवस्थायां बुध्नो मूलमव्याकृतं मायात्मकं कारणमेवाततः। आ समन्तात् ततं विस्तृतमासीत्। पश्चात्तमस उत्पत्त्यनन्तरं निरयणं तद्गतानां कार्याणां तस्मात् कारणान्निर्गमनं घटपटादिभेदेन स्वरूपालम्भनं कृतम्। ब्रह्मणा निर्मितम्। तथा मृद्विकारो घटादिर्मृदोऽन्यो न भवति। आदित्यानुग्रहात् ब्रह्मभावं प्राप्तस्य मम विकारः प्रपञ्चो मदन्यो न भवति इति व्यतिरिक्तस्य पित्रादेराक्षेपः पूर्वोक्तः समर्थितः॥६॥

Ren.:—What was its cargo like ?
From where is born the origin (of things).
One stretches firstly the base,
Then one fashions the orifice.

---

इदं यमस्य सादनं देवमानं यदुच्यते।
इयमस्य धम्यते नाळीरयं गीर्भिः परिष्कृतः॥७॥

इदम्। यमस्य। सदनम्। देवऽमानम्। यत्। उच्यते।
इयम्। अस्य। धम्यते। नाळीः। अयम्। गीःऽभिः। परिऽकृतः॥७॥

*सायण:*—इदं यमस्य नियन्तुरादित्यस्य वैवस्वतस्य वा सदनं स्थानम्। छान्दसः सांहितिको दीर्घः। यत् सदनं देवमानं देवैर्निर्मितमिति उच्यते सर्वत्र अभिधीयते। यद्वा। देवानां रश्मीनां निर्माणसाधनमिति गीयते। अस्य यमस्य प्रीणनाय इयं नाळीः वाद्यविशेषो वेणुः धम्यते वाद्यते। यद्वा। नाळीति वाङ्नाम। इयं स्तुतिरूपा वागस्य प्रीणनाय धम्यते उच्चार्यते। एवं सति अयं यमः गीर्भिः स्तुतिभिः परिष्कृतः अलंकृतोऽभूत्। 'संपर्युपेभ्यः०' इति सुडागमः। 'परिनिविभ्यः०' इति षत्वम्। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥७॥

Ren. :—Here is the sojourn of Yama,
What is named the house of the gods.
One breathes in the flute of (Yama),
One adorns this (god) with songs of praise.

# १, १-१, अग्नि

वैदिक आर्यं के लिये इन्द्र के बाद अग्नि का ही स्थान था। ऋक्संहिता में २०० सूक्त अग्नि के स्तवन में रचे गये हैं। प्रत्येक मण्डल में अग्नि के सूक्तों का इन्द्र के सूक्तों के पहले आना अग्नि के माहात्म्य की पुष्टि करता है। इन्द्र को इसका जुड़वां भाई समझा जाता है, कारण कि अग्नि (आग) और इन्द्र (पानी) जीवन की दो मूलभूत आवश्यकताएँ हैं।

ऋग्वेद में अग्नि के त्रिविध जन्म का उल्लेख आता है। प्रथम जन्म यज्ञ कर्म की दो अरणियों से होता है। अग्नि अपने माता-पिता रूपी इन अरणियों से उत्पन्न होते ही इन्हें निगल जाता है। इसकी दस कुमारी जननियां हाथ की दस अंगुलियों की प्रतीक हैं। अरणियों के संघर्षण में बल की आवश्यकता के कारण उसे 'ऊर्जो नपात्' (शक्तिपुत्र) कहा गया है। 'सह जायसे मथ्यमानः सहो महत्। त्वामाहुः सहसस्पुत्रमङ्गिरः'। प्रतिदिन उत्पन्न होने से अग्नि 'युवा' और 'प्रथमो यज्ञियानाम्' होने से पुरातनतम भी हैं। द्वितीय जन्म जल से होता है। अतः 'अपां नपात्' की संज्ञा से इसकी पृथक् सत्ता मानी गई है। इस रूप में 'अपां नपात्' स्वामी और दाता है। मेघ इसका द्युःस्थानीय धाम है। अपां नपात् का भौतिक आधार विद्युत् नहीं अपितु अग्नि है जो वायु स्थानीय जलों में निवास करता है। तृतीय जन्म द्युलोक में होता है। 'सः जायमानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने' (१, १४३,२)। पृथ्वी पर इसे मातरिश्वा लाया। यह देवों की मानवों को भेंट है। मातरिश्वा ग्रीक पौराणिक पात्र प्रोमीथियस् की समानता करता है, जो देवों के यहां से अग्नि को चुरा कर मनुष्यों के पास लाया था। मातरिश्वा एवं अग्नि एक नही हैं किन्तु इनका परस्पर कारण कार्य सम्बन्ध है। द्युलोक की अग्नि का ही रूप सूर्य है। अग्नि के तीन जन्म, तीन सिर, तीन शरीर एव तीन स्थान हैं। अतः यह भारतीय "त्रयी" का प्राचीनतम रूप है।

ब्रह्माण्ड के द्युलोक एवं पृथिवी यह द्विविध विभाग करने पर अग्नि को कभी-कभी "द्विजन्मा" कहा गया है। अनेक घरों में जन्म लेने के कारण उसे 'पुरुभूत' कहते हैं।

इसका रूप उज्ज्वल है और इसकी उज्ज्वलता पर अधिक जोर दिया गया है। सूर्य की किरणों, उषा और मेघों की विद्युत् से इसकी तुलना की गई है। यह अन्धकार का अपहारक और रात दिन का प्रकाशक

है। लेकिन अग्नि जब वनों पर आक्रमण करता है और पृथिवी को एक नापित की भाँति साफ़ करता है तब इसका पथ अन्धकारपूर्ण होता है। इसका धूम आकाश की ओर उड़ता है अतः यह धूम्रकेतु है। 'धूमस्ते केतुरभवद्दिविश्रितः' (5-11-3)। सर्वज्ञता के कारण यह 'जातवेदा' भी है। जन्म से अग्नि अभिजात है। यह रक्षक एवं दानी भी है। यह अपने स्तोता को सारी वस्तुओं विशेषतया गार्हस्थ्य के आनन्द, सन्तति एवं अभ्युदय से युक्त करता है। दंसना अग्नि के लिये वैसी ही है जैसे माया इन्द्र के लिये।

दो अरुण और पिंगल अश्व इसके उज्ज्वल रथ को खींचते हैं और देवों को यज्ञ भूमि पर ले आते हैं। यह रथ इसकी पदवी के अनुरूप ही है। प्रायः उत्पत्ति के समय इसे वत्स कहा गया है। कहीं-कहीं इसे 'द्विज' की संज्ञा दी गई है। काष्ठ एवं घृत इसके खाद्य पदार्थ हैं। घृत (एवं यदा कदा सोम भी) इसका पेय है। यह एक दिन में तीन बार खाता है। यह देवों के मुख का कार्य करता है।

यह मानवों का 'सखा' एवं 'अतिथि' है। 'गृहपति' के रूप में इसका आदर होता है। यह मानवों और देवों के बीच दूत का कार्य करता है। 'देववाहन' इसका विशेषण है, क्योंकि यह देवों को यज्ञभूमि पर ले आता है। 'ऋतस्य पूर्व्यम्' (१,१४३,७) तथा यज्ञस्य केतुं प्रथमं पुरोहितम् (५,११,२)

अग्नि पूजा एक भारोपीय परम्परा है क्योंकि इतालियन, ग्रीक एवं भारतीय इसकी पूजा करते थे और देवों के लिए इसे ही भेंट देते थे। व्युत्पत्ति की दृष्टि से 'अग्नि' शब्द का मूल 'अज्' में है। यह शब्द भारोपीय कालीन है। लैटिन में ignis, स्लाव का ogni, प्रा. लिथुआनियन का ungnis आदि समानार्थक है।

## अनुवाद

१. मैं उस अग्नि का स्तवन करता हूँ जो पुरोहित, यज्ञ का दैवी ऋत्विज्, (देवताओं का) आह्वान करने वाला तथा सम्पत्ति का सर्वश्रेष्ठ दाता है।

२. अग्नि, जो पुरातन और नूतन ऋषियों द्वारा पूजने योग्य है, वह देवताओं को यहां ले आए।

३. अग्नि द्वारा वह (यजमान) प्रतिदिन यशस्वी तथा अविकलतम वीरों वाले धन (तथा) समृद्धि को प्राप्त करे।

४. हे अग्नि, जिस उपासना तथा यज्ञ को (तुम) सब ओर से घेरे हुए हो, वह देवताओं को ही जाता है।

५. (देवताओं का) आह्वान करने वाला, सुप्रतिभाशाली, उज्ज्वल यश वाला अग्नि देवता देवताओं के साथ (इधर) आए।

६. हे अग्नि, पूजक का तुम जो भी भला करोगे, हे अङ्गिरः, तुम्हारा वह (मन्तव्य) वस्तुतः सत्य ही होता है।

७. हे अन्धकार को आलोकित करने वाले अग्नि, हम विचार पूर्वक श्रद्धाञ्जलि सहित प्रतिदिन तुम्हारे पास आते हैं।

८. यज्ञ के शासक, ऋत (प्रकृति के विधान) के देदीप्यमान रक्षक, अपने ही गृह में बढने वाले (हे अग्नि, हम तुम्हारे पास आते हैं।)

९. हे अग्नि, तुम हमारे लिये सुप्राप्य बनो, जैसे एक पिता अपने पुत्र के लिए (होता है) तथा हमारे कल्याण के लिए हमारे साथ रहो।

---

## २, १-३५, सविता

सविता का सूर्य के साथ बहुत निकट सम्बन्ध होने के कारण कई बार ये दोनों एक ही देवता के रूप में सम्बोधित किये गये हैं। एक ही सूक्त मे सौर देवता का सविता अथवा सूर्य नाम से आह्वान किया गया है। परन्तु सविता का सूर्य से भेद भी माना गया है। उदाहरणतया जब यह कहा जाता है कि सविता सूर्य की किरणों द्वारा प्रकाशित होता है अथवा सूर्य को प्रेरित करता है।

अपनी स्वर्णमय भुजाओं सहित आकाश में उदित होकर वह सब जीवों को गतिमान करता है। इसी भांति रात्रि को लाकर वह विश्राम भी प्रदान करता है (अरीरमदतमानं चिदेतोः। अनुव्रतं सवितुर्मोक्यागात्। २.३८.३) अतः यह दिवस तथा रात्रि का भी देवता है। रात्रि का देवता होने के कारण उससे दुःस्वप्नों को दूर रखने के लिए प्रार्थना की जाती है। जिस भाति उषा उदित और अस्त होते सूर्य की कीर्ति है, उसी प्रकार सविता उदित और अस्त सूर्य की प्रेरक शक्ति है।

स्वर्णिम अश्वों द्वारा चालित अपने स्वर्णिम रथ में सवार सविता आकाश रूपी मार्ग पर चलता है। वह मुख्यतः स्वर्णिम देवता है, क्योंकि उसकी सब वस्तुएँ स्वर्णमय हैं। वह दुर्भाग्य, अपकार तथा अन्धकार को दूर हटाता है। वह दानवों का अपहारक और मानवों को शारीरिक तथा आत्मिक शान्ति प्रदान करता है। उसके स्वभाव तथा कार्यों में नैतिक विशिष्टता भी पाई जाती है। वह पापों का शोधक है। सम्भवतः यह उपाधि बाद में वरुण से ली गई है। सविता मानवों की पृथ्वी पर भी

रक्षा करता है और फिर परलोक में जाने पर भी उनके कुशल-क्षेम का ध्यान रखता है। मृत्यु के पश्चात् वह उन्हें परम सुख के स्थान की ओर ले जाता है। देवताओं का अमृतत्व भी सविता की ही देन है।

कई स्थानों पर सविता का मानवीकरण सूर्य से भी अधिक है। सूर्य केवल सौर देवता है और प्रकाश का प्रतिनिधि है। वैदिक साहित्य में वह एक प्रकाशमान, तेजोमय युवा तथा रथ चलाने वाला योद्धा है। परन्तु सविता एक दैवी शक्ति है जो सूर्य का मार्ग दर्शन करती है तथा उसकी प्रेरक शक्ति है। स्वाभाविक ही है कि समान होने के कारण कई पौराणिक कथाओं में इनको एकरूप माना गया है। इसके पश्चात् सविता ने विश्व की शारीरिक, मानसिक, नैतिक, प्रेरक तथा उत्तेजक शक्ति का रूप धारण कर लिया। इसी कारण से हिन्दुओं के धार्मिक जीवन में इस देवता का अत्यधिक महत्त्वपूर्ण स्थान है और उसकी प्रार्थना "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात, ३.६२.१०", अभी तक गृहस्थ इन शब्दों में करते है। भारोपीय पुराण-शास्त्र में सविता के नाम का समरूप कोई देवता नहीं मिलता। रोम के पुराण-शास्त्र में Sanus देवता का भी शायद यही स्थान था और उसके कार्य भी सविता के समान थे।

व्युत्पत्ति की दृष्टि से सविता की निष्पत्ति √सू धातु से होती है जिसका अर्थ है प्रेरित करना, स्फूर्ति देना। इस प्रकार सविता प्रेरक देवता है।

## अनुवाद

१. मैं कल्याण के लिए अग्नि का आह्वान करता हूँ; मैं मित्र तथा वरुण को सहायता के लिए यहाँ बुलाता हूँ; मैं विश्व को विश्राम देने वाली रात्रि को बुलाता हू, मैं सविता देवता को सहायता के लिए पुकारता हूँ।

२. अन्धेरे में नभोमण्डल से इधर आता हुआ, अनश्वर तथा नश्वर को विश्रान्त करता हुआ, (समस्त) प्राणियों को देखता हुआ सविता अपने स्वर्णिम रथ पर इधर आता है।

३. (सविता) देवता नीचे के तथा ऊपर के मार्ग से जाता है; वह अर्चनीय देवता अपने दो उज्ज्वल अश्वों से (खींचा हुआ) जाता है। कठिनाइयों को दूर करता हुआ सविता देवता दूर से आता है।

४. अर्चनीय, उज्ज्वल दीप्तिमान सविता अन्धकारमय-लोकों और

अपनी शक्ति को धारण करता हुआ मुक्ताओं से मण्डित, विश्वरूप तथा कीलिकाओं से युक्त अपने रथ पर आरूढ़ हो गया है।

५. स्वर्ण के बल्ले से युक्त उसके रथ को खींचने वाले उसके श्वेत पैरों वाले काले घोड़ों ने लोगों का निरीक्षण कर लिया है। सारी प्रजा तथा (सारे) जीवों ने दिव्य-सविता की गोद में सदा के लिए विश्राम पाया है।

६. तीन स्वर्ग हैं, सविता की दो क्रोड़ (हैं)। एक, जो मानवों को अभिभूत करने वाली है वह यम के आवास में (है)। समस्त अनश्वर पदार्थ उसपर आधारित हैं जैसे रथ की धुरी के छोर पर : जो यह समझता है, वह यहां इसकी व्याख्या करे।

७. दिव्यात्मा, गूढ़ प्रेरणा वाले, सुष्ठु पथप्रदर्शन वाले पंक्षी ने अन्तरिक्षों का निरीक्षण कर लिया है। अब सूर्य कहाँ है? किसने यह समझा है? किस द्युलोक तक उसकी किरण विस्तृत हो गई है?

८. उसने पृथ्वी के आठ शिखरों का, तीन बंजर भूमियों, योजनों एवं सात नदियों का निरीक्षण किया है। पूजक को इच्छित भेंटें देता हुआ, स्वर्णिम नेत्रों वाला सविता देवता आ गया है।

९. स्वर्णिम हाथों वाला, उद्योगी सविता, स्वर्ग तथा पृथ्वी दोनों के बीच में से जाता है। वह रोगों को दूर करता है, सूर्य का मार्ग-दर्शन करता है। अन्धकारमय नभोमण्डल में से वह द्युलोक को जाता है।

१०. स्वर्णिम हाथों वाला, दिव्यात्मा, सुनेता, सबसे अधिक दयालु, सम्यक् सहायक, दिव्यात्मा इधर आए। असुरों तथा मायावियों का पीछा करते हुए, प्रशंसित देवता प्रदोष काल में उदय हुआ है।

११. हे सविता, तुम्हारे प्राचीन मार्ग, जो धूलि-रहित, सुनिर्मित तथा अन्तरिक्ष में बने हैं, लांघने में सरल उन मार्गों से (जाते हुए) हे देव, तुम हमारी रक्षा करो तथा हमारे पक्ष में बोलो।

---

## ३, १-८५, मरुत्

मरुत् देवताओं का एक गण है जिसका अपना महत्त्व है। ३३ सूक्तों में उनका स्तवन है एवं दस अन्य सूक्तों में अग्नि, पूषन् और इन्द्र आदि देवताओं के साथ उनका आह्वान किया गया है। भिन्न स्थानों में उनकी संख्या भी भिन्न-भिन्न है। यह संख्या कहीं त्रिगुणित सप्त, त्रिगुणित षष्टि अथवा सप्तगुणित सप्त कही गई है। परकालीन साहित्य

में इनकी संख्या ४९ है। रुद्र तथा पृश्नि इनके माता-पिता हैं, अतः इन्हें रुद्रासः, रुद्रियासः, रुद्रसूनवः और गोमातरः अथवा पृश्निमातरः कहा गया है। इन्हें द्यौ और वायु के पुत्र भी कहा गया है। कभी-कभी ये स्वयम्भू भी कहलाये हैं। वे समान आयु के है और किसी सुन्दर यमल की भांति प्रतीत होते है। उनका जन्मस्थान और आवास भी समान ही है। रोदसी देवी उनसे सम्बन्धित कही जाती है, विद्युत् के साथ इनका विशेष सम्बन्ध है। वे ज्योतिर्मान् हैं और स्वय प्रकाशित होते है। हाथों में विद्युत् होने के कारण उन्हें ऋष्टिविद्युत् कहा गया है। कभी वे शर तथा शरासन भी धारण करते हैं। यह प्रवृत्ति उन्होंने अपने पिता रुद्र से दान रूप में प्राप्त की है। वे सिर पर स्वर्ण उष्णीष धारण करते हैं। इनके सारे आभरण स्वर्णमय है।

वात, इन्द्र, पर्जन्य, रुद्र की भान्ति ये मध्यस्थानीय देवता हैं। बिजली का कड़कना और वायु का शब्द इनका स्वर है। ये वनों, पहाड़ो और पृथ्वी को हिला देते हैं। (य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम्, १, १९, ७)। सब इनसे भयभीत रहते हैं। (भयन्ते विश्वा भुवना मरुद्भ्यः, १. ८५,८)। पानी बरसाना इनका मुख्य काम है। ये सूर्य को बादलो से आवृत कर लेते हैं, मानों उसके नेत्र ढक देते हैं।

इन्द्र के सभी युद्ध-सम्बन्धी कार्यों में ये इसके मुख्य सहायक हैं। कभी कभी ये स्वय भी बड़े साहसिक कार्य करते हैं, तद्यथा वृत्र की सन्धि को अनावृत करना और गौओं को निकालना। वे द्युस्थानीय गायक भी हैं। (य उग्रा अर्कमानृचुरनाधृष्टास ओजसा, १. १९.४)। इन्द्र-वृत्रयुद्ध के समय इन्होंने एक गीत गाया था तथा सोम का अभिषवण किया था। उनका गीत स्तुतिरूप में स्मरण किया जाता है; अतः उन्हें पुरोहित कहा जाता है, विशेषत. जब ये इन्द्र के साथ होते हैं। इन्द्र से परे होने पर यह रुद्र की भान्ति क्रूर हो उठते हैं। तब रक्षा के निमित्त इनकी प्रार्थना की जाती है ताकि क्रोधवश ये कहीं गौओ तथा मनुष्यों को बाणों से मार न दें। ये जल के रूप में लाभकारी औषध भी प्रदान करते हैं। इनकी स्तुति धन तथा वीरो के लिए भी की जाती है। (रयिं नो धत्त वृषणः सुवीरम् १, ८५, १२)।

मरुत् शब्द की व्युत्पत्ति 'मृङ्' धातु से निष्पन्न होती है, अतः मरुतः कान्तिमान् हैं।

## अनुवाद

१ रुद्र के अद्भुत, दौड़ने वाले पुत्र अपने मार्ग में अपने को नारियों की भांति अलकृत करते हैं; मरुतों ने ही वस्तुतः दोनों विश्वों को

को वृद्धि प्रदान की है। वे साहसी वीर पूजा-आराधना में आनन्द प्राप्त करते हैं।

२. उन्होंने शक्ति मे वृद्धि करके महिमा को पाया है, रुद्रों ने द्युलोक में अपना आवास बना लिया है। अपने गीत गाते हुए तथा इन्द्र की शक्ति को उत्पन्न करके पृश्निपुत्रों ने गौरव को प्राप्त किया है।

३. जब वे गोपुत्र अपने शरीर को आभूषणों से अलंकृत करते हैं, तब देदीप्यमान वे अपने शरीर पर उज्ज्वल शस्त्र धारण करते हैं। वे प्रत्येक शत्रु को दूर हटाते हैं। मेदस्विता (घृत) उनके मार्गों में बहती है।

४. वे जो महान योधाओं की भाँति अपने भालों सहित कान्तिमान हैं, जो पहले कभी प्रचलित नहीं हुआ उसे भी अपनी शक्ति से प्रचलायमान करते हुए, विचारों की भाँति गतिमान हे मरुतो, जब तुम अपने शक्तिशाली कबीले के साथ चितकबरी घोड़ियों को अपने रथों मे जोत लेते हो।

५. सङ्घर्ष में पाषाण को वेगवान करते हुए, हे मरुतो, जब तुम रथों में चितकबरी (घोड़ियाँ) जोतते हो; (तब) वे अरुणवर्ण (अश्वों) की धाराओं को छोड़ देते हैं तथा पृथ्वी को ऐसे भिगो देते हैं, जैसे वह कोई पशुचर्म हो।

६. तुम्हारे वेगवान दौड़ने वाले (अश्व) तुम्हें इधर लायें। वेग से उड़ने वाले तुम अपनी भुजाओं सहित आगे आओ। यज्ञ के तृणास्तरण पर बैठो, एक चौड़ा आसन तुम्हारे लिए बनाया गया है। हे मरुतो, मधुर रस का आनन्द लो।

७. अपनी महिमा से वे स्वशक्तिमान हुए। वे नभोमण्डल की ओर चढ़े हैं। उन्होने एक चौड़ा आसन (अपने लिए) बना लिया है। जब विष्णु ने मदान्ध वृषभ की सहायता की (तब) वे अपनी प्रिय, यज्ञ की घास पर पक्षियों की भाँति बैठ गए।

८. शूरों की भाँति, योद्धाओं की भाँति वेग से चलते हुए, यश चाहने वाले (मनुष्यों) की भाँति उन्होंने अपने-आप को युद्धों मे परिबद्ध कर लिया है। समस्त प्राणी मरुतों से डरते हैं। (ये) नर भयावह आकृति वाले राजाओं की भाँति हैं।

९. जब निपुण त्वष्टा ने सुनिर्मित, स्वर्णिम, सहस्र-धारवाले वज्र को मोड़ दिया, (तब) इन्द्र ने इसे वीरतापूर्ण कार्य करने के लिए ले लिया; इसने वृत्र का संहार किया तथा जल की बाढ़ को मुक्त कर दिया।

१०. उन्होंने (स्व) शक्ति से कुएँ को ऊपर उठा दिया, तथा अचल पर्वत को भी काट दिया। अपनी बाँसुरियाँ बजाते हुए उदार मरुतों ने सोमरस के मद में वैभवशाली कृत्य किये हैं।

११. उन्होंने कुएँ को इस दिशा में धकेल दिया। प्यासे गोतम के लिए उन्होंने स्रोत बहा दिया। दीप्तिमान उज्ज्वलता वाले वे सहायता सहित उसके पास जाते हैं। अपनी शक्तियों से वे विप्र की इच्छा की सन्तुष्टि करें।

१२. उत्साही व्यक्ति के लिए जो आश्रय-स्थल तुम्हारे पास हैं, उन्हें पूजक को त्रिगुणित करके दो। हे मरुतो, हम तक उनका विस्तार करो। हे शक्तिमान (वीरो), श्रेष्ठ वीरों से समन्वित वैभव हमें प्रदान करो।

---

## ४, १-११५ सूर्य

सूर्य देवता का लगभग दस सूक्तों में आह्वान किया गया है। सौर देवताओं में यह साकार देवता है क्योंकि यह सूर्यमण्डल और सूर्य देवता को द्योतित करता है। देवताओं का श्रेष्ठ दृष्टिगोचर (प्रत्यक्ष) रूप सूर्य देवता है। यह स्थावर और जंगम की आत्मा है (सूर्य आत्मा जगतस्तस्थुषश्च, १.११५.१)। वह मित्र, वरुण, अग्नि की आँख है (चक्षुर्मित्रस्य वरुणस्याग्नेः, १. ११५. १)। वह दूरदर्शी (उरुचक्षाः) सर्वदर्शी (सूराय विश्वचक्षसे १. ५०. २), सब जीवों को देखने वाला (पश्यञ्जन्मानि सूर्य: १. ५०. ७) तथा मानव मात्र के कुकर्मों और सुकर्मों का साक्षी है (ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् ६. ५१. २.)। वह मानव को कार्य करने के लिए उत्तेजित करता है। उसके रथ को एक घोड़ा (एतश) अथवा सात घोड़ियाँ (हरितः) (सप्त स्वसारः सुविताय सूर्यं वहन्ति हरितो रथे ७. ६६. १५) अथवा सात घोड़े खींचते हैं। पूषा उसका दूत है। वरुण उसका पथ प्रशस्त करता है।

सूर्य उषा का प्रेमी है और उसके पीछे एक प्रेमी की भाँति घूमता है (सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्, १. ११५, २)। उषा सूर्य की पत्नी भी कही गई है (वनिनीजन्ती सूर्यस्य योषा, ७. ७५ ५)। वह अदिति तथा द्यौ. का पुत्र है (आदित्य)। सूर्य समुद्र में छिपा था। जहाँ से देवताओं ने उसे उठाया और आकाशमण्डल में स्थिर किया। कई देवताओं ने उसे अकेले ही उत्पन्न किया।

कुछ सूक्तों में सूर्य का वर्णन एक पक्षी, एक चितकबरे वृषभ और उषा द्वारा लाये गये एक श्वेत और तेजस्वी अश्व के रूप में किया

गया है। निर्जीव रूप में सूर्य आकाशमण्डल का रत्न तथा मेघ है। वर्षा में मित्र और वरुण द्वारा छिपाया गया एक देदीप्यमान अस्त्र अथवा आकाश मण्डल में इन दोनों देवताओं द्वारा स्थिर किया हुआ एक देदीप्यमान रथ भी है। यह विश्व के लिए भासित होता है (दृशे विश्वाय)। अपने प्रकाश से अन्धकार को दूर करता है। वह दिवसों को नापता है (अहा मिमानो अक्तुभिः, १. ५०. ७) तथा आयु का विस्तार करता है।

कभी-कभी सूर्य को एक चक्र के रूप में वर्णित किया जाता है। उसे विश्वकर्मा का विशेषण भी दिया जाता है।

निरुक्त में सूर्य शब्द की व्युत्पत्ति √सृ अथवा √सु+ईर् (सूर्यः सर्तेर्वा, सुवतेर्वा, स्ववीर्यतेर्वा)। परन्तु यह √स्वर् प्रकाश से भी सम्भव है। यह अवेस्ता का hvare (सूर्य) से सम्बन्धित है जो Ahura Mazda का चक्षु है।

## अनुवाद

१. मित्र, वरुण और अग्नि का नेत्र, देवताओं का दीप्तिमान मुख आकाश पर उदित हो आया है। जड़ तथा जंगम की आत्मा सूर्य ने द्युलोक, पृथिवी तथा अन्तरिक्ष को (प्रकाश से) भर दिया है।

२. अपनी स्त्री का (अनुगमन करने वाले) प्रेमी की भाँति सूर्य उषा का वहाँ अनुगमन करता है, जहाँ देवों की कामना करने वाले कल्याण के लिए पत्नियों सहित कर्मपरम्परा का विस्तार करते हैं।

३. हमारे लिये आशीर्वाद लाते हुए, सूर्य के पीले, उज्ज्वल, शीघ्रगामी, प्रशंसा योग्य अश्व आकाश के पृष्ठ पर झुकते हुए चढ़ते हैं। एक क्षण में ही वह स्वर्ग तथा पृथिवी को पार कर लेते हैं।

४. यह सूर्य का देवत्व, यह सूर्य की महिमा है। अभी जब अन्धकार का जाल फैल रहा था, उसने उसे दूर कर दिया। क्योंकि उसने मन्दुरा में अपने अश्वों को जोता, उस समय रात्रि अपना परिधान सब ओर फैला रही थी।

५. मित्र तथा वरुण के लिए ज्योति बनने के लिए तब सूर्य ने अपने गौरव को आकाश के वक्षःस्थल में स्थापित किया। उसके अश्व एक अनन्त क्रम में अब स्पष्ट प्रभात तथा अब अन्धकार को लाते हैं।

६. हे देवताओ, आज सूर्य के उदय होने पर हमें कठिनाइयों से मुक्त करो, पाप से हमें मुक्त करो। हमारी यह अभिलाषा मित्र, वरुण, अदिति, सिन्धु, पृथ्वी तथा स्वर्ग पूर्ण करें।

---

# ५, १–११६ अश्विनौ

ऋग्वेद के महत्त्वपूर्ण देवताओं में इन्द्र, अग्नि और सोम के बाद 'अश्विनौ' देवताओं का स्थान है। ५० सूक्त व्यतिरिक्त रूप से इनको सम्बोधित किये गये है और कई एक अन्य सूक्तों में अन्य देवताओं के साथ इसका आह्वान किया गया है। अश्विनौ क्या हैं इस प्रश्न का उत्तर देने के लिए अनन्त सामग्री उपलब्ध है। उन्हें कभी द्यावापृथिवी समझा जाता है तो कभी दिन और रात, कहीं वे दो दयाशील राजाओं के रूप में हैं तो कहीं ऊषा और सन्ध्या; और कभी वे Gemini नक्षत्र के रूप में वर्णित हैं।

ये दिवो नपातः (द्युलोक के पुत्र) हैं; किन्तु कहीं उन्हें 'विवस्वान्' (सूर्य) और त्वष्टा की पुत्री शरण्यू (सम्भवतः उषा) से उत्पन्न बताया गया है। पूषा इनका पुत्र और उषा इनकी बहन है।

ये देवयुगल प्रकाश के देवता हैं। ये कमलरूप हैं और एक दूसरे से अलग नहीं हो सकते। अश्व को रखने के कारण इन्हें अश्विनौ कहा जाता है। ये सूर्या के मित्र हैं और यह मैत्री सूर्यपुत्री के साथ इनका विवाह हो जाने से और भी दृढ़ हो जाती है। सूर्यपुत्री और चन्द्रमा के विवाह के समय ये वर की ओर से बताये गये हैं। यह सब कुछ यही सिद्ध करता है कि इनका सब देवताओं से अधिक सम्बन्ध 'सूर्य' से है। इसी कारण ये सदा सूर्य के साथ विचरण करते हैं।

मधु इनका प्रिय पेय है। माध्वी और मधुयुवा इनके विशेषण हैं। उनका चर्म पात्र मधु से भरता रहता है। एक बार इन्होंने सौ घड़े मधु के उँड़ेल दिए। ये भ्रमरों को मधु देते हैं और भ्रमरों के साथ इनकी तुलना की जाती है। मधु इनका प्रिय पेय होने पर भी इन्हे सोम में भी रुचि है। सोम का ये सूर्या और उषा के साथ पान करते हैं। जिस मधु का इनके प्रसंग में सदा उल्लेख मिलता है, वह सम्भवतः उषः-कालीन ओसकण हैं। इनका रथ भी मधु का वहन करता है। यह सूर्य की भाँति सुनहला है। इनका यह रथ ऋभुओं द्वारा बनाया गया था। इसे भिन्न-भिन्न प्रकार के पशु खींचते हैं, कभी भैंस, कभी गधे और कभी पक्षी इत्यादि की जोड़ी। यह रथ पृथ्वी और आकाश के चारों ओर एक दिन में ही परिक्रमा कर लेता है।

अश्विनौ मनुष्यों के मित्र हैं और कई बार इन्हें नराः कहा गया है। ये मनुष्यों के बहुत बड़े सहायक हैं। अतः इनके भक्त पुकारते हैं— उपायातं दाशुषे मर्त्याय रथेन वाममश्विना वहन्ता। युयुतमस्मदनिरामभीवां दिवानक्तं माध्वी

आसीथां नः (७. ७१. २)। वे उदार और दानी है, अतः सुदानू और मघवाना इनके विशेषण हैं। इन्हें नासत्या (कभी असत्य सिद्ध न होने वाले अर्थात् सदा सत्यस्वरूप) और दस्त्रा (आश्चर्यमय) कहा गया है। ये बहुत बलशाली हैं। उनका कोई विरोध नहीं कर सकता इसी कारण यह तुविष्मा और अध्रिगू कहलाते है। ये सर्वत्र रहते हैं, मध्यस्थान और समुद्र पर भी निवास करते हैं। युवा होते हुए भी ये पुरातन है। वे अत्यन्त सुन्दर एवं कान्तिमान् है। वे कमलों को माला पहनते हैं और हिरण्य-वर्तनि विशेषण से ज्ञात होता है कि इनके मार्ग स्वर्णमय थे। वे मेघावी हैं।

उषा और सूर्योदय के बीच, अग्नि और उषा के बाद तथा सूर्य के पूर्ण प्रचण्ड रूप प्राप्त करने के पहले इनका उदय होता है। ये अंधकार और अशुभ आत्माओं को दूर करते है।

मनुष्य का मनुष्य के प्रति द्वेष न हो, जीवन के संघर्ष से उत्पन्न होने वाली त्रुटियाँ भी ठीक हो जायँ तथा रोग और व्याधियों का निवारण हो, इसी उद्देश्य से मनुष्य इनकी पूजा करते हैं। अश्विनौ वैद्य है और सारी व्याधियों को शान्त करते हैं। कष्ट के समय वे बड़ी सहायता करते हैं। मनुष्य इनकी सहायता इस कारण नहीं प्राप्त करना चाहते हैं कि उनको किसी युद्ध में विजय पाने की इच्छा है अपितु इसलिए कि उनका जीवन शान्तिमय हो और स्वस्थता से बीते। जीवन पारस्परिक द्वेष से रहित हो। सुखमय दीर्घायु को प्राप्त करने के लिए, वरवधू के निर्बाध गृहप्रवेश और उसके कल्याण के लिए अश्विनों से प्रार्थना की जाती है।

कई कथाओं में इनकी दानशीलता का वर्णन मिलता है। भुज्यु को उन्होंने सागर में से बचाया। (अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे। यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् १,११६,५)। इसी प्रकार कष्ट में पड़े हुए अन्य लोगों की भी सहायता की।

ग्रीक पुराणों के दो अश्वारोहियों, हेलेना के दो भाइयों और जिअस (Zeus) के यमलपुत्र डिस्टकर्स से उनका बड़ा साम्य प्रतीत होता है। इसके अतिरिक्त दो लैटिक देवताओ से भी इनकी समता द्योतित होती है।

अश्विनों की उपाधि दिवो नपाता का लैटिक Dewal Deli और लिथुआनिया के Devo Suneli से इनका साम्य प्रतीत होता है। इनकी पत्नी के नाम सूर्या का साम्य लैटिक देवता की पत्नी- Suales से मिलता

है। वोग़ाज़ कोई के कीलकाक्षर। लेखों में उल्लेख होने से यह भारोपीय काल के देवता हैं।

## अनुवाद

१. मैं नासत्यों (अश्विनों) के लिए वर्हि की भाँति अपने स्तोत्र सजाता हूँ; जैसे पवन वर्षा के मेघों को प्रेरित करता है वैसे मैं इन स्तुतियों को उन्हें भेजता हूँ, जो एक वाण की भाँति शीघ्रगामी रथ में विमद के लिए पत्नी को ले आये।

२ सुदृढ़ पंखों वाले, तेज उड़ने वाले अश्वों से वहन किये हुये और देवताओं की प्रेरणाओं में विश्वास करने वाले हे नासत्यो, तब तुम्हारे गर्दभ ने यम की प्रतियोगिता मे पुरस्काररूप एक सहस्र प्राप्त किये थे।

३. हे अश्विनो, जैसे एक मरणासन्न व्यक्ति अपनी सम्पत्ति छोड़ता है, वैसे भुज्यु को तुग्र ने जल की एक अनन्त धारा में छोड़ दिया था। तुम उसे अपनी चेतन, अन्तरिक्ष में चलने वाली—जलाभेद्य नावों में ले आये।

४. हे नासत्यो, तुमने भुज्यु को तीन दिन, तीन रात शीघ्र चलने वाले पक्षियों पर वहन किया। सौ पदों तथा छः घोड़ों वाले तीन रथों में आर्द्र प्रदेश के पार, सागर के तट पर (पहुँचा दिया।)

५. तुमने आधार, अवलम्ब और ग्रहण–योग्य वस्तु से रहित समुद्र मे वीरतापूर्ण कार्य सम्पन्न किया, जब कि हे अश्विनों, तुम भुज्यु को सौ पतवारों से युक्त (अपने) पोत पर चढ़ा कर उसके घर ले गये।

६. हे अश्विनों, शश्वत् सम्पत्तिरूप श्वेत अश्व का जो उपहार तुमने बहुत पहले अघाश्व को दिया था, तुम्हारा वह गौरवशाली उपहार अब भी प्रशंसनीय है। पेदु का अश्व अब भी प्रसिद्धि का पात्र है।

७. हे वीरो, तुमने अपने प्रशंसक पज्रिय कक्षीवान की इच्छाओं को पूर्णता प्रदान की। तुमने अपने शक्तिशाली अश्व के खुर में से सुरा के सौ पात्र इस प्रकार बहा दिये जैसे वह एक छलनी हो।

८. तुमने प्रज्वलित अग्नि को हिम से बुझा दिया, पुष्टि में समृद्ध भोजन दिया। हे अश्विनो, पृथ्वी के नीचे जलती भट्टी में सिर के बल फेंके हुए अत्रि तथा उसके समस्त अनुयायियों की तुमने रक्षा की।

९. हे नासत्यो, तुमने कूप को उलटा कर दिया, और इसका तला ऊपर तथा मुख नीचे कर दिया। जल के स्रोत तृषातुर गोतमगण के लिए वर्षा की भान्ति बहे और उसे सहस्र संख्यक प्राचुर्य प्राप्त हुआ।

१०. हे नासत्यो, तुमने उस वृद्ध च्यवान की पूरी त्वचा को एक परिधान की भान्ति खीच लिया। हे दस्रो, तुमने उस परित्यक्त व्यक्ति के जीवन को लम्बा कर दिया और उसे कन्याओं का पति बना दिया।

११. हे वीरो, हे नासत्यो, तुम्हारी वह सहायता प्रशंसा के योग्य, जीतने योग्य तथा सहानुभूति पूर्ण थी। जब तुम्हें ज्ञात हुआ तो तुमने गढे हुए धन की भाँति वन्दन को गढ़े से निकाल दिया।

१२. हे वीरो, मैं लाभ के हेतु तुम्हारे उन गौरवशाली अद्भुत कार्यों का (ऐसे) प्रकाशन करता हूँ, जैसे गर्जन वर्षा की सूचना देता है। अथर्वन् के पुत्र दध्यञ्च ने तुम्हें अश्व के सिर से मधुविद्या का उपदेश दिया।

१३. हे नासत्यो, महान् यज्ञ में बुद्धिमती (पुरंधि) स्त्री ने अनेक कोषों के स्वामी का सहायता के लिए आह्वान किया। तुमने वध्रिमती के आह्वान को आदेश की भाँति सुना। तथा हे अश्विनो, उसे हिरण्यहस्त पुत्र प्रदान किया।

१४. हे नासत्यो, हे वीरो, भेड़िये के मुख में से, तुमने बटेरे को छुड़ाया। हे अनेकों कोषों के अधिपति, तुमने अपने कष्ट पर परिताप करने वाले कवि को परिपूर्ण दृष्टि दी।

१५. जब रात के समय खेल के युद्ध में विश्पला की टाँग वन्य पक्षी के पंख की तरह कट गई, तब तुमने विश्पला को झट से लोहे की टाँग देदी ताकि जब तक सङ्घर्ष रहे, वह चल सके।

१६. मादा भेडिये के लिए एक सौ मेषों को मारने वाले ऋज्राश्व को उसके पिता ने अन्धा बना दिया। हे अद्भुत कार्य करने वाले, अप्रतिम चिकित्सक नासत्यो, तुमने उसे आँखें प्रदान की, जिससे वह अप्रतिहत दृष्टि से देखने लगा।

१७. सूर्यपुत्री तुम्हारे रथ पर लक्ष्य पर पहुँचने वाले अश्वों की भाँति सर्वप्रथम चढ़ी। (इसका) समस्त देवताओं ने हृदय से समर्थन किया और हे नासत्यो, तुम वास्तव में श्री से संयुक्त हो।

१८. हे अश्विनों, जब तुम दिवोदास भारद्वाज के घर की ओर तेज़ी से दौडते हुए आये, तुम्हें वहन करने वाला रथ उज्ज्वल वैभव लाया, वृषभ तथ शिशुमार इसमें जुते हुए थे।

१९. हे नासत्यो, तुम वैभव के साथ सुक्षेत्र, तथा दीर्घायु के साथ सुवीर्य, सुसन्तति लाए। एक ही विचार वाले तुम दोनों शक्तिसहित

उस जह्नावी के पास आये जो दिन में तीन बार तुम्हें तुम्हारा भाग अर्पित करती थी।

२०. चारों ओर से घिरे हुए जाहुष के पुत्र को तुम रात्रि के समय सुगम मार्ग से ले गए। हे अजरो, हे नासत्यो, रास्ते में आने वाली प्रत्येक वस्तु को दूर फेंकने वाले अपने रथ पर तुम पर्वतों को पार कर गए।

२१. एक प्रातः तुमने वश को युद्ध के लिए सशक्त किया, जिससे वह सहस्रों में गणना किए जाने वाले लूट के माल को प्राप्त कर सके।

हे शक्तिशालियो, इन्द्र के साथ मिल कर तुमने दुर्भाग्य को, पृथुश्रवा के शत्रुओं को दूर किया।

२२. ऋचत्क के पुत्र शर के पीने के लिये तुमने नीचे के स्रोत से जल को ऊपर उठाया। हे नासत्यो, थके हुए शयु की सहायता के लिए तुमने बाँझ गाय को दुग्ध से परिपूर्ण कर दिया।

२३. हे नासत्यो, सहायता के इच्छुक तथा तुम्हारे स्तोता, कृष्ण के पुत्र विश्वक को तुमने अपनी शक्तियो द्वारा नष्ट पशु की भांति उसका पुत्र विष्णापु प्रदान किया, ताकि वह उसे फिर से देख सके।

२४. तुमने स्रुवा में पड़े सोम रस की भाँति रेभ को जल में से निकाल लिया जो नौ रात्रि तथा नौ दिवस जल में इधर-उधर बहता रहा था—जकड़ा हुआ तथा बंधा हुआ, घायल, जल में असह्य कष्ट झेलता हुआ।

२५. हे अश्विनो, मैंने तुम्हारे आश्चर्य-जनक कार्यों का वर्णन किया है, मैं इसका स्वामी हो जाऊँ, तथा अच्छे पशुओं और वीर पुत्रों वाला हो जाऊँ। दीर्घायु का उपभोग करता हुआ, दृष्टियुक्त मैं घर की तरह वृद्धावस्था में प्रवेश करूँ।

---

## ६ १–१२४, उषा

उषा प्रभात की देवी है। ऋग्वेद के लगभग बीस सूक्तों में इसकी स्तुति की गयी है। इसके अतिरिक्त कोई तीन सौ बार से भी अधिक उसका उल्लेख ऋग्वेद में मिलता है। उषा-सूक्तों में काव्य-कल्पना अपनी चरमसीमा तक पहुँची है। यज्ञ-सम्बन्धी महत्ता के अतिरिक्त सामान्य मानवीय भावनाएँ अत्यन्त प्रभावशाली है। उषा का व्यक्तीकरण अधिक नहीं हो पाया और अधिकतः उसका भौतिक रूप ही दृष्टिगोचर

होता है। यह देवी आर्यों के प्रकृतिप्रेम का प्रतीक है और उनकी कलात्मक अनुभूतियों की अभिव्यक्ति है।

सौन्दर्य के आदर्शरूप में उषा की अनुपमता सिद्ध है, वह सौन्दर्य के प्रत्येक पक्ष का साकार प्रतीक है, चाहे वह सौन्दर्य भौतिक हो या चारित्रिक या काव्यगत। उसे युवति, भास्वती, अमृता, अर्जुनी, अरुषा, सप्रतीका, आदि विशेषणों से विभूषित किया गया है। ये इसके सौन्दर्य के प्रतीक हैं। भद्रा, सूनरी, सूनृतावती, ऋतावरी, ऋतपा, आदि विशेषण उसके चारित्रिक सौन्दर्य के द्योतक है।

वह दिवो दुहिता है और इन्द्र द्वारा संसृष्ट की गई है। सूर्य उसका प्रेमी है (सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्, १, ११५, २)। कहीं-कहीं सूर्य को उसका पुत्र कहा गया है, क्योंकि देवताओं के देदीप्यमान तेज, सूर्य को वह अपनी गोद में लेती है। सूर्य की यात्रा के लिए मार्गों का अनावरण करना, उसके श्वेतवर्ण अश्वों का नेतृत्व करना, आदि तत्सम्बन्धी अन्य कार्य हैं। वह रात्रि की बड़ी बहिन है। रात्रि के साथ सम्बन्ध होने के कारण वरुण के साथ भी उसका सम्बन्ध हो जाता है। अश्विनीकुमार उसके प्रिय मित्र हैं। उषा इन्हें जगाती है और वे इसके साथ चलते हैं। अग्नि भी इसका प्रणयी है। उषा के आगमन पर अग्नि को प्रज्वलित किया जाता है, अतः उसे उषा से प्रज्वलित भी कहा जाता है।

उषा का रथ उज्ज्वल है, जिसे भूरे घोड़े खींचते हैं। सम्भवतः यही घोड़े बाद में लाल किरणों का रूप ले लेते है। पुरातन होते हुए भी उषा युवति है, (युवतिः पुराणी)। इसका बार-बार जन्म होता रहता है। जब वह जागती है, क्षितिज आलोकित हो जाता है, स्वर्ग के द्वार खुल जाते हैं और अन्धकार पलायित हो जाता है। इस प्रकार उषा अन्धकाराच्छन्न वैभव का अनावरण करती है और उदारता के साथ उसे बांटती है। वह सबको जीवन देती है, पर साथ ही वह सभी मर्त्यों के जीवन को न्यून भी करती जाती है। प्रतिदिन निश्चित स्थान पर आकर वह देवताओं के आदेशों का सम्यक् पालन करती है।

व्युत्पत्ति की दृष्टि से उषा शब्द वस् कान्तौ से निष्पन्न होता है।

## अनुवाद

१. अग्नि की प्रज्वलन वेला में देदीप्यमान उषा तथा उदीयमान सूर्य दूर-दूर तक अपनी ज्योति फैलाते हैं। सविता देवता ने हमें, प्रत्येक

